निवेशयामास गृहं शिवाख्यमशिवं तदा ॥ ११

ततस्ते पुरुषव्याघ्रा ददृशुस्सपरिच्छदाः ।
पुरोचनस्य वचनात् कैलासमिव गुह्यकाः ॥ १२

तत्त्वगारमभिप्रेक्ष्य सर्वकर्मोपशोभितम् ।
उवाचाग्नेयमित्येवं भीमसेनं युधिष्ठिरः ॥ १३

जिघ्रन् सम्यग्वसागन्धं सर्पिर्जतुविमिश्रितम् ।
युधिष्ठिरः—
कृतं हि व्यक्तमाग्नेयम् इदं वेश्म परन्तप ॥ १४

मृदेषा व्यक्तमाग्नेयैर् द्रव्यैर्मिश्रस्य वेश्मनः ।
शणसर्जरसोपेता ह्यालिप्ता गृहभित्तिषु ॥ १५

मुञ्जबल्वजवंशादि नूनं सर्वं घृतोक्षितम् ।
शणबल्वजकार्पासवंशदारुकटान्यपि ॥ १६

आग्नेयान्यत्र क्षिप्तानि परितो वेश्मनस्तथा ।
शिल्पिभिस्सुभृतैराप्तैर् विनीतैर्वेश्म निर्मितम् ॥ १७

विश्वस्तानिह नः पापो दग्धुकामः पुरोचनः ।
इमां तु वै महाबुद्धिर् विदुरो दृष्टवान् किल ॥ १८

[1]इमामेवापदं पार्थ तदाऽहं प्रतिबोधितः ।

---

1. क-ग—आपदं तेन मां पार्थ सर्वां बोधितवांस्तदा
अ—अतस्तेन तदा पार्थ सर्वान् बोधितवांस्तदा ।

[1]ते वयं बोधितास्तेन बुद्धिमन्तोऽशिवं गृहम् ॥ १९
अनार्यैस्सुकृतं गूढैर् दुर्योधनवशानुगैः ॥ १९॥

भीमसेनः—

यदिदं गृहमाग्नेयं विहितं मन्यते भवान् ।
तत्रैव साधु गच्छामो यत्र पूर्वोषिता वयम् ॥ २०॥
[2]इह यत्तैर्निराकारैर् वस्तव्यमिति रोचते ।

---

1. घ—अस्माकं भागधेयेन विदुरेण महात्मना। [अधिकः पाठः]
2. क-ख-घ—दर्शयित्वा पृथग्गन्तुं न कार्यं प्रतिभाति मे।
अशुभं वा शुभं वापि तैर्वसाम सहैव तु ॥
अद्यप्रभृति चास्मासु गतेषु भयविह्वलः।
रूढमूलो भवेद्राज्ये धार्तराष्ट्रो जनेश्वरः ॥
तदीयं च भवेद्राज्यं तदीयास्स्युः प्रजा इमाः।
तस्मात्सहैव वत्स्यामो गलन्यस्तपदा वयम् ॥
अस्माकं कालमासाद्य राज्यमाच्छिद्य शत्रुतः।
अर्धं पैतृकमस्माकं सुखं भोक्ष्याम शाश्वतम् ॥
धार्तराष्ट्रवचोऽस्माभिः किमर्थमनुमन्यते ॥
[अधिकः पाठः]
ग-घ—तेभ्यो भीत्याऽन्यतो गन्तुं दौर्बल्यं ते कुतो नृप ॥
[अधिकः पाठः]
क-ग—आपत्सु रक्षिताऽस्माकं विदुरोऽस्ति महामतिः।
मध्यस्थ एव गाङ्गेयो राज्यभोगपराङ्मुखः ॥
बाह्लिकप्रमुखा वृद्धा मध्यस्था एव सर्वदा ।
अस्मदीयो भवेद्द्रोणः फल्गुनप्रेमसंयुतः ॥
तस्मात्सहैव वस्तव्यं न गन्तव्यं पृथङ् नृप।
अथवाऽस्मासु ते कुर्युः किमशक्ताः पराक्रमम् ॥
क्षुद्राः कपटिनो धूर्ता जाल्मो मनुजेश्वर।

तुष्टैरिव विचिन्वद्भिर् गतिमन्यां ब्रवीमि वः ॥ २१॥
आकारं यदि जानीयाद् अस्माकं हि पुरोचनः ।
क्षिप्रकारी ततो भूत्वा प्रसह्यापि दहेत्ततः ॥ २२॥

---

पूर्वतोऽनुवृत्तम्—

किं न कुर्युः पुरा मह्यं किं न दत्तं पुरा विषम् ॥
आशीविषैर्महाघोरैः सर्पैस्तैः किं न दंशितः ।
प्रमाणकोट्यां संनह्य निद्रापरवशे मयि ॥
सर्पैर्दष्टिविषैर्घोरैर् गङ्गायां शूलसन्ततौ ।
किं तैर्न पातितो भूप तदा किं मृतवानहम् ॥
आपत्सु तासु घोरासु दुष्प्रयुक्तासु पापिभिः ।
अस्मानरक्षद्यो देवो जगद्यस्य वशे स्थितम् ॥
चराचरात्मकस्सोऽद्य यातः क्व नु नृपोत्तम ।
यावत्सोढव्यमस्माभिस् तावत्सोढास्म यत्नतः ॥
यदा न रक्ष्यतेऽस्माभिस् तदा पश्याम नो हितम् ।
किं द्रष्टव्यं तदास्माभिर् विगृह्य तरसा बलात् ॥
सान्त्ववादेन दानेन भेदेनापि यतामहे ।
अर्धराज्यस्य संप्राप्त्यै ततो दण्डः प्रशस्यते ॥
तस्मात् सहैव वस्तव्यं तन्मनोर्पितशल्यवत् ।
दर्शयित्वा पृथक् क्वापि न गन्तव्यं सुभीतवत् ॥

च—युधिष्ठिरः—

इह यस्तैर्निराकारः कृतोऽस्मासु वृकोदर ॥
इति किन्न्वयमेतावान् किमतः परमापतेत् ॥
विचारयन्तो जाग्रन्तः प्राणिभिर्हितकाङ्क्षिभिः ।
इहैव वस्तव्यमिति मन्मनो रोचतेऽनुज ॥
हृष्टैरिह विचिन्वद्भिर् गतिमन्यां सुखप्रदाम् ।
इतः परं ते किं कुर्युः जिज्ञासुर्भीरुभीरुवत् ॥

[अधिकः पाठः]

नायं बिभेत्युपक्रोशाद् अधर्माच्च पुरोचनः ।
तथा च वर्तते मन्दः सुयोधनमते स्थितः ॥ २३॥

अपि चास्मासु दग्धेषु भीष्मः कुरुपितामहः ।
न कुप्येत किमर्थं वा कौरवान् कोपयेन्न सः ॥ २४॥

तथा हि सह दग्धेषु विदुरस्स पितामहः ।
धर्मो नेहेति कुप्येत तथाऽन्ये कुरुपुङ्गवाः ॥ २५॥

उपपन्नं तु दग्धेषु कुलवंशोऽनुकीर्तितः ।
कुप्येरन् यदि धर्मज्ञास् तथा ये कुरुपुङ्गवाः ॥ २६॥

वयं तु यदि दाहाद्वै बिभ्यतः प्रद्रवेमहि ।
स्पशैर्नो घातयेत् सर्वान् राज्यलुब्धस्सुयोधनः ॥ २७॥

अपदस्थान् पदे तिष्ठन् अपक्षान् पक्षसंस्थितः ।
हीनकोशान् महाकोशः प्रयोगैर्घातयेद्ध्रुवम् ॥ २८॥

तदस्माभिरिमं पापं तं च पापं सुयोधनम् ।
वञ्चयद्भिर्निवस्तव्यं छन्नं वीर क्वचित्क्वचित् ॥ २९॥

ते वयं मृगयाशीलाश् चराम वसुधामिमाम् ।
तथा नो विदिता मार्गा भविष्यन्ति पलायतां ॥ ३०॥

भौमं च बिलमद्यैव कारयामस्सुसंवृतम् ।
गूढोच्छ्वासं ततस्तत्र हुताशस्संप्रधक्ष्यति ॥ ३१॥

द्रवतोऽत्र यथा चास्मान् न बुध्येत पुरोचनः ।
पौरो वाऽपि जनः कश्चित् तथा कार्यमतन्द्रितैः ॥ ३२॥

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्याम्
आदिपर्वणि एकचत्वारिंशदधिकशततमोऽध्यायः ॥ १४१ ॥
॥ ८ ॥ जतुगृहदाहपर्वणि चतुर्थोऽध्यायः ॥ ४ ॥
[अस्मिन्नध्याये ३२॥ श्लोकाः ]

## ॥ द्विचत्वारिंशदधिकशततमोऽध्यायः ॥

खनकेन सुरङ्गाकरणम् ॥ १ ॥

वैशम्पायनः—

विदुरस्य सुहृत् कश्चित् खनकः कुशलः क्वचित् ।
विविक्ते पाण्डवान् राजन् इदं वचनमब्रवीत् ॥ १

प्रहितो विदुरेणास्मि खनकः कुशलो भृशम् ।
पाण्डवानां प्रियं कार्यम् इति किं करवाणि वः ॥ २

प्रच्छन्नं विदुरेणोक्तं पाण्डव म्लेच्छभाषया ।
त्वया च तत्तथेत्युक्तम् एतदाश्वासकारणम् ॥ ३

[1]वैशम्पायनः—

उवाच तं सत्यधृतिः कुन्तीपुत्रो युधिष्ठिरः ॥ ३॥

1. क-ख-ग—प्रतिपादय विश्वासादिति किं करवाणि वः ।
कृष्णपक्षचतुर्दश्यां रात्र्यामाशु पुरोचनः ॥

युधिष्ठिरः—
अभिजानामि सौम्य त्वां सुहृदं विदुरस्य वै ।
प्रथमाप्तं प्रियं भक्तं सदा प्रियहितैषिणम् ॥ ४॥
न विद्यते कवेः किंचिद् अविज्ञातं प्रयोजनम् ।
यथा नस्स तथाऽसि त्वं निर्विशेषा वयं त्वयि ॥ ५॥
भवतश्च यथा तस्य पालयास्मान् यथा कविः ॥ ६
इदं शरणमाग्नेयं मदर्थमिति मे मतिः ।
पुरोचनेन विहितं धार्तराष्ट्रस्य शासनात् ॥ ७
स पापः कोशवांश्चैव ससहायश्च दुर्मतिः ।
अस्मानपि च दुष्टात्मा नित्यकालं प्रबाधते ॥ ८
स भवान् मोचयत्वस्मान् उत्पन्नाद्धि हुताशनात् ।
अस्मास्विह च दग्धेषु सकामस्स्यात्सुयोधनः ॥ ९
समृद्धमायुधागारम् इदं तस्य दुरात्मनः ।
वप्रान्तं निष्प्रतीकारम् आश्लिष्येह कृतं महत् ॥ १०
इदं तदशुभं नूनं तस्य कर्म चिकीर्षितम् ।
प्रागेव विदुरो वेद तेनास्मानन्वबोधयत् ॥ ११

---

पूर्वतोऽनुवृत्तम्—

भवनस्य निशि द्वारि प्रदास्यति हुताशनम् ।
माता सह प्रदग्धव्याः पाण्डवाः पुरुषर्षभाः ॥
इति व्यवसितं पार्थ धृतराष्ट्रस्य मे श्रुतम् ।
[अधिकः पाठः]

सेयमापदनुप्राप्ता क्षत्ता यां दृष्टवान् पुरा ।
पुरोचनस्याविदितं अस्मांस्त्वं विप्रमोचय ॥ १२

वैशम्पायनः—
स तथेति प्रतिश्रुत्य खनको यत्नमास्थितः ।
परिखामुत्किरन्नाम चकार सुमहाबिलम् ॥ १३
[1]समीपे वेश्मनस्तस्य चक्रे नातिमहन्मुखम् ।
कवाटयुक्तमज्ञातं समं भूम्याश्च भारत ॥ १४
पुरोचनभयाच्चैव व्यदधात् संवृतं मुखम् ॥ १४॥
स तस्मिन् हि गृहद्वारि वसत्यशुभधीस्सदा ।
ततस्ते सायुधास्सर्वे वसन्ति स्म क्षपां नृप ॥ १५॥
दिवा चरन्ति मृगयां पाण्डवेया वनाद्वनम् ।
विश्वस्तवदविश्वस्ता वञ्चयन्तः पुरोचनम् ॥ १६॥
अतुष्टास्तुष्टवद्राजन् ऊषुः परमदुःखिताः ॥ १७
न चैनानन्वबुध्यन्त नरा नगरवासिनः ।
अन्यत्र विदुरामात्यात् तस्मात् खनकसत्तमात् ॥ १८

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्याम्
आदिपर्वणि द्विचत्वारिंशदधिकशततमोऽध्यायः ॥ १४२ ॥
॥ ८ ॥ जतुगृहदाहपर्वणि पञ्चमोऽध्यायः ॥ ५ ॥
[अस्मिन्नध्याये १८ श्लोकाः ।]

---

1. क-ख-ग-घ—चक्रे च वेश्मनस्तस्य मध्ये

## ॥ त्रिचत्वारिंशदधिकशततमोऽध्यायः ॥

रात्रौ कुन्त्या अन्नादिना ब्राह्मणपूजनम् ॥ १ ॥ भीमेन जतुगृहस्या-दीपनम् ॥ २ ॥ तस्य कुन्तीं भ्रातॄंश्चादाय सुरङ्गाद्वारा बहिर्निर्गमनम् ॥ ३ ॥

वैशम्पायनः—

तांस्तु दृष्ट्वा सुमनसः परिसंवत्सरोषितान् ।
विश्वस्तानिति संप्रेक्ष्य हर्षं चक्रे पुरोचनः ॥ १

पुरोचने तथा हृष्टे कौन्तेयोऽथ युधिष्ठिरः ।
भीमसेनार्जुनौ तौ च यमौ प्रोवाच धर्मवित् ॥ २

युधिष्ठिरः—

अस्मानयं सुविश्वस्तान् वेत्ति पापः पुरोचनः ।
वञ्चकोऽयं नृशंसात्मा कालं मन्ये पलायने ॥ ३

जातुषागारमादीप्य दग्ध्वा चैव पुरोचनम् ।
षट् प्राणिनो निधायेह द्रवामोऽनुपलक्षिताः ॥ ४

वैशम्पायनः—

अथ दानापदेशेन कुन्ती ब्राह्मणभोजनम् ।
चक्रे निशि महाराज आजग्मुस्तत्र योषितः ॥ ५

ता विहृत्य यथाकामं भुक्त्वा पीत्वा च भारत ।
जग्मुर्निशि गृहानेव समनुज्ञाप्य माधवीम् ॥ ६

पुरोचनप्रणिहिता पृथां स्म खलु सेवते ।
निषादी दुष्टहृदया नित्यमन्तरचारिणी ॥ ७

निषादी पञ्चपुत्रा तु तस्मिन् भोज्ये यदृच्छया ।
पुराभ्यासकृतस्नेहा सखी कुन्त्यास्सुतैस्सह ॥ ८

आनीय मधुमूलानि फलानि विविधानि च ।
अन्नार्थिनी समभ्यागात् सपुत्रा कालचोदिता ॥ ९

[1]सपापा पञ्चपुत्रा च सा पृथायास्सखी मता ॥ ९॥

सा पीत्वा मदिरां तत्र सपुत्रा मदविह्वला ॥ १०

सा हि सर्वैस्सुतै राजंस् तस्मिन्नेव निवेशने ।
सुष्वाप विगतज्ञाना मृतकल्पा नराधिप ॥ ११

अथ प्रवाते तुमुले निशि सुप्ते जने विभो ।
तदुपादीपयद्भीमश् शेते यत्र पुरोचनः ॥ १२

पूर्वमेव बिलं शोध्य भीमसेनो महामतिः ।
पाण्डवैस्सहितः कुन्तीं प्रावेशयत तद्बिलम् ॥ १३

दत्त्वाऽग्निं सहसा भीमो निर्जगाम बिलेन सः ॥ १३॥

[2]ततः प्रवाते सुमहान् छब्दश्चैव विभावसोः ।
प्रादुरासीत्ततस्सर्वो बुबुधे स जनव्रजः ॥ १४॥

---

1. अ-क-ख-ग—कोशेषु इदमर्धं नास्ति ।
2. घ—गृहस्थं द्रव्यसंजातं निर्जगाम बिलेन सः ।　　[अधिकः पाठः]

पौराः—

दुर्योधनप्रयुक्तेन पापेनाकृतबुद्धिना ।
गृहमात्मविनाशाय कारितं दाहितं च तत् ॥ १५॥

अहो धिग्धृतराष्ट्रस्य बुद्धिर्नातिसमञ्जसी ।
यश्शुचीन् पाण्डवान् बालान् दाहयामास निर्घृणः ॥ १६॥

दिष्ट्या त्विदानीं पापात्मा दग्ध्वा दग्धः पुरोचनः ।
अनागसस्सुविश्वस्तान् यो ददाह नरोत्तमान् ॥ १७॥

वैशम्पायनः—

एवं ते विलपन्ति स्म वारणावतगा जनाः ।
परिवार्य गृहं सर्वे रात्रौ तस्थुस्समन्ततः ॥ १८॥

पाण्डवाश्चापि ते सर्वे सह मात्रा परन्तपाः ।
बिलेन तेन महता जग्मुर्वनमलक्षिताः ॥ १९॥

[1]ते तु निद्रोपरोधेन साध्वसेन च पाण्डवाः ।
न शेकुस्त्वरिता गन्तुं सह कुन्त्या नराधिप ॥ २०॥

भीमसेनस्तु राजेन्द्र भीमवेगपराक्रमः ।
जगाम सर्वानादाय भ्रातॄन् मातरमेव च ॥ २१॥

स्कन्धमारोप्य जननीं यमावङ्केन वीर्यवान् ।

1. ख—ते तु निद्रानिरोधेन सहसा न च पाण्डवाः

[1-2]पार्थौ गृहीत्वा पाणिभ्यां भ्रातरौ सुमहाबलौ ॥ २२॥

तरसा पादपान् भञ्जन् महीं पद्भ्यां विदारयन् ।
[3]स जगामाशु तेजस्वी वातरंहा वृकोदरः ॥ २३॥

इति श्रीमहाभारते शतसाहस्रिकायां संहितायां वैयासिक्याम्
आदिपर्वणि त्रिचत्वारिंशदधिकशततमोऽध्यायः ॥ १४३ ॥

॥ ८ ॥ जतुगृहदाहपर्वणि षष्ठोऽध्यायः ॥ ६ ॥

[अस्मिन्नध्याये २३॥ श्लोकाः]

---

## ॥ चतुश्चत्वारिंशदधिकशततमोऽध्यायः ॥

पौरैः पाण्डवानां दाहं निश्चित्य धृतराष्ट्राय दूतमुखेन पाण्डववृत्तान्तनिवेदनम् ॥ १ ॥ तच्छ्रवणेन ज्ञातिभिस्सह धृतराष्ट्रेण कुन्त्यादीनां उदकदानम् ॥ २ ॥ भीष्मविदुरयोस्संवादः ॥ ३ ॥

---

वैशम्पायनः—

अथ रात्र्यां व्यतीतायां सशोको नागरो जनः ।
तत्राजगाम त्वरितो दिदृक्षुः पाण्डुनन्दनान् ॥ १

निर्वापयन्तो ज्वलनं ते जना ददृशुस्तदा ।

---

1. क-च—गङ्गातीरवनं प्राप्य वहन् प्रायात् स मारुतिः ॥[अधिकः पाठः]
2. च—बिलेन योजनं दूरं गत्वा सिद्धवटे शुभे ।
निषेदुर्वटमूलेषु निद्रामुद्रितलोचनाः ।
बिलान्निर्गत्य तरसा भ्रातॄन् मातरमेव च ॥ [अधिकः पाठः]
3. च—अव्यक्तवनमार्गेस्सन् भञ्जन् गुल्मलतातरून् ॥ [अधिकः पाठः]

जातुषं तद्गृहं दग्धम् अमात्यं च पुरोचनम् ॥ २
नूनं दुर्योधनेनेदं विहितं पापकर्मणा ।
पाण्डवानां विनाशाय इत्येवं चुक्रुशुर्जनाः ॥ ३
विदितं धृतराष्ट्रस्य धार्तराष्ट्रो न संशयः ।
दग्धवान् पाण्डवान् बालान् न ह्येतत् प्रतिषिद्धवान् ॥ ४
नूनं शान्तनवो भीष्मो न धर्ममनुवर्तते ।
द्रोणश्च विदुरश्चैव कृपश्चान्ये च कौरवाः ॥ ५
[1]ते वयं धृतराष्ट्राय प्रेषयामो दुरात्मने ।
संवृत्तस्ते परः कामः पाण्डवान् दग्धवानसि ॥ ६
ततो व्यपोहमानास्ते पाण्डवार्थे हुताशनम् ।
निषादीं ददृशुर्दग्धां पञ्चपुत्रामनागसीम् ॥ ७
[2]खनकेन तु तेनैव वेश्म शोधयता बिलम् ।
पांसुभिः प्रत्यपिहितं पुरुषैस्तैर्न लक्षितम् ॥ ८
ततस्ते प्रेषयामासुर् धृतराष्ट्रस्य नागराः ।

---

1. घ—नावेक्षन्ते हतं धर्मं धर्मज्ञा अप्यहो विधे ।
श्रुतवन्तो हि विद्वांसो धनवद्वशगा अहो ॥
साधूननाथान् धर्मिष्ठान् सत्यव्रतपरायणान् ।
नावेक्षन्ते महान्तोऽपि दैवं तेषां परायणम् ॥ [अधिकः पाठः]

2. क ग-घ—इतः पश्यत कुन्तीयं दग्धा शेते यशस्विनी ।
पुत्रैस्सहैव वार्ष्णेयी हन्त पश्यत नागराः ॥
[अधिकः पाठः]

पाण्डवानग्निना दग्धान् अमात्यं च पुरोचनम् ॥ ९

श्रुत्वा तु धृतराष्ट्रस्तद् राजा सुमहदप्रियम् ।
विनाशं पाण्डवेयानां विललाप सुदुःखितः ॥ १०

[1]धृतराष्ट्रः—

अद्य पाण्डुर्मृतो राजा भ्राता मम सुदुर्लभः ।
तेषु वीरेषु दग्धेषु मात्रा सह विशेषतः ॥ ११

गच्छन्तु पुरुषाश्शीघ्रं नगरं वारणावतम् ।
संस्कारयन्तु तान् वीरान् कुन्तीं राजसुतां तु ताम् ॥ १२

ये च तत्र मृतास्तेषां सुहृदोऽर्चन्तु तानपि ।
कारयन्तु च कुल्यानि शुभ्राणि च बृहन्ति च ॥ १३

मम दग्धा महात्मानः कुलवंशविवर्धनाः ॥ १३॥

एवं गते मया शक्यं यद्यत् कारयितुं वरम् ।
पाण्डवानां च कुन्त्याश्च तत्सर्वं क्रियतां धनैः ॥ १४॥

वैशम्पायनः—

समेतास्तु ततस्सर्वे भीष्मेण सह कौरवाः ।
धृतराष्ट्रस्सपुत्रश्च गङ्गामभिमुखा ययुः ॥ १५॥

एकवस्त्रा निरानन्दा निराभरणवेष्टनाः ।

---

1. क-ग—अन्तर्हृष्टमनाश्चासौ बहिर्दुःखसमाकुलः ।
अन्तश्शीतो बहिश्चोष्णो ग्रीष्मेऽगाधह्रदो यथा ॥
[अधिकः पाठः]

उदकं कर्तुकामा वै पाण्डवानां महात्मनाम् ॥ १६॥
एवं गत्वा ततश्चक्रे ज्ञातिभिः परिवारितः ।
उदकं पाण्डुपुत्रेभ्यो धृतराष्ट्रोऽम्बिकासुतः ॥ १७॥
चुक्रुशुः कुरवस्सर्वे भृशं शोकसमन्विताः ।
[1]विदुरस्त्वल्पशश्शोकं चक्रे वेद हि तत्परम् ॥ १८॥
ततः प्रव्यथितो भीष्मः पाण्डुराजसुतान् मृतान् ।
सह मात्रेति तच्छ्रुत्वा विललाप रुरोद च ॥ १९॥

भीष्मः—

हा युधिष्ठिर हा भीम हा धनञ्जय हा यमौ ।
हा पृथे सह पुत्रैस्त्वम् एकरात्रेण [2]हन्यसे ॥ २०॥
मात्रा सह कुमारास्ते सर्वे तत्रैव संस्थिताः ।
न हि तौ नोत्सहेयातां भीमसेनधनञ्जयौ ॥ २१॥
तरसा वेगितात्मानौ निर्भेत्तुमपि मन्दिरम् ।
परासुत्वं न पश्यामि पृथायास्सह पाण्डवैः ॥ २२॥

---

1. क-ग—विदुरो धृतराष्ट्रस्य जानन् सर्वं मनोगतम् ।
केनायं विधिना सृष्टः कौटिल्यकपटालयः ॥
इत्येवं चिन्तयन् प्राज्ञो विदुरो विदुषां वरः ।
लोकानां दर्शयन् दुःखं दुःखितस्सह बन्धुभिः ॥
मनसा चिन्तयन्पार्थान् कियद्दूरं गमिष्यति ।
सहिता पाण्डवैः पुत्रैर् इति चिन्तापरोऽभवत् ॥
[अधिकः पाठः]

2. क-ख-ग—स्वर्गता

सर्वथा विकृतं नीतं यदि ते निधनं गताः ॥ २२
धर्मराजस्स निर्दिष्टो ननु विप्रैर्युधिष्ठिरः ॥ २३॥
पृथिव्यां च रथिश्रेष्ठो भविता स धनञ्जयः ॥ २४
सत्यव्रतो धर्मवृत्तस् सत्यवाक्छुभलक्षणः ।
कथं कालवशं प्राप्तः पाण्डवेयो युधिष्ठिरः ॥ २५
आत्मानमुपमां कृत्वा परेषां वर्तते तु यः ।
सह मात्रा तु कौरव्यः कथं कालवशं गतः ॥ २६
पालितश्च चिरं कालं फलकाले यथा द्रुमः ।
भग्नस्स्याद्वायुवेगेन तथा राजा युधिष्ठिरः ॥ २७
यौवराज्येऽभिषिक्तेन पितुर्येनाहृतं यशः ।
आत्मनश्च पितुश्चैव सत्यधर्मस्य वृत्तिभिः ॥ २८
स ब्रह्मण्यः परप्रेक्षी हृदि शोकं निधाय मे ।
कालेन स हि संभग्नो धिक् कृतान्तमनर्थकम् ॥ २९
यच्च सा वनवासेन क्लेशिता दुःखभागिनी ।
पुत्रगृध्नुतया कुन्ती न भर्तारं मृता त्वनु ॥ ३०
अल्पकालं कुले जाता भर्तुः प्रीतिमवाप या ।
दग्धाऽद्य सह पुत्रैस्सा असंपूर्णमनोरथा ॥ ३१
पृथां च चिन्तयानस्य व्यथितं बहुधा मनः ।
अवधूय च मे देहं हृदयेऽभिरुदीर्यते ॥ ३२

पीनस्कन्धश्चारुबाहुर् मेरु[1]कुञ्जसमो युवा ।
मृतो भीम इति श्रुत्वा मनो न श्रद्दधाति मे ॥ ३३

[2]अनिन्द्यानि च यो गच्छन् क्षिप्रहस्तो दृढायुधः ।
प्रपत्तिमांल्लब्धलक्षो रथयानविशारदः ॥ ३४

दूरपाती त्वसंभ्रान्तो महावीर्यो महास्त्रवित् ।
अदीनात्मा नरव्याघ्रश् श्रेष्ठस्सर्वधनुष्मताम् ॥ ३५

येन प्राच्यास्ससौवीरा दाक्षिणात्याश्च निर्जिताः ।
ख्यापितं येन शूरेण त्रिषु लोकेषु पौरुषम् ॥ ३६

यस्मिञ्जाते विशोकाऽभूत् कुन्ती पाण्डुश्च वीर्यवान् ।
पुरन्दरसमो जिष्णुः कथं कालवशं गतः ॥ ३७

कथं तावृषभस्कन्धौ सिंहविक्रान्तगामिनौ ।
मर्त्यधर्ममनुप्राप्तौ यमावरिनिबर्हणौ ॥ ३८

[3]वैशम्पायनः—

---

1. क-ख-ग-घ—कूट 2. ख-ग-घ—अतित्यागी च योगी च
3. क-ग-घ—क गता वत्सा मां वृद्धं विहाय भृशमातुरम् ।
हा स्नुषे वत्से वार्ष्णेयि निधाय हृदि मे शुचम् ॥
वारणावतयात्रायां के स्युर्वै शकुनाः पथि ।
एवमल्पायुषो लोके भविष्यन्ति पृथासुताः ॥
संशप्ता इति कैर्यूयं वत्सान् दर्शय मे विधे ।
ममैव नाथा मन्नाथा मम नेत्राणि पाण्डवाः ॥
हा पाण्डवा मे हा वत्सा हा सिंहशिशवो मम ।
मातङ्गा हा ममोत्तुङ्गा हा ममानन्दवर्धनाः ॥

[1]तस्य विक्रन्दितं श्रुत्वा उदकं च प्रसिञ्चतः ।
देशं कालं समाज्ञाय विदुरः प्रत्यभाषत ॥ ३९

मा शोचीस्त्वं नरव्याघ्र जहि शोकं महाव्रत ।
न तेषां विद्यते पापं प्राप्तकालं कृतं मया ॥ ४०

एतच्च तेभ्य उदकं विप्रासिञ्च न भारत ।
सोऽब्रवीत् किञ्चिदुत्सार्य कौरवाणामशृण्वताम् ॥ ४१

क्षत्तारमुपसंगृह्य बाष्पोत्पीडकलस्वरः ॥ ४१॥

[2]भीष्मः—

कथं ते तात जीवन्ति पाण्डोः पुत्रा महारथाः ।
कथमस्मद्विधः पक्षः पाण्डोर्न हि निपातितः ॥ ४२॥

कथं मत्प्रमुखास्सर्वे प्रमुक्ता महतो भयात् ।
जननी गरुडेनेव कुमारास्ते समुद्धृताः ॥ ४३॥

---

पूर्वतोऽनुवृत्तम्—

मम हीनस्य युष्माभिः सर्वे लोकास्तमोवृताः ।
कदा द्रष्टास्मि कौन्तेयांस् तरुणादित्यवर्चसः ॥

दृष्ट्वा युष्मान् कदा रंस्ये पूर्ववन्मम नन्दनाः ।
का गतिर्मे क्व वत्स्यामि कुतो द्रक्ष्यामि मे शिशून् ॥
हा युधिष्ठिर हा भीम हा फल्गुन हा यमौ ।
मा गच्छत निवर्तध्वं मयि कोपं विमुञ्चत ॥

[अधिकः पाठः]

1. च—श्रुत्वा तत्क्रन्दितं तस्य तिलोदं च प्रसिञ्चतः ।
2. च—मन्दं मन्दमुवाचेदं स्वर्णदीसंभवो नृप ॥　　[अधिकः पाठः]

वैशम्पायनः—

एवमुक्तस्तु कौरव्य कौरवाणामशृण्वताम् ।
आचचक्षे स धर्मात्मा भीष्मायाद्भुतकर्मणे ॥ ४४॥

विदुरः—

धृतराष्ट्रस्य शकुने राज्ञो दुर्योधनस्य च ।
विनाशे पाण्डुपुत्राणां कृतो मतिविनिश्चयः ॥ ४५॥

तत्राहमपि च ज्ञात्वा तस्य पापस्य निश्चयम् ।
तं जिघांसुरहं चापि तेषामनुमते स्थितः ॥ ४६॥

ततो जतुगृहं गत्वा दहनेऽस्मिन् नियोजिते ।
पृथायाश्च सपुत्राया धार्तराष्ट्रस्य शासनात् ॥ ४७॥

ततः खनकमाहूय सुरङ्गां वै बिले तदा ।
सगुहां कारयित्वा ते कुन्त्या पाण्डुसुतास्तदा ॥ ४८॥

निष्कामिता मया पूर्वं मा स्म शोके मनः कृथाः ॥ ४९

ततस्तु नावमारोप्य सहपुत्रां पृथामहम् ।
दत्त्वाऽभयं सपुत्रायै कुन्त्यै गृहमदाहयम् ॥ ५०

तस्मात्ते मा स्म भूद्दुःखं मुक्ताः पापात्तु पाण्डवाः ।
निर्गताः पाण्डवा राजन् मात्रा सह परन्तपाः ॥ ५१

अग्निदाहान्महाघोरान्मया तस्मादुपायतः ।
मा शोकं कार्षी राजंस्त्वं जीवन्त्येव च पाण्डवाः ॥ ५२

प्रच्छन्ना विचरिष्यन्ति यावत्कालस्य पर्ययः ॥ ५२॥

तस्मिन् युधिष्ठिरं काले द्रक्ष्यन्ति भुवि भूमिपाः ।
विमलं कृष्णपक्षान्ते जगच्चन्द्रमिवोदितम् ॥ ५३॥

न तस्य नाशं पश्यामि यस्य भ्राता धनञ्जयः ।
भीमसेनश्च दुर्धर्षौ माद्रीपुत्रौ च भारत[1] ॥ ५४॥

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्याम्
आदिपर्वणि चतुश्चत्वारिंशदधिकशततमोऽध्यायः ॥ १४४ ॥

॥ ८ ॥ जतुगृहदाहपर्वणि सप्तमोऽध्यायः ॥ ७ ॥

[अस्मिन्नध्याये ५४॥ श्लोकाः]

---

## ॥ पञ्चचत्वारिंशदधिकशततमोऽध्यायः ॥

विदुरप्रेषितेन पुरुषेण साभिज्ञानं पाण्डवेभ्यो गङ्गायां नौकाप्रदर्शनम् ॥ १ ॥ निषादेन नाविकेन पुनरभिज्ञाननिवेदनेन पाण्डवानां नावा गङ्गानिस्तारणम् ॥ २ ॥ ततस्तेषां भीमेन सह त्वरितगमनम् ॥ ३ ॥

---

वैशम्पायनः—

पाण्डवाश्चापि निर्गम्य नगराद्वारणावतात् ।

---

1. क-ख-ग-घ—ततस्संहृष्टसर्वाङ्गो भीष्मो विदुरमब्रवीत् ।
युक्तं चैवानुरूपं च कृतं तात शुभं त्वया ॥
वयं विमोक्षिता दुःखात् पाण्डुपक्षो न नाशितः ।
एवमुक्त्वा विवेशाथ पुरं जनशताकुलम् ॥
कुरुभिस्सहितो राजा नागरैश्च पितामहः ॥

अथाम्बिकेयस्सामात्यः सकर्णस्सहसौबलः ॥
सात्मजः पार्थनाशस्य स्मरंस्तथ्यं अहर्ष च ।
भीष्मस्तु राजदुर्धर्षो विदुरश्च महामतिः ॥
अहर्षाते स्मरन्तौ तौ जातुषाग्नेर्विमोचनम् ।
सत्यशीलगुणाचारै रागैर्जानपदोद्भवैः ॥
द्रोणादयस्तु धर्मैश्च तेषां तान् मोचितान् विदुः ।
शौर्यलावण्यमाहात्म्यैं रूपैः प्राणबलैरपि ॥
स्वस्थान् पार्थानमन्यन्त पौरजानपदास्तदा ।
अन्ये जनाः प्राकृताश्च स्त्रियश्च बहुधा तथा ॥
शङ्कमाना वदन्ति स्म दग्धा जीवन्ति वा न वा ॥

॥ इति सम्भवपर्वणि चतुर्नवतितमोऽध्यायः ॥

---

॥ अथ पञ्चनवतितमोऽध्यायः ॥

---

वैशम्पायनः—

क-चा—पाण्डवान् महतो दाहान्मोचयित्वा महामते ।
म्रियमाणं महाक्लेशैर् भवान् मां समजीवयत् ॥
प्रच्छन्ना विचरिष्यन्तो यथोक्तं भवता तदा ।
न व्यक्तं तत्त्वया तात यत्र कुत्रापि न क्वचित् ॥
इतोऽपि प्रेषयित्वाऽऽप्तान् योगक्षेमं विचारय ।
दूराद्दूरतरं पार्थान् प्रस्थापय वनाद्वनम् ॥
तत्र तत्र प्रेषयित्वा दूतानाप्तान् शुभांस्तव ।
योगक्षेमं पाण्डवानां गूढं सम्यग्विचारय ॥
भीष्मेणेत्थं समादिष्टो विदुरः खनकं पुनः ।
गुप्तं तं प्रेषयामास खनकं जनमेजय ॥
सोऽपि गत्वा पृथापुत्रान् दृष्ट्वा सिद्धवटे तदा ।
म्लेच्छभाषां वदन्नेव विदुरेण पुरेरिताम् ॥
रात्रौ पाण्डुसुतान् दृष्ट्वा सान्त्वयित्वा वचोऽब्रवीत् ।

जवेन प्रययुर्वीरा दक्षिणां दिशमाश्रिताः ॥ १

एतस्मिन्नेव काले तु यथासंप्रत्ययं कविः ।
[1]विदुरः प्रेषयामास तद्वनं पुरुषं शुचिम् ॥ २

स गत्वा तु वनोद्देशे वने प्रैक्षत पाण्डवान् ।
सह मात्रा नरव्याघ्रान् अनयज्जाह्नवीं ततः ॥ ३

---

पूर्वतोऽनुवृत्तम्—

खनकः—

आयुष्मद्भिर्न भेतव्यं भवद्भिः कौरवा न हि ।
जानन्ति जीवतो युष्मान् निश्चितोऽभूद्भवन्मृतौ ॥
जानाति युष्मान् गाङ्गेयो विदुरेण प्रबोधितः ।
शनैश्शनैश्च गन्तव्यं न भीत्या त्वरया न च ॥
दक्षिणां दिशमाश्रित्य वटकाननमुत्तमम् ।
विद्यते भारतश्रेष्ठास् तत्र गच्छन्तु निर्भयाः ।
सर्वप्रवास एतावान् भवतां पुण्यशीलिनाम् ।
क्षमावतां च युष्माकं सुखोदर्को भविष्यति ॥
इत्याह विदुरो युष्मान् मया तत्कथितं शुभाः ।
युष्मभ्यं यामि भद्रं वो गच्छतारिष्टमार्गतः ॥

वैशम्पायनः—

निवृत्ते खनकेत्विवत्थं पाण्डवा जनमेजय ।
किमकुर्वत ते सर्वे शृणु राजन् पितामहाः ॥

[अधिकः पाठः]

(इतः परं—पाण्डवाश्चापि निर्गम्य नगराद्वारणावतात्—इत्यारम्भो-मूले दृश्यते)

1. च—श्रुत्वा तं खनकेनोक्तं कौन्तेयोदन्तमादितः ।
आत्मनः पाण्डवानां च विश्वास्यं ज्ञानपूर्वकम् ।
गङ्गासन्तरणार्थाय ज्ञानाभिज्ञानवाचकम् ॥ [अधिकः पाठः]

विदितं तन्महाबुद्धेर् विदुरस्य महात्मनः ।
तत्रस्थस्यापि चारेण पापानां वै चिकीर्षितम् ॥ ४
ततो धर्मविदाऽनेन प्रहितः पुरुषश्शिवः ॥ ४॥
सर्वगां जवनां नावं युक्तारित्रां पताकिनीम् ।
शिवे भागीरथीतीरे विश्वास्यैर्मनुजैर्वृताम् ॥ ५॥
पाण्डवान् दर्शयामास वचनं चेदमब्रवीत् ॥ ६

पुरुषः—

क्षत्रघ्नं शिशिरघ्नं च महाकुक्षीबिलौकसम् ।
बोद्धव्यमिति यत्प्राह विदुरस्तदिदं तदा ॥ ७
तेन मां प्रेषितं विद्धि विश्वस्तं वै महात्मना ।
अब्रवीच्च महाबाहुर् विदुरस्सर्वधर्मवित् ॥ ८
अधिक्षिपन् धार्तराष्ट्रं सभ्रातृकमुदारधीः ।
कर्णं च दुर्मतिं क्रूरं शकुनिं चापि सौबलम् ॥ ९
दुर्योधनः कुलस्यास्य कीर्तिधर्मविनाशनः ।
गान्धारराजसहितः पितरं पातयिष्यति ॥ १०
राजा चाप्यपरीजानन् स्नेहबद्धो दुरात्मसु ।
धृतराष्ट्रः परीतात्मा धर्मं त्यजति शाश्वतम् ॥ ११

वैशम्पायनः—

पाण्डवाश्च तथा गत्वा गङ्गायास्तीरमुत्तमम् ।

निषादाधिपतिं वीरा दाशं परमधार्मिकम् ॥ १२
दीपिकाभिः कृतालोकं मार्गमाणं च पाण्डवान् ।
ददृशुः पाण्डवेयास्ते नाविकं त्वरयाऽन्वितम् ॥ १३
निषादस्तत्र कौन्तेयान् अभिज्ञानं न्यवेदयत् ।
विदुरस्य महाबुद्धेर् म्लेच्छभाषादि यत्तदा । १४

नाविकः—

विदुरेणास्मि सन्दिष्टो दत्वाऽऽशु तद्धनं महत् ।
गङ्गातीरे निविष्टस्त्वं पाण्डवांस्तारयेस्त्विति ॥ १५
सोऽहं चतुर्दशीमद्य गङ्गाया अविदूरतः ।
चारैरन्वेषयाम्यस्मिन् वने मृगगणान्विते ॥ १६
प्रभाववन्तो भद्रं वो नावमारुह्य गम्यताम् ॥ १६॥
युक्तारित्रपताकां वै निर्मितां मन्दिरोपमाम् ।
इमां वारिपथे युक्तां तथैव सुखगामिनीम् ॥ १७॥
मोचयिष्यामि वस्सर्वान् मृत्युपाशात् समातृकान् ॥ १८
ततस्तान् व्यथितान् सर्वान् सह मात्रा परन्तपान् ।
नावमारोप्य गङ्गायां प्रयातां पुनरब्रवीत् ॥ १९
विदुरो मूर्ध्न्युपाघ्राय परिष्वज्य च वो मुहुः ।
अरिष्टं गच्छताव्यग्राः पन्थानमिति चाब्रवीत् ॥ २०
इत्युक्त्वा तान् समारोप्य तारयामास पाण्डवान् ।
इत्युक्तास्सह मात्रा ते तस्मान्मुक्ता महाभयात् ॥ २१

गङ्गामुत्तीर्य कौन्तेया वनं जग्मुर्यथागतम् ॥ २१॥
ततस्तां तत्र तीर्त्वा तु गङ्गां भागीरथीं नदीम् ।
जवेन प्रययुर्वीरा दक्षिणां दिशमास्थिताः ॥ २२॥
विहाय निद्रां पन्थानं नक्षत्रैर्दक्षिणामुखाः ।
गाहमाना वनं राजन् गहनं प्रतिपेदिरे ॥ २३॥
ततश्श्रान्ताः पिपासार्ता निस्सृताः पाण्डुनन्दनाः ।
पुनरूचुर्महावीर्यं भीमसेनमिदं वचः ॥ २४॥
इतः कष्टतरं किंनु यद्वयं गहने वने ।
दिशश्च न प्रजानीमो गन्तुं चैव न शक्नुमः ॥ २५॥
तं च पापं न जानीमो यदि दग्धः पुरोचनः ।
कथं नु विप्रमुच्येम भयादस्मादलक्षिताः ॥ २६॥
शीघ्रमस्मानुपादाय तथैव व्रज भारत ।
त्वं हि नो बलवानेको यथा सततगस्तथा ॥ २७॥
इत्युक्तो धर्मराजेन भीमसेनो महाबलः ।
आदाय कुन्तीं भ्रातॄंश्च जगामाशु महाबलः ॥ २८॥

इति श्रीमन्महाभारते शतसहस्रिकायां संहितायां वैयासिक्याम्
आदिपर्वणि पञ्चचत्वारिंशदधिकशततमोऽध्यायः ॥ १४५ ॥
॥ ८ ॥ जतुगृहदाहपर्वणि अष्टमोऽध्यायः ॥ ८ ॥
[अस्मिन्नध्याये २८॥ श्लोकाः]

---

## ॥ षट्चत्वारिंशदधिकशततमोऽध्यायः ॥

तृषार्तान् मातरं भ्रातृंश्च न्यग्रोधमूले स्थापयित्वा जलानयनाय भीमस्य गमनम् ॥ १ ॥ जलमानीयागतस्य सुप्तान् मात्रादीन् पश्यतो भीमस्य प्रलापः ॥ २ ॥

वैशम्पायनः—

तेन विक्रमता तूर्णम् ऊरुवेगसमीरितः ।
प्रववावनिलो राजन् शुचिशुक्रागमे यथा ॥ १

स मृद्नन् पुष्पितांश्चैव फलिनश्च वनस्पतीन् ।
आरुजन् दारुगुल्मांश्च पथस्तस्य समीपगान् ॥ २

तथा वृक्षान् भञ्जमानो जगामामितविक्रमः ॥ २॥
[1]तस्य वेगेन पश्चानां मूर्च्छेव समजायत ॥ ३

[2]असकृच्चापि संतीर्य पारावारं भुजप्लवाः ।
[3]पथा प्रच्छन्नमासेदुर् धार्तराष्ट्रभयात्तदा ॥ ४

कृच्छ्रेण मातरं त्वेकां सुकुमारीं यशस्विनीम् ।
अवहत्तत्र पृष्ठेन रोधस्सु विषमेषु च ॥ ५

---

1. क-ग-घ—तस्य कक्षद्वयोद्भूतपवनध्वनिरुत्थितः ।
गुम्भिताशेषदिग्भागश् शुश्रुवेऽतिभयङ्करः ॥
[अधिकः पाठः]

2. घ—मातरं च वहन् भ्रातॄन् अश्रमेण समीरजः । [अधिकः पाठः]

3 क-ख-ग—पार्थाः

अगमच्च वनोद्देशम् अल्पमूलफलोदकम् ।
क्रूरपक्षिमृगं घोरं सायं समुपचक्रमुः ॥ ६
घोरा समभवत् सन्ध्या दारुणा मृगपक्षिणः ।
अप्रकाशा दिशस्सर्वाश् शनैरासंस्ततस्तदा ॥ ७
ते श्रमेण च कौन्तेयास् तृष्णया च प्रपीडिताः ।
नाशक्नुवंस्ततो गन्तुं निद्रया च प्रवृद्धया ॥ ८
शीर्णपर्णफलैर्वृक्षैर् बहुगुल्मक्षुपद्रुमैः ।
प्रभग्नायनभूयिष्ठे श्वदंष्ट्राबहुले सदा ॥ ९
[1]न्यविशन्त हि ते तत्र निरास्वादे महावने ॥ ९॥
रात्र्यामेव गतास्तत्र चतुर्विंशतियोजनम् ॥ १०
अथ तृष्णापरिम्लाना कुन्ती वचनमब्रवीत् । १०॥

कुन्ती—
माता सती पाण्डवानां पञ्चानां मध्यतस्स्थिता ।
तृषया परितप्ताऽस्मि अनाथेव महावने ॥ ११॥

वैशम्पायनः—
[2]तच्छ्रुत्वा भीमसेनस्तु मातृवाक्यं प्रकम्पितः ।
कारुण्येन मनश्चक्रे गमनायाथ सत्वरः ॥ १२॥

---

1. क-ग—अतीव गहनं घोरं दुर्विज्ञेयपथं क्वचित् । [अधिकः पाठः]

2. क-ग—इतः परमहं शक्ता न गन्तुं च पदात् पदम् ।
शयिष्ये वृक्षमूलेऽत्र धार्तराष्ट्रा हरन्तु माम् ॥
शृणु भीम वचो मह्यं तव बाहुबलात् पुरः ।
स्थातुं न शक्ताः कौरव्याः किं बिभेषि पृथासुत ॥
[अधिकः पाठः]

[1]ततो भीमो वनं घोरं प्रविश्य विजनं महत् ।
न्यग्रोधं विपुलच्छायं रमणीयमुपाद्रवत् ॥ १३॥

तत्र निक्षिप्य तान् सर्वान् उवाच भरतर्षभः ।
पानीयं मृगये यावत् तावद्विश्रम्यतामिह ॥ १४॥

एते रुवन्ति मधुरं सारसा जलचारिणः ।
ध्रुवमत्र जलस्थानम् अर्हतीति मतिर्मम ॥ १५॥

अनुज्ञातस्स गच्छेति भ्रात्रा ज्येष्ठेन भारत ।
जगाम तत्र यत्र स्म रुवन्ति जलचारिणः ॥ १६॥

अपश्यत् पद्मिनीखण्डमण्डितं स सरोवरम् ॥ १७

स तत्र पीत्वा पानीयं स्नात्वा च भरतर्षभः ।
उत्तरीयेण पानीयम् आजहार परन्तपः ॥ १८

पङ्कजानामनेकैश्च पत्रैर्बध्वा जलाशयात् ।
गव्यूतिमात्रादागत्य त्वरितो मातरं प्रति ॥ १९

[2]स सुप्तां मातरं प्रेक्ष्य भ्रातॄंश्च वसुधातले ।

---

1. क-ग—अन्ये रथा न मे सन्ति भीमसेनादृते भुवि ।
धार्तराष्ट्राद्भृथा भीरो न मां स्वप्तुमिहेच्छसि ॥
भीमपृष्ठस्थिता चेत्थं दूयमानेन चेतसा ।
साश्रुध्वनि रुदन्ती सा निद्रावशमुपागता ॥ [अधिकः पाठः]

2. क-ग—भ्रातॄंश्च मातरं चैव जलं शीतमपाययत् ।
पीतोदकास्ते सर्वेऽपि परिश्रमवशात् पुनः ।
निद्रापहृतधैर्याश्च सुषुपुर्भृशविह्वलाः ॥ [अधिकः पाठः]

[1]भृशं दुःखपरीतात्मा विललाप वृकोदरः ॥ २०

भीमसेनः—

शयनेषु पराध्र्येषु प्रसुप्ता वारणावते ।
नाधिजग्मुस्तदा निद्रां तेऽद्य सुप्ता महीतले ॥ २१
स्वसारं वसुदेवस्य शत्रुसङ्घविमर्दिनः ।
भोजराजसुतां कुन्तीं सर्वलक्षणपूजिताम् ॥ २२
स्नुषां विचित्रवीर्यस्य भार्यां पाण्डोर्महात्मनः ।
प्रासादशयनां नित्यं पुण्डरीकान्तरप्रभाम् ॥ २३
सुकुमारतरां स्त्रीणां महार्हशयनोचिताम् ।
शयानामद्य पश्यामि पृथिव्यां हन्त भो विधे ॥ २४
धर्मादिन्द्राच्च वायोश्च सुषुवे या सुतानिमान् ।
सेयं भूमौ परिश्रान्ता शेते प्राकृतवत् कथम् ॥ २५
[2]अयं नीलाम्बुदप्रख्यो नरेष्वप्रतिमो भुवि ।

1. क-ग-घ—महारौद्रे वने घोरे वृक्षमूले सुशीतले ।
विक्षिप्तकरपादांश्च दीर्घोच्छ्वासमहारवान् ॥
ऊर्ध्ववक्त्रान् महाकायान् पञ्चेन्द्रानिव भूतले ।
अज्ञातवृक्षनित्यस्थप्रेतराक्षससाध्वसान् ।
दृष्ट्वैवं भृशशोकार्तो विललापानिलात्मजः ॥
[अधिकः पाठः]

2. क-ख-ग—किं नु दुःखतरं द्रष्टुं मया शक्यमतः परम् ।
योऽहमद्य नरव्याघ्रान् पश्यामि धरणीं गतान् ॥
त्रिषु लोकेषु वै राजन् धर्मनित्योऽर्हति प्रभुः ।
सोऽयं भूमौ परिश्रान्तः शेते प्राकृतवत् कथम् ॥
[अधिकः पाठः]

शेते प्राकृतवद्भूमौ ततो दुःखतरं नु किम् ॥ २६

इमौ नीलोत्पलश्यामौ नरेष्वप्रतिमौ भुवि ।
अश्विनाविव देवानाम् आश्विनौ रूपसंपदा ॥ २७

तौ तु प्राकृतवच्चोभौ प्रसुप्तौ धरणीतले ।
ज्ञातयो यस्य नैव स्युर् विषमाः कुलपांसनाः ॥ २८

स जीवेत् सुखितो लोके ग्रामद्रुम इवैकजः ॥ २८॥
एको वृक्षो हि यो ग्रामे भवेत् पर्णफलान्वितः ।

चैत्यो भवति निर्ज्ञातिर् अर्चनीयस्सुपूजितः ॥ २९॥
येषां च बहवश्शूरा ज्ञातयो धर्मवत्सलाः ।

ते जीवन्ति चिरं लोके भवन्ति च निरामयाः ॥ ३०॥
बलवन्तस्समृद्धार्था मित्रबान्धवनन्दनाः ।

जीवन्त्यन्योन्यमाश्रित्य द्रुमाः काननजा इव ॥ ३१॥
वयं च धृतराष्ट्रेण सपुत्रेण दुरात्मना ।

[1]विवासिताश्च दग्धाश्च क्षत्तुर्बुद्धिपराक्रमात् ॥ ३२॥
तस्मान्मुक्ता वयं दाहाद् इमं वृक्षमुपाश्रिताः ।

कां दिशं प्रतिपत्स्यामः प्राप्ताः क्लेशमनुत्तमम् ॥ ३३॥

---

1. क-ग—राज्यलुब्धेन मूर्खेन दुर्मन्त्रिसहितेन च ।
धृष्टेनाधर्मशीलेन स्वार्थनिष्ठैकबुद्धिना ॥ [अधिकः पाठः]

नातिदूरेण नगरं वनादस्माद्धि लक्षये ।
जागर्तव्ये स्वपन्तीमे हन्त जागर्म्यहं स्वयम् ॥ ३४॥
पास्यन्तीमे जलं पश्चात् प्रतिबुद्धा जितक्लमाः ॥ ३५

वैशम्पायनः—

इति भीमो विनिश्चित्य जागर्ति स्म प्रयत्नवान् ॥ ३५॥

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्याम्
आदिपर्वणि षट्चत्वारिंशदधिकशततमोऽध्यायः ॥ १४६ ॥

॥ ८ ॥ जतुगृहदाहपर्वणि नवमोऽध्यायः ॥ ९ ॥

[अस्मिन्नध्याये ३५॥ श्लोकाः]

॥ जतुगृहदाहपर्व समाप्तं ॥

## ॥ सप्तचत्वारिंशदधिकशततमोऽध्यायः ॥

### ॥ हिडिम्बवधपर्व ॥

हिडिम्बप्रेरितायाः तद्भगिन्या हिडिम्बायाः पाण्डवसमीपगमनम् ॥ १ ॥ भीमे कामार्तायां हिडिम्बायाः भीमं प्रति वाक्यम् ॥ २ ॥ भीम-हिडिम्बीसंवादः ॥ ३ ॥

वैशम्पायनः—

तत्र तेषु शयानेषु हिडिम्बो नाम राक्षसः ।
अविदूरे वनात्तस्मात् सालवृक्षमुपाश्रितः ॥ १
क्रूरो मानुषमांसादो महावीर्यो महाबलः ।

[1]आघ्राय मानुषं गन्धं भगिनीमिदमब्रवीत् ॥ २

[2]उपपन्नं चिरस्याद्य भक्षो मम मनःप्रियः ।
जिघ्रतः प्रस्नुतस्नेहाज् जिह्वा पर्येति मे मुखम् ॥ ३

अष्टौ दन्तास्सितास्तीक्ष्णाश् चिरस्य बत दुस्सहाः ।
देहेषु मज्जयिष्यामि स्निग्धेषु पिशितेषु च ॥ ४

आक्रम्य मानुषं कण्ठम् आच्छिद्य धमनीमपि ।
उष्णं नवं प्रपास्यामि फेनिलं रुधिरं बहु ॥ ५

गच्छ जानीहि के त्वेते शेरते वनमाश्रिताः ॥ ५॥

मानुषो बलवान् गन्धो घ्राणं तर्पयतीव मे ॥ ६

हत्वैतान् मानुषानेतान् आनयाशु ममान्तिकम् ।
अस्मद्विषयसुप्तेभ्यो नैतेभ्यो भयमस्ति ते ॥ ७

ततो मांसानि संस्कृत्य मानुषाणि यथेष्टतः ।
सहितौ भक्षयिष्यावः कुरु क्षिप्रं वचो मम ॥ ८

ततस्तुष्टौ प्रनृत्यावः प्रगीतौ तलतालकौ ॥ ८॥

---

1. क-ख-ग—विरूपरूपः पिङ्गाक्षः करालो भीमदर्शनः ।
पिशितेप्सुः क्षुधार्तश्च जिघ्रन् गन्धं यदृच्छया ॥
ऊर्ध्वाङ्गुलिस्स कण्डूयन् धुन्वन् रूक्षाञ्शिरोरुहान् ।
जृम्भमाणो महावक्त्रः पुनः पुनरवेक्ष्य च ।
तुष्टो मानुषमांसस्य महाकायो महाबलः ॥
[अधिकः पाठः]

2. घ—उपपन्नरसोऽद्याद्य भक्ष्यान् मम मनःप्रियान् । [अधिकः पाठः]

वैशंपायनः—

एवमुक्ता हिडिम्बेन हिडिम्बी राक्षसी तदा ।
भ्रातुर्वचनमाज्ञाय त्वरमाणेव राक्षसी ॥ ९॥

आप्लुत्याप्लुत्य च तरून् अगच्छत् पाण्डवान् प्रति ।
भ्रातुर्वचनमाज्ञाय त्वरमाणैव राक्षसी ॥ १०॥

जगाम तत्र यत्र स्म शेरते पाण्डवा वने ॥ ११

ददर्श तत्र सा गत्वा पाण्डवान् पृथया सह ।
शयानान् भीमसेनं च जाग्रतं [1]मापराजितम् ॥ १२

उपास्यमानान् भीमेन रूपयौवनशालिना ।
सुकुमारांश्च पार्थान् सा व्यायामेन च कर्शितान् ॥ १३
दुःखेन संप्रयुक्तांश्च सहज्येष्ठान् प्रमाथिना ॥ १३॥

रौद्री सती राजपुत्रं दर्शनीयप्रदर्शनम् ।
दृष्ट्वैव भीमसेनं सा सालस्कन्धमिवोद्गतम् ॥ १४॥

राक्षसी कामयामास रूपेणाप्रतिमं भुवि ॥ १५
अन्तर्गतेन मनसा चिन्तयामास राक्षसी ॥ १५॥

अयं श्यामो महाबाहुः सिंहस्कन्धो महाद्युतिः ।
कम्बुग्रीवः पुष्कराक्षो भर्ता युक्तो भवेन्मम ॥ १६॥

नाहं भ्रातु[2]र्वशे जातु कुर्यां क्रूरमसांप्रतम् ॥ १७

1 क-ख-ग—वा; घ—तम 2. क-ख-घ—वंचो

पतिहेतुर्हि बलवान् न तथा भ्रातृसङ्गमः ॥ १७॥

मुहूर्तमपि चाद्याहं प्राप्नुयां तृप्तिमुत्तमाम् ।
भर्त्रा त्वहमनेनैव मोदिष्ये बहुलास्समाः ॥ १८॥

हिडिम्बी तु महारौद्रा तथा भरतसत्तम ।
उत्सृज्य राक्षसं रूपं मानुषं रूपमास्थिता ॥ १९॥

सा कामरूपिणी रूपं कृत्वा मदनमोहिता ।
उपतस्थे महात्मानं भीमसेनमनिन्दिता ॥ २०॥

इङ्गिताकारकुशला सोपासर्पच्छनैश्शनैः ।
विनम्यमानेव लता सर्वाभरणभूषिता ॥ २१॥

शनैश्शनैस्स तां भीमः समीपमुपसर्पतीम् ।
वीक्षमाणस्तथाऽपश्यत् तन्वीं पीनपयोधराम् ॥ २२॥

चन्द्राननां पद्मनेत्रां नीलकुञ्चितमूर्धजाम् ।
कृष्णां सुपाण्डुरै[1]र्वक्त्रैर् बिम्बोष्ठीं चारुदर्शनाम् ॥ २३॥

दृष्ट्वा तां रूपसंपन्नां भीमो विस्मयमागतः ॥ २४

उपचारगुणैर्युक्ता ललितै[2]र्भावसंस्थितैः ।
समीपमुपसंप्राप्य भीमं साऽथ वरानना ॥ २५

वचो वचनवेलायाम् इदं प्रोवाच पाण्डवम् ॥ २५॥

लज्जया नम्यमानेव सर्वाभरणभूषिता ।

---

1. क-ख-घ-ग—दन्तै 2. क-ख-ग—हास; घ—हाससंमितैः

स्मितपूर्वमिदं वाक्यं भीमसेनमथाब्रवीत् ॥ २६॥

हिडिम्बी—

कुतस्त्वमसि संप्राप्तः कश्चासि पुरुषर्षभ ।
क इमे शेरते चेह पुरुषा देवरूपिणः ॥ २७॥
केयं च बृहती श्यामा सुकुमारी तवानघ ।
शेते वनमिदं प्राप्य विश्वस्ता स्वगृहे यथा ॥ २८॥
नेदं जानीथ गहनं वनं राक्षससेवितम् ।
वसति ह्यत्र पापात्मा हिडिम्बो नाम राक्षसः ॥ २९॥
तेनाहं प्रेषिता भ्राता दुष्टभावेन रक्षसा ।
बिभक्षयिषता मांसं युष्माकममरोपम ॥ ३०॥
साऽहं त्वामिह संप्रेक्ष्य देवगर्भसमप्रभम् ।
नान्यं भर्तारमिच्छामि सत्यमेतद्ब्रवीमि ते ॥ ३१॥
एतद्विज्ञाय धर्मज्ञ युक्तं मयि समाचर ।
कामोपहतचित्तां हि भजमानां भजस्व माम् ॥ ३२॥
त्रास्येऽहं त्वां महाबाहो राक्षसात् पुरुषादकात् ।
वत्स्यावो गिरिशृङ्गेषु भर्ता भव ममानघ ॥ ३३॥
इच्छामि वीर भद्रं ते मम प्राणान् विहासिषुः ।
त्वया ह्यहं परित्यक्ता न जीवेयमरिन्दम ॥ ३४॥
अन्तरिक्षचरी चास्मि कामरूपधराऽपि च ।

अतुलामाप्नुहि प्रीतिं तत्र तत्र मया सह ॥　　३५॥

भीमसेनः—

एष ज्येष्ठो मम भ्राता मान्यः परमको गुरुः ।
अनिविष्टश्च तन्नाहं परिविद्यां कथंचन ॥　　३६॥

मातरं भ्रातरं ज्येष्ठं कनिष्ठानपरानिमान् ।
परित्यजेद्धि कोन्वद्य भयादपि च राक्षसि ॥　　३७॥

को हि सुप्तानिमान् भ्रातॄन् दत्त्वा राक्षसभोजनम् ।
मातरं च नरो गच्छेत् कामार्त इव मद्विधः ॥　　३८॥

हिडिम्बी—

एकं त्वां मोक्षयिष्यामि सह मात्रा परन्तप ।
सोदरानुत्सृजैनांस्त्वम् आरोह जघनं मम ॥　　३९॥

भीमसेनः—

नाहं जीवितुमाशंसे भ्रातॄनुत्सृज्य राक्षसि ।
यथाश्रद्धं व्रजैका हि विप्रियं मे प्रभाषसे ॥　　४०॥

राक्षसी—

न तेऽप्रियं चिकीर्षामि सर्वानेतान् प्रबोधय ।
मोक्षयिष्यामि वः कामं राक्षसात् पुरुषादकात् ॥　　४१॥

[1]भीमसेनः—

सुखसुप्तानिमान् भ्रातॄन् मातरं चैव राक्षसि ।

---

1. ख—बोधयिष्यामि जननीं भ्रातॄंस्तव महात्मनः ।　　[अधिकः पाठः]

न भयाद्बोधयिष्यामि भ्रातुस्तव दुरात्मनः ॥ ४२॥

न हि मे राक्षसा भीरु सोढुं शक्ताः पराक्रमम् ।

न मनुष्या न गन्धर्वा न यक्षाश्चारुलोचने ॥ ४३॥

गच्छ वा तिष्ठ वा भद्रे यद्वाऽपीच्छसि तत्कुरु ।

तं वा प्रेषय तन्वङ्गि राक्षसं पुरुषादकम् ॥ ४४॥

इति श्रीमन्महाभारते शतसहस्रिकायां संहितायां वैयासिक्याम्
आदिपर्वणि सप्तचत्वारिंशदधिकशततमोऽध्यायः ॥ १४७ ॥

॥ ९ ॥ हिडिम्बवधपर्वणि प्रथमोऽध्यायः ॥ १ ॥

[अस्मिन्नध्याये ४४॥ श्लोकाः]

---

## अष्टचत्वारिंशदधिकशततमोऽध्यायः

पाण्डवान् प्रति प्रेषितया हिडिम्ब्या विलम्बिते हिडिम्बस्य तत्रागमनम् ॥ १ ॥

---

वैशम्पायनः—

तां विदित्वा चिरगतां हिडिम्बो राक्षसेश्वरः ।

अवतीर्य द्रुमात्तस्माद् आजगामाथ पाण्डवान् ॥ १

लोहिताक्षो महाबाहुर् ऊर्ध्वकेशो महाबलः ।

मेघश्यामो महावक्त्रो तीक्ष्णदंष्ट्रोज्ज्वलाननः ॥ २

तलं तलेन संहत्य बाहू विक्षिप्य चासकृत् ।

उद्वृत्तनेत्रस्संक्रुद्धो दन्तान् दन्तेषु निष्कषन् ॥ ३

कोऽद्य मे भोक्तुकामस्य विघ्नं चरति दुर्मतिः ।
न बिभेति हिडिम्बी च प्रेषिता किमनागता ॥ ४

तमापतन्तं दृष्ट्वैव तथारूपं भयङ्करम् ।
हिडिम्ब्युवाच वित्रस्ता भीमसेनमिदं वचः ॥ ५

हिडिम्बी—

आपतत्येष दुष्टात्मा संक्रुद्धः पुरुषादकः ।
त्वं चापि भ्रातृभिस्सार्धं यद्ब्रवीमि तथा कुरु ॥ ६

अहं कामगमा चैव रक्षोबलसमन्विता ।
आरुहेमां मम श्रोणिं नेष्यामि त्वां विहायसा ॥ ७

प्रबोधयैनान् सोदर्यान् मातरं च नरर्षभ ।
सर्वानेव गमिष्यामि गृहीत्वा व्योमसक्तवत् ॥ ८

भीमसेनः—

मा भैस्त्वं विपुलश्रोणि नैव किञ्चिन्मयि स्थिते ।
अहमेनं हनिष्यामि पश्यन्त्यास्ते सुमध्यमे ॥ ९

नायं प्रतिबलो भीरु राक्षसापशदो मम ।
सोढुं युधि परिस्पन्दम् अशक्तास्सर्वराक्षसाः ॥ १०

पश्य बाहू सुवृत्तौ मे हस्तिहस्तोपमौ शुभौ ।

ऊरू परिघसङ्काशौ संहतं चाप्युरो मम ॥ ११

विक्रमं मे महेन्द्रस्य यथा द्रक्ष्यसि शोभने ।

माऽवमंस्थाः पृथुश्रोणि मत्वा मामिह मानुषम् ॥ १२

हिडिम्बी—

नावमन्ये नरव्याघ्र त्वामहं देवरूपिणम् ।

दृष्टापदानास्तु मया मानुषेष्विह राक्षसाः ॥ १३

वैशम्पायनः—

तथा संजल्पतस्तस्य भीमसेनस्य भारत ।

वाचश्श्रुत्वा ततः क्रुद्धो राक्षसः पुरुषादकः ॥ १४

[1]पुंस्कामां शङ्कमानश्च चुकोप स निशाचरः ॥ १४॥

संक्रुद्धो राक्षसस्तस्या भगिन्याः कुरुसत्तम ।

विष्फार्य विपुले नेत्रे ततस्तामिदमब्रवीत् ॥ १५॥

हिडिम्बः—

कस्मान्मे भोक्तुकामस्य विघ्नं चरसि दुर्मते ।

न बिभेषि हिडिम्बे किं कामाद्वै विप्रमोहिता ॥ १६॥

---

1. क-ख-ग—अवेक्षमाणस्तस्याश्च हिडिम्बो मानुषं वपुः ।
स्रग्दामभूषितशिखां समग्रेन्दुनिभाननाम् ॥
सुभ्रूनासाक्षिकेशान्तां सुकुमारनखत्वचम् ।
सर्वाभरणसंयुक्तां सुसूक्ष्माम्बरधारिणीम् ॥
भगिनीं मानुषं रूपं बिभ्रतीं सुमनोहरम्। [अधिकः पाठः]
ग—स ददर्शाग्रतस्तस्य भीमस्य पुरुषादकः ॥ [अधिकः पाठः]

धिक् त्वां पुरुषकामां वै मम विप्रियकारिणीम् ।
कुलस्य राक्षसेन्द्राणां सर्वेषामयशस्करीम् ॥ १७॥
यानिमानाश्रिताऽकार्षीर् विप्रियं सुमहन्मम ।
एष तानाशु सर्वांस्तु हनिष्यामि त्वया सह ॥ १८॥

वैशम्पायनः—

एवमुक्त्वा हिडिम्बीं स हिडिम्बो लोहितेक्षणः ।
वधायाभिपपातैनान् दन्तान् दन्तेषु निष्कषन् ॥ १९॥
गर्जन्तमेवं विजने भीमसेनोऽभिवीक्ष्य तम् ।
रक्षन् प्रबोधं भ्रातॄणां मातुश्च परवीरहा ॥ २०॥
आपतन्तं च संप्रेक्ष्य भीमः प्रहरतां वरः ।
भर्त्सयामास तेजस्वी तिष्ठ तिष्ठेति चाब्रवीत् ॥ २१॥

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्याम्
आदिपर्वणि अष्टचत्वारिंशदधिकशततमोऽध्यायः ॥ १४८ ॥
॥ ९ ॥हिडिम्बवधपर्वणि द्वितीयोऽध्यायः ॥ २ ॥
[अस्मिन्नध्याये २१॥ श्लोकाः]

---

## ॥ एकोनपञ्चाशदधिकशततमोऽध्यायः ॥

भीमहिडिम्बयोर्युद्धम् ॥ १ ॥

---

वैशम्पायनः—

भीमसेनस्तु तं दृष्ट्वा राक्षसं प्रहसन्निव ।
भगिनीं प्रति संक्रुद्धम् इदं वचनमब्रवीत् ॥ १

किं ते प्रियं हिडिम्बैतैः सुखसुप्तैः प्रबोधितैः ।
मामासाद्य दुर्बुद्धे तरसा त्वं नराशन ॥ २

राक्षस त्वमिमां चैव न स्त्रियं हन्तुमर्हसि ।
विशेषतोऽनपकृते परेणापकृते सति ॥ ३

न हीयं स्ववशा बाला मां तु कामयतेऽद्य वै ।
प्रेषितैषा ह्यनङ्गेन शरीरान्तरचारिणा ॥ ४

भगिनी तव दुर्बुद्धे राक्षसानां यशोहर ।
त्वन्नियोगेन चायाता रूपं मम निरीक्ष्य च ॥ ५

कामयत्येवमवशा नैषा दूषयते कुलम् ॥ ५॥

[1]अनङ्गेन कृते दोषे नेमां त्वमिह राक्षस ।
मयि तिष्ठति दुष्टात्मन् भगिनीं हन्तुमर्हसि ॥ ६॥

[2]समागच्छ मया सार्धम् एकेनैको नराशन ।
[3]अहमेव तु नेष्यामि त्वामद्य यमसादनम् ॥ ७॥

अद्य ते तलनिष्पिष्टं सिंहेनेव बलीयसा ।
[4]अद्य गात्राणि गृध्राश्च बला गोमायवस्तथा ॥ ८॥

---

1. ब—हन्तुमर्हसि दुर्बुद्धे चरश्रेत् संहर स्मरम् । [अधिकः पाठः]
2. ब—मदर्थे कामबाणार्तां त्वामहं हन्मि राक्षस । [अधिकः पाठः]
3. क-ब-ग—अद्य ते तलनिष्पिष्टं शिरो राक्षस दीर्यताम् ।
4. ब—शतधा भेदमायाति पूर्गकुम्भ इवाश्मनि ।
कुञ्जरस्येव निष्पिष्टं सिंहेनेव बलीयसा ॥

[अधिकः पाठः]

कर्षन्तु भुवि संहृष्टा निहतस्य मया मृधे ॥ ९
क्षणेनाद्य करिष्यामि वनं निहतकण्टकम् ।
पुरस्ताद्दूषितं नित्यं त्वया भक्षयता वनम् ॥ १०
अद्य त्वां भगिनी पापं कृष्यमाणं मया भुवि ।
द्रक्ष्यत्यद्रिप्रतीकाशं सिंहेनेव महाद्विपम् ॥ ११
निराबाधास्त्वयि हते मया राक्षसपांसन ।
वनमेतच्चरिष्यन्ति पुरुषा वनचारिणः ॥ १२

राक्षसः—

गर्जितेन भृशं किं ते कत्थनेन च मानव ।
कृत्वा तु कर्मणा सर्वं कत्थेथा मा चिरं कृथाः ॥ १३
बलिनं मन्यसे यस्माद् आत्मानं सपराक्रमम् ।
ज्ञास्यसेऽद्य मयाऽऽगम्य बलहीनं ततो भुवि ॥ १४
नेमांस्तावद्धनिष्यामि स्वपन्त्वेते यथासुखम् ।
एष त्वामेव दुर्बुद्धे हनिष्येऽप्रियवादिनम् ॥ १५
पीत्वा तवासृग्गात्रेभ्यस् ततः पश्चादिमानपि ।
हनिष्यामि ततः क्षुद्राम् इमां विप्रियकारिणीम् ॥ १६

वैशंपायनः—

एवमुक्त्वा [1]महाबाहुः संनद्धः पुरुषादकः ।

---

1. ब—ऽभ्यद्रवद्भीमः संक्रुद्धो भैरवं नदन् ।

अभ्यधावत् सुसंक्रुद्धो भीमसेनमरिन्दमम् ॥ १७

[1]तस्याभिपततस्तूर्णं भीमो भीमपराक्रमः ।
वेगेन प्रसृतं बाहुं निजग्राह हसन्निव ॥ १८

निगृह्य तं बलाद्भीमो विस्फुरन्तं चकर्ष ह ।
तस्माद्देशाद्धनूंष्यष्टौ सिंहः क्षुद्रमृगं यथा ॥ १९

तदा स राक्षसः क्रुद्धः पाण्डवेन बलाद्धृतः ।
भीमसेनं समालिङ्ग्य व्यनदद्भैरवं स्वनम् ॥ २०

पुनर्भीमो बलादेव विचकर्ष महाबलः ।
मा शब्दस्सुखसुप्तानां भ्रातॄणां मे भवेदिति ॥ २१

[2]अन्योन्यं तौ समालिङ्ग्य विचकर्षतुरोजसा ।
राक्षसो भीमसेनश्च विक्रमं चक्रतुः परम् ॥ २२

[3]बभञ्जतुर्महावृक्षांल्लताश्च विचकर्षतुः । •

---

1. घ-विवृतास्यो विवृत्ताक्षो भुजमुद्यम्य वेगवान् । [अधिकः पाठः]
2. क-ख-ग—हस्ते गृहीत्वा तद्रक्षो दूरमन्यत्र नीतवान् ।
पुच्छे गृहीत्वा तुण्डेन गरुडः पन्नगं यथा ॥
[अधिकः पाठः]
3. क-ख-ग-घ—भङ्क्त्वा वृक्षान् महाशाखांस्ताडयामासतुस्तदा ।
सालतालतमालाम्रवटार्जुनविभीतकान् ॥ १
न्यग्रोधप्लक्षखर्जूरपनसानश्मकण्टकान् ।
एतानन्यान् महावृक्षान् उत्खाय तरसाऽखिलान् ॥ २
उत्खायान्योन्यरोषेण ताडयामासतू रणे ।
यथाऽभवद्वनं सर्वं निर्वृक्षं वृक्षसङ्कुलम् ।' ३

प्रमत्ताविव सङ्क्रुद्धौ मातङ्गौ षष्टिहायनौ ॥ २३

पादपानुद्वहन्तौ तावूरुवेगेन वेगितौ ।
स्फोटयन्तौ लताजालान्यूरुभ्यां प्राप्य सर्वतः ॥ २४

वित्रासयन्तौ शब्देन सर्वतो मृगपक्षिणः
बलेन बलिनौ मत्तावन्योन्यवधकाङ्क्षिणौ ॥ २५

भीमराक्षसयोर्युद्धं तदाऽवर्तत दारुणम् ॥ २५॥
[1]ऊरुबाहुपरिक्लेशात् कर्षन्तावितरेतरम् ।

उत्कर्षणं विकर्षणम् अपकर्षणमेव च ॥ २६॥
ततश्शब्देन महता गर्जन्तौ तौ परस्परम् ।

पाषाणसंघट्टनिभैः प्रहारैरभिजघ्नतुः ॥ २७॥
अन्योन्यं तौ समालिङ्ग्य विकर्षन्तौ परस्परम् ॥ २८

---

पूर्वतोऽनुवृत्तम्—

तदा शिलाश्च कुञ्जांश्च वृक्षान् कण्टकिनस्तथा ।
ततस्तौ गिरिश्रृङ्गाणि पर्वतांश्चाभ्रलेलिहान् ॥ ४

शिलाश्च गण्डपाषाणान् उत्खायादाय वैरिणौ ।
विक्षेपतुरुपर्याजावन्योन्यमरणैषिणौ ॥ ५

तद्वनं परितः पञ्चयोजनं निर्महीरुहम् ।
निर्लताकुञ्जपाषाणपर्वतं चक्रतुस्तदा ॥ ६

तयोर्युद्धेन राजेन्द्र तद्वनं भीमरक्षसोः ।
मुहूर्तेनाभवत्कूर्मपृष्ठवच्छ्लक्ष्णमव्रणम् ॥ [अधिकः पाठः]

1. क-ग—पुरा देवासुरे युद्धे वृत्रवासवयोरिव ।　　[अधिकः पाठः]

[1]तयोश्शब्देन महता विबुद्धास्ते नरर्षभाः ।
सह मात्राऽथ ददृशुर् हिडिम्बीमग्रतःस्थिताम् ॥ २९

इति श्रीमन्महाभारते शतसहस्रिकायां संहितायां वैयासिक्याम्
आदिपर्वणि एकोनपञ्चाशदधिकशततमोऽध्यायः ॥ १४९ ॥
॥ ९ ॥ हिडिम्बवधपर्वणि तृतीयोऽध्यायः ॥ ३ ॥
[अस्मिन्नध्याये २९ श्लोकाः]

---

## ॥ पञ्चाशदधिकशततमोऽध्यायः ॥

कुन्तीहिडिम्बीसंवादः १ ॥ हिडिम्बीवार्तया भीमं हिडिम्बेन युध्यमानं ज्ञातवतां कुन्त्यादीनां तत्र गमनम् ॥ २ ॥ हिडिम्बवधः ॥ ३ ॥

---

वैशम्पायनः—

प्रबुद्धास्ते हिडिम्बाया रूपमालोक्य शोभनम् ।
विस्मिताः पुरुषव्याघ्रा बभूवुः पृथया सह ॥ १

ततः कुन्ती समीक्ष्यैनां विस्मिता रूपसंपदा ।
उवाच मधुरं वाक्यं सान्त्वपूर्वमिदं शनैः ॥ २

कुन्ती—

कस्य त्वं सुरगर्भाभे का वाऽसि वरवर्णिनि ।
केन कार्येण सुभगे कुतश्चागमनं तव ॥ ३

---

1. क-ख-ग—बाहुयुद्धमभूद्घोरं बलिवासवयोरिव ।
युद्धसंरम्भनिर्गच्छत्फूत्काररवनिस्वनम् ॥ [अधिकः पाठः]

यदि वाऽसि वनस्यास्य देवता यदि वाऽप्सराः ।
आचक्ष्व मम तत्सर्वं किमर्थं चेह तिष्ठसि ॥ ४

हिडिम्बी—

यदेतत्पश्यसि वनं नीलमेघनिभं महत् ।
निवासो राक्षसस्यैष हिडिम्बस्य ममैव च ॥ ५

तस्य मां राक्षसेन्द्रस्य भगिनीं विद्धि भामिनि ।
भ्रात्रा संप्रेषितामार्ये त्वां सपुत्रां जिघांसता ॥ ६

क्रूरबुद्धेरहं तस्य वचनादागता त्विह ।
अद्राक्षं हेमवर्णाभं तव पुत्रं वृकोदरम् ॥ ७

ततोऽहं सर्वभूतानां भावे विचरता शुभे ।
चोदिता तव पुत्रार्थं मन्मथेन वशानुगा ॥ ८

ततो वृतो मया भर्ता तव पुत्रस्त्वनिन्दिते ।
अपनेतुं व्यवसितो न चैवं शकितो मया ॥ ९

चिरायमाणां मां ज्ञात्वा ततोऽयं पुरुषादकः ।
स्वयमेवागतो हन्तुम् इमान् सर्वांस्तवात्मजान् ॥ १०

स तेन तव पुत्रेण मम कान्तेन धीमता ।
बलादितो विनिक्षिप्य अपकृष्टो महात्मना ॥ ११

[1]विकर्षन्तौ महावेगौ गर्जन्तौ च परस्परम् ।
पश्य त्वं युधि विक्रान्तौ तावेतौ नरराक्षसौ ॥ १२

---

1. क-ख-ग—निष्पिषन्तौ

वैशम्पायनः—

ततस्तस्या वचश्श्रुत्वा उत्पपात युधिष्ठिरः ।
अर्जुनो नकुलश्चैव सहदेवश्च वीर्यवान् ॥ १३

तौ ते ददृशुरासक्तौ विकर्षन्तौ परस्परम् ।
काङ्क्षमाणौ जयं चैव सिंहाविव रणोत्कटौ ॥ १४

तावन्योन्यं समाश्लिष्य [1]निष्पतन्तौ परस्परम् ।
दावाग्निधूमसङ्काशं चक्रतुः पार्थिवं रजः ॥ १५

वसुधारेणुसंवीतौ वसुधाधरसन्निभौ ।
विभ्राजेते यथा शैलौ नीहारेणाभिसंवृतौ ॥ १६

ते पश्यन्तो महद्युद्धं सर्वे व्यथितचेतसः ॥ १६॥

राक्षसेन बलाद् भीमं क्लिश्यमानं निरीक्ष्य च ।
चिरप्रयुद्धौ दृष्ट्वा च अन्योन्यवधकाङ्क्षया ॥ १७॥

उवाचेदं वचः पार्थः प्रहसन्निव भारत ॥ १८

अर्जुनः—

भीम मा भैर्महाबाहो न त्वां बुध्यामहे वयम् ।
समेतं भीमरूपेण प्रसुप्ताश्श्रमकर्शिताः ॥ १९

साहाय्येऽस्मि स्थितः पार्श्वे योधयिष्यामि राक्षसम् ।
नकुलस्सहदेवश्च मातरं गोपायिष्यतः ॥ २०

---

1. क-ख-ग—निष्पिषन्तौ

भीमः—

उदासीनो निरीक्षस्व न कार्यस्संभ्रमस्त्वया ।
न जात्वयं पुनर्जीवेन्मद्भुजान्तरमागतः ॥ २१

[1]अयमस्मांस्तु नो हन्याज् जातु वै पार्थ राक्षसः ।
जीवन्तं न प्रमोक्ष्यामि मा भैषीर्भरतर्षभ ॥ २२

अर्जुनः—

पूर्वरात्रे प्रबुद्धोऽसि भीम क्रूरेण रक्षसा ।
क्षपा व्युष्टा न चेदानीं समाप्नोषि महारणम् ॥ २३

किमनेन चिरं भीम जीवता दुष्टचारिणा ।
नान्तरेण चिरं स्थातुम् इह शक्यं परन्तप ॥ २४

पुरा संरज्यते प्राची पुरा सन्ध्या प्रवर्तते ।
रौद्रे मुहूर्ते रक्षांसि भवन्ति बलवन्ति च ॥ २५

त्वरस्व भीम मा लीला जहि रक्षो विभीषणम् ।
पुरा विकुरुते मायां भुजयोस्सारमर्पय ॥ २६

माहात्म्यमात्मनो वेत्थ नराणां हितकाम्यया ।
रक्षो जहि यथा शक्रः पुरा वृत्रं महाहवे ॥ २७

अथवा मन्यसे भारं त्वमिमं राक्षसं युधि ।

1. क-ग-घ—भुजयोरन्तरं प्राप्तो भीमसेनस्य राक्षसः ।
अमुक्त्वा पार्थ वीर्येण मृतो माभूदिति ध्वनिः ॥
[अधिकः पाठः]

आतिष्ठे तव साहाय्यं शीघ्रमेव तु हन्यताम् ॥ २८

[1]अथवा ह्यहमेवैनं हनिष्यामि वृकोदर ।
कृतकर्मा परिश्रान्तः साधु तावदुपारम ॥ २९

वैशंपायनः—

अर्जुनेनैवमुक्तस्तु भीमो भीमस्य रक्षसः ।
उत्क्षिप्य भ्रामयत्तूर्णं देहं शतगुणाधिकम् ॥ ३०

इति चोवाच संक्रुद्धो भ्रामयन् राक्षसं तु सः ।
भीमसेनो महाबाहुर् अभिगर्जन् मुहुर्मुहुः ॥ ३१

भीमसेनः—

वृथा मांसैर्वृथा पुष्टो वृथा वृद्धो वृथामतिः ।
वृथा मरणमर्हस्त्वं वृथैव विनशिष्यसि ॥ ३२

क्षेममेतत् करिष्यामि यथा वनमकण्टकम् ।
न पुनर्मानुषान् हत्वा भक्षयिष्यसि राक्षस ॥ ३३

वैशंपायनः—

इत्युक्त्वा भीमसेनस्तं निष्पिष्य धरणीतले ।
बाहुभ्यामवपीड्याशु पशुमारममारयत् ॥ ३४

[2]स मार्यमाणो भीमेन ननाद विपुलं स्वनम् ।
पूरयंस्तद्वनं सर्वं जलार्द्र इव दुन्दुभिः ॥ ३५

---

1. अ—कथं वा
2. अ—अथैनमाक्षिप्य बलात् पशुवच्चाप्यमारयत् । [अधिकः पाठः]

भुजाभ्यां योक्त्रयित्वा तु बलवान् पाण्डुनन्दनः ।
समुद्गृह्य शिरश्चास्य सग्रीवं तदुपाक्षिपत् ॥ ३६

[1]तस्य निष्कर्णनयनं निर्जिह्वं रुधिरोक्षितम् ।
[2]प्रपीडं भीमसेनेन शिरो विदशनं बभौ ॥ ३७

प्रसारितभुजोद्वृष्टो भिन्नमांसत्वगन्तरः ।
कवन्धभूतस्तत्रासीद् अद्रिर्वज्रहतो यथा ॥ ३८

हिडिम्बं निहतं दृष्ट्वा प्रहृष्टास्तत्र पाण्डवाः ।
हिडिम्बी चैव संप्रेक्ष्य निहतं राक्षसं रणे ॥ ३९

अदृष्टाश्चैव ये खस्थास् समेता भूतवादिकाः ।
पूजयन्ति स्म संहृष्टास् साधु साध्विति पाण्डवम् ॥ ४०

भ्रातरश्चापि संहृष्टा युधिष्ठिरपुरोगमाः ।
अपूजयन् नरव्याघ्रं भीमसेनमरिन्दमम् ॥ ४१

अभिपूज्य महात्मानं भीमं भीमपराक्रमम् ।
पुनरेवार्जुनो वाक्यम् उवाचेदं वृकोदरम् ॥ ४२

अर्जुनः—

अदूरे नगरं मन्ये वनादस्मादहं प्रभो ।
शीघ्रं गच्छाम भद्रं ते न नो विद्यात् सुयोधनः ॥ ४३

---

1. क-ख-ग-घ—ततो भित्त्वा शिरश्चास्य सग्रीवं तदुदाक्षिपत् ।
[अधिकः पाठः]

2. क-ख-ग—प्रविद्धं; घ—प्राविध्य भीमसेनश्च ।

वैशम्पायनः—

ततस्सर्वे तथेत्युक्त्वा मात्रा सह महारथाः ।
प्रययुः पुरुषव्याघ्रा हिडिम्बी चैव राक्षसी ॥ ४४

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्याम्
आदिपर्वणि पञ्चाशदधिकशततमोऽध्यायः ॥ १५० ॥
॥ ९ ॥ हिडिम्बवधपर्वणि चतुर्थोऽध्यायः ॥ ४ ॥
[ अस्मिन्नध्याये ४४ श्लोकाः ]

---

## ॥ एकपञ्चाशदधिक शततमोऽध्यायः ॥

हिडिम्बीवधे प्रवृत्तस्य भीमस्य युधिष्ठिरकृतं निवारणम् ॥ १ ॥ हिडिम्बया स्वस्य धर्मज्ञत्वस्य भविष्यज्ज्ञत्वस्य च प्रकटनम् ॥ २ ॥ हिडिम्बाया धर्मिष्ठतां ज्ञात्वा तदङ्गीकरणे भीमं प्रति कुन्त्या आज्ञा ॥ ३ ॥

---

वैशम्पायनः—

सा [1]तानेवापतत्तूर्णं भगिनी तस्य रक्षसः ।
अब्रुवाणा हिडिम्बी तु राक्षसी पाण्डवान् प्रति ॥ १

अभिवाद्य ततः कुन्तीं धर्मराजं च पाण्डवम् ।
अभिपूज्य च तान् सर्वान् भीमसेनमभाषत ॥ २

हिडिम्बी—

अहं ते दर्शनादेव मन्मथस्य वशं गता ।
क्रूरं भ्रातृवशं हित्वा सा त्वामेवानुरुन्धती ॥ ३

---

1. क-ख-ग-घ—ततो ग्यपतत्

राक्षसे रौद्रसङ्काशे तवापश्यं विचेष्टितम् ।
अहं शुश्रूषुरिच्छेयं तव गात्रं निषेवितुम् ॥ ४

भीमसेनः—

स्मरन्ति वैरं रक्षांसि मायामास्थाय मोहिनीम् ।
हिडिम्बि व्रज पन्थानं मा त्वं भ्रातृनिषेवितम् ॥ ५

युधिष्ठिरः—

क्रुद्धोऽपि पुरुषव्याघ्र भीम मा च स्त्रियं वधीः ।
शरीरगुप्त्यभ्यधिकं धर्मं गोपाय पाण्डव ॥ ६

वधाभिप्रायमवधीस् त्वं महाबलराक्षसम् ।
रक्षसस्तस्य भगिनी किं नः क्रुद्धा करिष्यति ॥ ७

वैशम्पायनः—

हिडिम्बी तु ततः कुन्तीम् अभिवाद्य कृताञ्जलिः ।
युधिष्ठिरं तु कौन्तेयम् इदं वचनमब्रवीत् ॥ ८

हिडिम्बी—

आर्ये जानासि यद्दुःखम् इह स्त्रीणामनङ्गजम् ।
तदिदं मामनुप्राप्तं भीमसेनकृतं शुभे ॥ ९

साऽहं तत् परमं दुःखं [1]सहे कालप्रतीक्षया ।
सोऽयमभ्यागतः कालो भविता मे सुखावहः ॥ १०

मया ह्युत्सृज्य सुहृदो ज्ञातीन् स्वं धर्ममेव च ।

1. अ—सेहे

वृतोऽयं पुरुषव्याघ्रस् तव पुत्रः पतिश्शुभः ॥ ११

वरेणानेन तु विना नाहं जीवितुमुत्सहे ।

तदर्हसि कृपां कर्तुं मयि त्वं वरवर्णिनि ॥ १२

त्वं मां मूढेति वा मत्वा भक्तां वाऽनुगतेति वा ।

भर्त्राऽनेन महाभागे योजयस्व सुतेन ते ॥ १३

तमुपादाय गच्छेयं यथेष्टं देवरूपिणम् ।

पुनश्चैवानयिष्यामि विस्रम्भं कुरु मे शुभे ॥ १४

अहं समुपलप्स्ये प्राङ् मङ्गातुरुपवर्जनात् ॥ १४॥

ततस्सोऽभ्यपतद्रात्रौ भीमसेनजिघांसया ॥ १५

यथा यथा विक्रमते यथा चरति तिष्ठते ।

तथा तथा समाधाय पाण्डवं काममोहिता ॥ १६

न यातुधान्यहं त्वार्ये न चास्मि रजनीचरी ।

[1]कन्या रक्षस्सु साध्व्यस्मि राज्ञि सालकटङ्कटी ॥ १७

पुत्रेण तव संयुक्ता युवतिर्देववर्णिनी ।

सर्वान् वोऽहमुपस्थास्ये पुरस्कृत्य वृकोदरम् ॥ १८

अप्रमत्ता प्रमत्तेषु शुश्रूषुरसकृत्त्वहम् ।

वृजिनं तारयिष्यामि दासीवच्च नरर्षभ ॥ १९

पृष्ठेन वः प्रवक्ष्यामि क्षणेन गतिमीप्सिताम् ।

1. च—ईशा रक्षस्सु साध्व्यस्मि राज्ञा

एवं ब्रुवन्ती हि तथा प्रत्याख्याता क्रियां प्रति ॥ २०
लभ्यान् दुष्कृतिनो लोकान् गमिष्येऽहं न संशयः ॥ २०॥
अहं हि मनसा ध्यात्वा सर्वं वेत्स्यामि सर्वदा ।
[1]आपन्निस्तरणे प्राणान् धारयेद्येन केनचित् ॥ २१॥
सर्वमापत्सु कर्तव्यं तद्धर्ममनुपश्यताम् ।
आपत्सु यो धारयति स वै धर्मविदुत्तमः ॥ २२॥
व्यसनं ह्येव धर्मस्य धर्मिणामापदुच्यते ।
पुण्यम् प्राणान् धारयति पुण्यं वै प्राणधारणम् ॥ २३॥
येन येन चरेद्धर्मं तस्मिन् गर्हा न विद्यते ।
महतोऽत्र स्त्रियं कामाद् बाधितां त्राहि मामपि ॥ २४॥
धर्मार्थकाममोक्षेषु दयां कुर्वन्ति साधवः ।
तं तु धर्ममिति प्राहुर् मुनयो धर्मवत्सलाः ॥ २५॥
दिव्यज्ञानेन पश्यामि अतीतानागतानहम् ।
तस्माद्वक्ष्यामि वश्श्रेय आसन्नं सर उत्तमम् ॥ २६॥
अद्यासाद्य सरस्स्नात्वा विश्रम्य च वनस्पतौ ।
श्वः प्रभाते महद्भूतं प्रादुर्भूतं जगत्पतिम् ॥ २७॥
व्यासं कमलपत्राक्षं दृष्ट्वा शोकं विहास्यथ ॥ २८
धार्तराष्ट्राद्विवासश्च दहनं वारणावते ।

---

1. क-ख-ग-घ—यूयं प्रसादं कुरुत भीमसेनो भजेत माम् ॥
[अधिकः पाठः]

त्राणं च विदुरात्तुभ्यं विदितं ज्ञानचक्षुषा ॥ २९

आवासे शालिहोत्रस्य स च वासं विधास्यति ॥ २९॥

वर्षवातातपसह अयं पुण्यो वनस्पतिः ॥ ३०

पीतमात्रे तु पानीये क्षुत्पिपासे विनश्यतः ॥ ३०॥

तपसा शालिहोत्रेण सरो वृक्षश्च निर्मितः ॥ ३१

कादम्बास्सारसा हंसाः कुरर्यः कुररैस्सह ।

रुवन्ति मधुरं गीतं गान्धर्वस्वनमिश्रितम् ॥ ३२

वैशम्पायनः—

तस्यास्तद्वचनं श्रुत्वा कुन्ती वचनमब्रवीत् ।

युधिष्ठिरं महाप्राज्ञं सर्वशास्त्रविशारदम् ॥ ३३

कुन्ती—

त्वं हि धर्मभृतां श्रेष्ठ मयोक्तं शृणु भारत ।

राक्षस्येषा हि वाक्येन धर्मं वदति साधु वै ॥ ३४

भावेन दुष्टा भीमं सा किं करिष्यति राक्षसी ।

भजतां पाण्डवं वीरम् अपत्यार्थं यदीच्छसि ॥ ३५

युधिष्ठिरः—

एवमेतद्यथाऽऽत्थ त्वं हिडिम्बे नात्र संशयः ।

स्थातव्यं तु त्वया धर्मे यथा ब्रूयास्सुमध्यमे ॥ ३६

नित्यं कृताह्निका स्नाता कृतशौचा सुरूपिणी ।

स्नातं कृताह्निकं भद्रे कृतकौतुकमङ्गलम् ॥ ३७
भीमसेनं भजेथास्त्वम् उदिते वै दिवाकरे ॥ ३७॥

अहस्सु विचरानेन यथाकामं मनोजवा ।
आनेतव्यस्त्वया भद्रे भीमसेनस्त्वयं निशि ॥ ३८॥

प्राक्सन्ध्यातो विमोक्तव्यो रक्षितव्यश्च नित्यशः ।
एवं रमस्व भीमेन यावद्गर्भस्य वेदनम् ॥ ३९॥

एष ते समयो भद्रे शुश्रूष्यश्चाप्रमत्तया ।
नित्यानुकूलया भूत्वा कर्तव्यं शोभनं त्वया ॥ ४०॥

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्याम्
आदिपर्वणि एकपञ्चाशदधिकशततमोऽध्यायः ॥ १५१ ॥
॥ ९ ॥ हिडिम्बवधपर्वणि पञ्चमोऽध्यायः ॥ ५ ॥
[अस्मिन्नध्याये ४०॥ श्लोकाः]

---

## ॥ द्विपञ्चाशदधिकशततमोऽध्यायः ॥

---

हिडिम्बया सह पाण्डवानां शालिहोत्रसरोगमनम् ॥१॥ समयकरणपूर्वं भीमेन हिडिम्ब्याः परिग्रहः ॥ २ ॥ रमणीयेषु प्रदेशेषु भीमेन सह क्रीडित्वा सायाह्ने शालिहोत्राश्रमं प्रति हिडिम्बानिवर्तनम् ॥ ३ ॥

---

वैशम्पायनः—

युधिष्ठिरेणैवमुक्ता कुन्त्या चाङ्केऽधिरोपिता ।
भीमार्जुनान्तरगता यमाभ्यां च पुरस्कृता ॥ १

तिर्यग्युधिष्ठिरे याति हिडिम्बा भीमगामिनी ॥ १॥
शालिहोत्रसरो रम्यम् आसेदुस्ते जलार्थिनः ॥ २

तत्तथेति प्रतिज्ञाय हिडिम्बा राक्षसी तदा ।
वनस्पतितलं गत्वा परिमृज्य यथा गृहान् ॥ ३

पाण्डवानां च वासं सा कृत्वा पर्णमयं तथा ।
आत्मनश्च तथा कुन्त्या एकोद्देशे चकार सा ॥ ४

पाण्डवास्तु ततस्स्नात्वा शुद्धास्सन्ध्यामुपास्य च ।
तृषिताः क्षुत्पिपासार्ता जलमात्रेण वर्तयन् ॥ ५

शालिहोत्रस्ततो ज्ञात्वा क्षुधार्तान् पाण्डवांस्तदा ।
मनसा चिन्तयामास पानीयं भोजनं महत् ॥ ६

ततस्ते पाण्डवास्सर्वे विश्रान्ताः पृथया सह ॥ ६॥

यथा जतुगृहे वृत्तं राक्षसेन कृतं च यत् ।
कृत्वा कथा बहुविधाः कथान्ते पाण्डुनन्दनम् ॥ ७॥
कुन्ती राजसुता वाक्यं भीमसेनमथाब्रवीत् ॥ ८

कुन्ती—

यथा पाण्डुस्तथा मान्यस् तव ज्येष्ठो युधिष्ठिरः ।
अहं धर्मविधानेन मान्या गुरुतरी तव ॥ ९

तस्मात् पाण्डुहितार्थं मे युवराज हितं कुरु । ९॥
निकृता धार्तराष्ट्रेण पापेनाकृतबुद्धिना ।

दुष्कृतस्य प्रतीकारं न पश्यामि वृकोदर ॥ १०॥
तस्मात् कतिपयाहेन योगक्षेमं भविष्यति ॥ ११

क्षेमं दुर्गमिमं वासं वसिष्यामो यथासुखम् ॥ ११॥
इदमद्य महद्दुःखं धर्मकृच्छ्रं वृकोदर ॥ १२

दृष्ट्वैव त्वां महाप्राज्ञ अनङ्गाभिप्रचोदिता ।
युधिष्ठिरं च मां चैव वरयामास धर्मतः ॥ १३

धर्मार्थे देहि पुत्रं त्वं स नश्श्रेयः करिष्यति ।
प्रतिवाक्यं तु नेच्छामि ह्यावाभ्यां वचनं कुरु ॥ १४

वैशम्पायनः—

तथेति तत् प्रतिज्ञाय भीमसेनोऽब्रवीदिदम् ।

भीमसेनः—

शासनं ते करिष्यामि वेदशासनमित्यपि ॥ १५

वैशम्पायनः—

समक्षं भ्रातृमध्ये तु भीमसेनोऽब्रवीदिदम् ॥ १५॥

भीमसेनः—

शृणु राक्षसि सत्येन समयं ते वदाम्यहम् ॥ १६

यावत्कालेन भवति अपत्योत्पादनं शुभे ।
तावत्कालं चरिष्यामि त्वया सह सुमध्यमे ॥ १७

विशेषतो मत्सकाशे मा प्रकाशय नीचताम् ।
उत्तमस्त्रीगुणोपेता भजेथा वरवर्णिनि ॥ १८

वैशम्पायनः—

सा तथेति प्रतिज्ञाय हिडिम्बी राक्षसी तदा ।
गताऽहनि निवेशेषु भोज्यं राजार्हमानयत् ॥ १९

सा कदाचिद्विहारार्थे हिडिम्बी कामचारिणी ।
भीमसेनमुपादाय ऊर्ध्वमाचक्रमे ततः ॥ २०

वनेषु च सशैलेषु देवतायतनेषु च ।
मृगपक्षिविघुष्टेषु रमणीयेषु सर्वतः ॥ २१

कृत्वा सा परमं रूपं सर्वाभरणभूषिता ।
संजल्पन्ती सुमधुरं रमयामास पाण्डवम् ॥ २२

तथैव वनदुर्गेषु पर्वतद्रुमसानुषु ।
सरस्सु रमणीयेषु पद्मोत्पलवनेषु च ॥ २३

नदीद्वीपप्रदेशेषु [1]मणिहेमयुतेषु च ।
पत्तनेषु च रम्येषु महासालवनेषु च ॥ २४

देवारण्येषु पुण्येषु तापसायतनेषु च ।
[2]गुह्यकानां निवासेषु कुलपर्वतसानुषु ॥ २५

सर्वर्तुफलवृक्षेषु मानसेषु वनेषु च ।
बिभ्रती परमं रूपं रमयामास पाण्डवम् ॥ २६

---

1. क-ख-ग—वैडूर्यसिकतेषु च; घ—वैडूर्यविकृतेषु च ।
2. ख—सुतीर्थवनतोयासु तथा गिरिनदीषु च ।
सागरस्य प्रदेशेषु मणिहेमयुतेषु च ॥ [अधिकः पाठः]

यथा च सुकृती स्वर्गे मोदतेऽप्सरसा सह ।
स तथा परमप्रीतस् तया रेमे महाद्युतिः ॥ २७

शुभं हि जघनं तस्यास् सुवर्णमणिमेखलम् ।
न ततर्प मुदा मृद्नन् भीमसेनो मुहुर्मुहुः ॥ २८

रमयन्ती ततो भीमं तत्र तत्र मनोजवा ।
सा रेमे तेन संहर्षाद् अतृप्यन्ती मुहुर्मुहुः ॥ २९

अहस्सु विचरन्ती सा निशाकालेषु पाण्डवम् ।
आनीय वै स्वके गेहे दर्शयामास मातरम् ॥ ३०

भ्रातृभिस्सहितो नित्यं स्वपते पाण्डवस्तदा ॥ ३०॥

कुन्त्याः परिचरन्ती सा तस्याः पार्श्वे वसन्निशाम् ।
कामांश्च मुखवासादीन् आनयिष्यति भोजनम् ॥ ३१॥

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्याम्
आदिपर्वणि द्विपञ्चाशदधिकशततमोऽध्यायः ॥ १५२ ॥

॥ ९ ॥ हिडिम्बवधपर्वणि षष्ठोऽध्यायः ॥ ६ ॥

[अस्मिन्नध्याये ३१॥ श्लोकाः ।]

---

## ॥ त्रिपञ्चाशदधिकशततमोऽध्यायः ॥

व्यासागमनम् । ॥१॥ तेन कुन्त्या आश्वासनम् । ॥२॥ व्यासस्य प्रतिनिवर्तनं च ॥३॥ घटोत्कचोत्पत्तिः ॥४॥ पाण्डवानां एकचक्रा प्रवेशः ॥ ५ ॥

वैशम्पायनः—

तस्यां रात्र्यां व्यतीतायाम् आजगाम महाव्रतः ।
पाराशर्यो महाप्राज्ञो दिव्यदर्शी महातपाः ॥ १

तेऽभिवाद्य महात्मानं कृष्णद्वैपायनं तदा ।
तस्थुः प्राञ्जलयस्सर्वे सस्नुषा चैव माधवी ॥ २

व्यासः—

मयेदं मनसा पूर्वं विदितं भरतर्षभाः ।
यथा तु तैरधर्मेण धार्तराष्ट्रैर्विवासिताः ॥ ३

तद्विदित्वाऽस्मि संप्राप्तश् चिकीर्षुः परमं हितम् ।
न विषादो हि वः कार्यस् सर्वमेव सुखाय वः ॥ ४

सुहृदां रञ्जनं कर्म पुरा कृतमरिन्दमाः ।
तस्य सिद्धिरियं प्राप्ता मा शोचत परन्तपाः ॥ ५

समाप्ते दुष्कृते ते च यूयं चैव न संशयः ।
स्वराष्ट्रे विहरिष्यन्तो भविष्यथ सबान्धवाः ॥ ६

समाप्ते वत्सरे सर्वे यूयं चैव न संशयः ॥ ६॥

दीनतो बालतश्चैव स्नेहं कुर्वन्ति बान्धवाः ।
तस्मादभ्यधिकस्नेहो युष्मासु मम संप्रति ॥ ७॥
स्नेहपूर्वं चिकीर्षामि हितं यत्तन्निबोधत ॥ ८
वसतेह प्रतिच्छन्ना ममागमनकाङ्क्षिणः ।
एतद्वै शालिहोत्रस्य तपसा निर्मितं सरः ॥ ९
रमणीयमिदं तोयं क्षुत्पिपासाश्रमापहम् ॥ ९॥
कार्यार्थिनस्तु षण्मासान् विहरध्वं यथासुखम् ॥ १०

वैशम्पायनः—

एवं स तान् समाश्वास्य व्यासः पार्थानरिन्दमान् ।
स्नेहात्तु संपरिष्वज्य कुन्तीमाश्वासयत् प्रभुः ॥ ११
स्नुषे मा [1]रोदि मा रोदीत्येवं व्यासोऽब्रवीद्वचः ॥ ११॥

व्यासः

जीवपुत्रे सुतस्तेऽयं धर्मनित्यो युधिष्ठिरः ।
पृथिव्यां पार्थिवान् सर्वान् प्रशासिष्यति धर्मराट् ॥ १२॥
धर्मेण जित्वा पृथिवीम् अखिलां धर्मविद्वशी ।
स्थापयित्वा वशे सर्वां सपर्वतवनां शुभाम् ॥ १३॥
भीमसेनार्जुनबलाद् भोक्ष्यत्ययमसंशयम् ॥ १४
पुत्रास्तव च माद्र्याश्च पञ्चैते पुरुषोत्तमाः ।
स्वराष्ट्रे विहरिष्यन्ति सुखं सुमनसस्तदा ॥ १५

---

1. क-ख-ग-घ—रोद मारोदेत्येवं

यक्ष्यन्ति च नरव्याघ्रा विजित्य पृथिवीमिमाम् ।
राजसूयाश्वमेधाद्यैः क्रतुभिर्भूरिदक्षिणैः ॥ १६
अनुगृह्य सुहृद्वर्गं धनेन च [1]बलेन च ।
पितृपैतामहं राज्यम् आहरिष्यन्ति ते सुताः ॥ १७
[2]स्नुषा कमलपत्राक्षी नाम्ना कमलमालिनी ।
वशवर्तिनी तु भीमस्य पुत्रमेषा जनिष्यति ॥ १८
तेन पुत्रेण कृच्छ्रेषु भविष्यथ च तारिताः । १८॥
इह मासं प्रतीक्षध्वम् आगमिष्याम्यहं पुनः ।
देशकालौ विदित्वैव यास्यध्वं परमां मुदम् ॥ १९॥

वैशम्पायनः—

स तैः प्राञ्जलिभिस्सर्वैस् तथेत्युक्तो जनाधिप ।
जगाम भगवान् व्यासो यथागतमृषिः प्रभुः ॥ २०॥
गते भगवति व्यासे पाण्डवा विगतज्वराः ।
ऊषुस्तत्र च षण्मासान् वटवृक्षे यथासुखम् ॥ २१॥
शाकमूलफलहारास् तपः कुर्वन्ति पाण्डवाः ॥ २२
अनुज्ञाता [3]महाराज ततः कमलमालिका ॥ २२॥

1. क-ख-ग—सुखेन च
2. ग—वैशम्पायनः—
इत्युक्त्वा स महाबुद्धिर्व्यासः कमललोचनः । [अधिकः पाठः]
3. क-ख-ग—तदा राजन् ततः कमलपालिका ।

रमयन्ती सदा भीमं तत्र तत्र मनोजवा ।
दिव्याभरणवस्त्राङ्गी दिव्यस्रगनुलेपना ॥ २३॥

एवं भ्रातॄन् सप्त मासान् हिडिम्बाऽवासयद्वने ।
पाण्डवान् भीमसेनार्थे राक्षसी कामरूपिणी ॥ २४॥

सुखं स विहरन् भीमस् तं कालं प[1]रिणामयत् ॥ २५

ततोऽलभत सा गर्भं राक्षसी कामरूपिणी ।
अतृप्ता भीमसेनस्य सप्तमासोपसंगता ॥ २६

प्रजज्ञे राक्षसी पुत्रं भीमसेनान्महाबलात् ।
विरूपाक्षं महावक्त्रं शङ्कुकर्णं विभीषणम् ॥ २७

भीमरूपं सुताम्राक्षं तीक्ष्णदंष्ट्रं महारथम् ।
महेष्वासं महावीर्यं महासत्वं महाजवम् ॥ २८

महाकायं महाकालं महापादं महाभुजम् ।
अमानुषं मानुषजं भीमवेगमरिन्दमम् ॥ २९

[2]बालोऽपि विक्रमं प्राप्तो मानुषेषु विशांपते ।
सर्वास्त्रेषु परं वीरः प्रकर्षमगमद्बली ॥ ३०

सद्यो हि गर्भं राक्षस्यो लभन्ते प्रसवन्ति च ।

---

1. क-ख-ग—र्यं
2. क-ख-ग-घ—यः पिशाचानतीत्यान्यान् बभूवाति स मानुषान् ।
[अधिकः पाठः]

कामरूपधराश्चैव भवन्ति बहुरूपिणः ॥ ३१

प्रणम्य विकचः पादावगृह्णात् स पितुस्तदा ।
मातुश्च परमेष्वासस् तौ च नामास्य चक्रतुः ॥ ३२

घटोऽहमुत्कचोऽस्मीति मातरं सोऽभ्यभाषत ।
अभवत्तेन नामास्य घटोत्कच इति स्म ह ॥ ३३

अनुरक्तश्च तानासीत् पाण्डवान् स घटोत्कचः ।
[1]तेषां च दयितो नित्यम् आत्मभूतो बभूव ह ॥ ३४

घटोत्कचो महाकायः पाण्डवान् पृथया सह ।
अभिवाद्य यथान्यायम् अब्रवीच्च प्रसाद्य तान् ॥ ३५

किं करोम्यहमार्याणां निश्शङ्कं वदतानघाः ।
इति ब्रुवन्तं भैमसेनिं कुन्ती वचनमब्रवीत् ॥ ३६

कुन्ती—

त्वं कुरूणां कुले जातस् साक्षाद्भीमसुतो ह्यसि ।
ज्येष्ठपुत्रस्तु पञ्चानां साहाय्यं कुरु पुत्रक ॥ ३७

वैशम्पायनः—

पृथयाप्येवमुक्तस्तु प्रणम्यैवं वचोऽब्रवीत् ॥ ३७॥

यथा हि रावणो लोके इन्द्रजिद्वा महाबलः ।
तेषां वीर्यसमो वीर्ये विशिष्टश्चाभवं नृषु ॥ ३८॥

---

1. क-ग—विकीर्णकेशो घटते पितोरग्रे यतस्ततः ।
पुरतः पाण्डवानां च तेनासौ च घटोत्कचः ॥ [अधिकः पाठः]

कृत्यकाल उपस्थास्ये [1]पितॄनिति घटोत्कचः ।
आमन्त्र्य राक्षसश्रेष्ठः प्रतस्थे चोत्तरां दिशम् ॥　　३९॥
स हि सृष्टो भगवता शक्तिहेतोर्महात्मना ।
कर्णस्याप्रतिवीर्यस्य विनाशाय महात्मनः ॥　　४०॥

भीमसेनः—

सहवासो मया जीर्णस् त्वया कमलमालिके ।
पुनर्द्रक्ष्यसि राज्यस्थान् इत्यभाषत तां तदा ॥　　४१॥

हिडिम्बा—

यदा मे त्वं स्मरेः कान्त रिरंसू रहसि प्रभो ।
तदा तव वशं भूय आगन्तास्म्याशु भारत ॥　　४२॥

वैशम्पायनः—

इत्युक्त्वा सा जगामाशु भावमासज्य पाण्डवे ।
हिडिम्बा समयं स्मृत्वा स्वां गतिं प्रत्यपद्यत ॥　　४३॥
ततस्ते पाण्डवास्सर्वे शालिहोत्राश्रमे सदा ।
पूजितास्तेन वन्येन तमामन्त्र्य महामुनिम् ॥　　४४॥
जटाः कृत्वाऽऽत्मनस्सर्वे वल्कलाजिनवाससः ।
कुन्त्या सह महात्मानो बिभ्रतस्तापसं वपुः ॥　　४५॥
ब्राह्मं वेदमधीयाना वेदाङ्गानि च सर्वशः ।

---

1. क-ग-घ—भवत्स्मरणमात्रतः ।
महत्कृच्छ्रे वने दुर्गे पितॄनिति घटोत्कचः॥[अधिकः पाठः]

नीतिशास्त्रं च धर्मज्ञ धर्मज्ञानं च पाण्डवाः ॥ ४६॥
शालिहोत्रप्रसादेन लब्ध्वा प्रीतिमनुत्तमाम् ॥ ४७

ते वनेन वनं गत्वा घ्नन्तो मृगगणान् बहून् ।
अतिक्रम्य ययू राजंस् त्वरमाणा महारथाः ॥ ४८

मत्स्यांस्त्रिगर्तान् पाञ्चालान् कीचकानां वनान्यपि ।
रमणीयान् वनोद्देशान् प्रेक्षमाणास्सरांसि च ॥ ४९

कचिद्वहन्तो जननीं त्वरमाणा महारथाः ।
कचिच्छन्नेन गच्छन्तस् ते जग्मुः पृथया सह ॥ ५०
पथि द्वैपायनं सर्वे ददृशुस्तं पितामहम् ॥ ५०॥

अभिप्रणम्य शिरसा पाराशर्यमुपेत्य च ।
ते पादौ जगृहुस्तस्य सह मात्रा परन्तप ॥ ५१॥

व्यासः—

तदाश्रमाभिगमनं मया ज्ञातं परन्तपाः ।
घटोत्कचस्य चोत्पत्तिं ज्ञात्वा प्रीतिरवर्धत ॥ ५२॥

इदं नगरमभ्याशे रमणीयं निरामयम् ।
वसतेह प्रतिच्छन्ना ममागमनकाङ्क्षिणः ॥ ५३॥

वैशम्पायनः—

एवं स तान् समाश्वास्य व्यासः पार्थानरिन्दमान् ।

एकचक्रामभिगतां कुन्तीमाश्वासयत् प्रभुः ॥ ५४॥

व्यासः—

कुर्यान्न केवलं धर्मं दुष्कृतं च [1]तथा नरः ।
सुकृतं दुष्कृतं लोके न कर्ता [2]नापि शोभने ॥ ५५॥

अवश्यं लभते कर्ता फलं वै पुण्यपापयोः ।
दुष्कृतस्य फलेनैवं प्राप्तं व्यसनमुत्तमम् ॥ ५६॥

तस्मान्माधवि मानार्हे मा च शोके मनः कृथाः ॥ ५७

वैशम्पायनः—

एवमुक्त्वा निवेश्यैनान् ब्राह्मणस्य निवेशने ।
जगाम भगवान् व्यासो यथाकाममृषिः प्रभुः ॥ ५८

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्याम्
आदिपर्वणि त्रिपञ्चाशदधिकशततमोऽध्यायः ॥ १५३ ॥

॥ ९ ॥ हिडिम्बवधपर्वणि सप्तमोऽध्यायः ॥ ७ ॥

[अस्मिन्नध्याये ५८ श्लोकाः]

॥ हिडिम्बवधपर्व समाप्तम् ॥

---

1. अ—नराधमः

2. क-ख-ग-घ—नास्ति

## ॥ चतुःपञ्चाशदधिकशततमोऽध्यायः ॥

(बकवधपर्व)

एकचक्रायां भिक्षामटतः पाण्डवान् दृष्ट्वा पौराणां वितर्कः ॥ १ ॥ कुम्भकाराद्भीमस्य महत्सरपात्रलाभः ॥ २ ॥ समार्यस्य तद्गृहस्वामिनो ब्राह्मणस्य क्रन्दितं श्रुतवत्याः कुन्त्याः भीमानुमत्या ब्राह्मणान्तर्गृहप्रवेशः ॥ ३ ॥ ब्राह्मणप्रलापः ॥ ४ ॥

---

[1]वैशम्पायनः—

एकचक्रां गताः पार्था ब्राह्मणस्य निवेशने ।
[2]रमणीयानि पश्यन्तो वनानि विविधानि च ॥ १

पार्थिवानपि चोद्देशान् सरितश्च सरांसि च ।
चेरुर्भैक्षं सदा ते तु सर्व एव विशांपते ॥ २

युधिष्ठिरं च कुन्तीं च चिन्तयन्त उपासते ॥ २॥

---

1. क-ग—जनमेजयः—

एकचक्रां गताः पार्थाः कुन्तीपुत्रा महाबलाः ।
अतः परं द्विजश्रेष्ठ किमकुर्वत कर्शिताः ॥

वैशम्पायनः—

एकचक्रां गताः पार्था ब्राह्मणाकारशोभिताः ।
ऊषुस्ते सुचिरं कालं ब्राह्मणस्य निवेशने ॥ [अधिकः पाठः]

2. ख—अतः परं द्विजश्रेष्ठ किमकुर्वत पाण्डवाः ।

वैशम्पायनः—

एकचक्रां गतास्ते तु पुत्राः कुन्त्या महाबलाः ।
ऊषुस्तत्र चिरं कालं ब्राह्मणस्य निवेशने ॥ [अधिकः पाठः]

भैक्षं चरन्तस्तु तदा जटिला ब्रह्मचारिणः ।
बभूवुर्नागराणां ते स्वगुणैः प्रियदर्शनाः ॥ ३॥

नागराः—

दर्शनीया द्विजाश्शुद्धा देवगर्भोपमाश्शुभाः ।
भैक्षानर्हाश्च राज्यार्हास् सुकुमारास्तपस्विनः ॥ ४॥
[1]सर्वलक्षणसंपन्ना भैक्षं नार्हन्ति नित्यशः ।
कार्यार्थिनश्चरन्तीति तर्कयन्त इति ब्रुवन् ॥ ५॥
बन्धूनामागमान्नित्यम् उपचिन्त्य तु नागराः ।
भाजनानि च पूर्णानि भक्ष्यभोज्यैरकारयन् ॥ ६॥
मौनव्रतेन संयुक्ता भैक्षं गृह्णन्ति पाण्डवाः ॥ ७
माता चिरगतान् दृष्ट्वा शोचन्तीति च पाण्डवाः ।
[2]त्वरमाणा निवर्तन्ते मातृगौरवयन्त्रिताः ॥ ८
[3]निवेदयन्ति स्म सदा भैक्षं कुन्त्यै च ते निशि । ८॥

1. क-ग-घ—नैते यथार्थतो विप्रास् सुकुमारास्तपस्विनः ।
चरन्ति भूमौ प्रच्छन्नाः कस्माच्चित् कारणादिह ॥
[अधिकः पाठः]
2. क-ख-ग—दुःखाश्रुपूर्णनयना लिखन्त्यास्ते महीतलम् ।
भिक्षित्वा द्विजगेहेषु चिन्तयन्तश्च मातरम् ॥
[अधिकः पाठः]
3: घ—माले निवेदयन्ति स्म कुन्त्यै भैक्षं दिवानिशम् ।

[1]तया विभक्तान् भिक्षाशान् भुञ्जते स्म पृथक् पृथक् ॥ ९

अर्धं तु भुञ्जते वीरास् सह मात्रा परन्तपाः ।

अर्धं सर्वस्य भैक्षस्य भीमो भुङ्क्ते महाभुजः ॥ १०

[2]स वैवर्ण्यं च कार्श्यं च जगामातृप्तिकारितम् ॥ १०॥

[3]तथैव वसतां तेषां ततो राजन् महात्मनाम् ।

अतिचक्राम सुमहान् कालोऽथ भरतर्षभ ॥ ११॥

भीमोऽपि क्रीडयित्वा तु मिथो ब्राह्मणबन्धुषु ।

कुम्भकारेण संबन्धाल्लेभे पात्रं बृहत्ततः ॥ १२॥

[4]स ददाति महत् पात्रं भीमाय प्रहसन्निव ।

तस्याद्भुतं कर्म कृत्वा महान्तं भारमाददे ॥ १३॥

तस्य भारश्शतगुणः कुम्भकारमतोषयत् ॥ १४

[5]चक्रे चक्रे च मृद्भाण्डान् आददे भैक्षमाहरन् ।

तदादायागतं दृष्ट्वा हसन्ति प्रहसन्ति च ॥ १५

---

1. च—सर्वं सम्भूय भैक्षान्नं मातृदत्तं पृथक् पृथक् ।
विभज्य भुञ्जते पट् ते यथाभागं पृथक् पृथक् ॥

2. क-ग-च—न चाशितं च भवति कल्याणाश्चभृतः पुरा । [अधिकः पाठः]

3. क-ग-च—आज्यबिन्दुर्यथा वह्नौ महति ज्वलिते यथा ।
तथाऽर्धभागं भीमस्य भिक्षान्नस्य नृपोत्तम॥ [अधिकःपाठः]

4. च—कुम्भकारोऽददात् पात्रं महत्कृत्वाऽतिमात्रकम् ।
प्रहसन् भीमसेनाय विस्मितस्तस्य कर्मणा ॥ [अधिकः पाठः]

5. च—यान् स कुरुते भाण्डान् सपुत्रश्शारदश्शतम् ॥ [अधिकः पाठः]

भक्ष्यभोज्यानि विविधान्यादाय प्रक्षिपन्ति च ।
एवमेष सदा भुक्त्वा मात्रे वदति वै रहः ।। १६
न चाशितोऽस्मि भवति [1]कलवाण्या हृतं पुरा ।। १६।।
[2]ततः कदाचिद्भैक्षाय गतास्ते पृथया सह ।
सङ्गत्य भीमसेनस्तु तत्रास्ते पृथया सह ।। १७।।
अथार्तिजं महाशब्दं ब्राह्मणस्य निवेशने ।
भृशमुत्पतितं क्रूरं कुन्ती शुश्राव भारत ।। १८।।
रोरूयमाणांस्तान् सर्वान् परिदेवयतश्च सा ।
कारुण्यात् साधुभावाच्च कुन्ती राजन् न चक्षमे ।। १९।।
मथ्यमानेव दुःखेन हृदयेन पृथा ततः ।
उवाच भीमं कल्याणी कृपान्वितमिदं वचः ।। २०।।

कुन्ती—

वसामस्सुसुखं पुत्र ब्राह्मणस्य निवेशने ।
अज्ञाता धार्तराष्ट्राणां सत्कृता वीतमन्यवः ।। २१।।
सा चिन्तये सदा पुत्र ब्राह्मणस्यास्य किं न्वहम् ।
कदा प्रियं करिष्यामि यत्कुर्यामुषिता [3]वयम् ।। २२।।
एतावान् पुरुषस्तात कृतं यस्मिन् न नश्यति ।

---

1. क-ग-घ—कल्याणाप्रभृतः पुरा ; ख—कल्याण्या हृतवान् पुरा ।
2. घ—इति पृष्टस्सदा पौरैः क्षुधितः किल पाण्डवः । [अधिकः पाठः]
3. घ—स्सुखम् ।

यावच्च कुर्यादन्योऽस्य कुर्यादभ्यधिकं ततः ॥ २३॥

तथेदं ब्राह्मणस्यास्य दुःखमापतितं ध्रुवम् ।
[1]तत्रास्य यदि साहाय्यं कुर्यां साधु कृतं भवेत् ॥ २४॥

भीमसेनः—

ज्ञायतामस्य यद्दुःखं यतश्चैव समुत्थितम् ।
विदित्वा व्यवसिष्यामि यद्यपि स्यात् सुदुष्करम् ॥ २५॥

वैशम्पायनः—

तथैव कथयन्तौ तौ भूयश्शुश्रुवतुस्स्वनम् ।
आर्तिजं तस्य दुःखस्य सभार्यस्य विशांपते ॥ २६॥

अन्तर्गृहं ततस्तस्य ब्राह्मणस्य महात्मनः ।
विवेश त्वरिता कुन्ती बद्धवत्सेव सौरभी ॥ २७॥

ततस्तं ब्राह्मणं तत्र भार्यया च सुतेन च ।
दुहित्रा चैव सहितं ददर्श विनताननम् ॥ २८॥

ब्राह्मणः—

[2]धिगिदं जीवितं लोके गतसारमनर्थकम् ।
दुःखमूलं पराधीनं भृशमप्रियभावि च ॥ २९॥
जीविते परमं दुःखं जीविते परमो ज्वरः ॥ ३०
[3]जीविते वर्तमानस्य द्वन्द्वानामागमो ध्रुवः ॥ ३०॥

---

1. क-ग—कुर्यांसा सुकृतं ; ख-घ—कुर्यांम सुकृतं ।
2. क-ख-ग-घ—नास्ति
3. घ—जीवितं परमं दुःखं जीवितं परमेश्वरः ।

एकात्मना च धर्मार्थौ कामश्च न निषेव्यते ।
एतैश्च विप्रयोगेऽपि दुःखं परमकं मतम् ॥ ३१॥

आहुः केचित् परं मोक्षं स च नास्ति कथंचन ।
अर्थप्राप्तौ च नरकं कृत्स्नमेवोपपद्यते ॥ ३२॥

अर्थेप्सुता परं दुःखम् अर्थप्राप्तौ ततोऽधिकम् ।
जातस्नेहस्य चार्थेषु विप्रयोगे महत्तरम् ॥ ३३॥

[1]तदिदं जीवितं प्राप्य स्वल्पकालं महाभयम् ।
त्यागोऽप्ययं मया प्राप्तो भार्यया सहितेन च ॥ ३४॥

न हि योगं प्रपश्यामि येन मुच्येयमापदः ।
पुत्रदारेण वा सार्धं प्राद्रवेयमनामयम् ॥ ३५॥

उदितं हि मया पूर्वं न स्वार्थं वेत्थ ब्राह्मणि ।
क्षेमं यतस्ततो गन्तुं त्वया तु मम न श्रुतम् ॥ ३६॥

इह जाता विवृद्धाऽस्मि पिता माता ममेति वै ।
उक्तवत्यसि दुर्मेधे याच्यमाना मयाऽसकृत् ॥ ३७॥

स्वर्गतश्च पिता वृद्धस् तथा माता चिरं तव ।
बान्धवा भूतपूर्वाश्च तत्र वासे तु का रतिः ॥ ३८॥

न भोजनं विरुद्धं स्यान्न स्त्रीदेशो निबन्धनः ।

---

1. क-ख-ग—यावन्तो यस्य संयोगा द्रव्यैरिष्टैर्भवन्त्युत ।
तावन्तोऽस्य निखन्यन्ते हृदये शोकशङ्कवः ॥
॥[अधिकः पाठः]

सुदूरमपि कार्यार्थे [1]व्रजेद्रूरुडवासवत् ॥ ३९॥

सोऽयं ते बन्धुकामाया अशृण्वन्त्या वचो मम ।
सेयमापदनुप्राप्ता भुङ्क्ष्व ब्राह्मणि तत्फलम् ॥ ४०॥

[2]अथवा त्वद्विनाशाय न हि शक्ष्यामि कंचन ।
परित्यक्तुमहं बन्धुं स्वयं शीघ्रं नृशंसवत् ॥ ४१॥

सहधर्मचरीं दासीं तथा मातृसमां सदा ।
सखीं च विहितां देवैर् नित्यं परमिकां रतिम् ॥ ४२॥

मात्रा पित्रा विरहितां सदा दाक्षिण्यभागिनीम् ।

---

1. क-ख-ग—व्रजेत्प्राज्ञस्तु हंसवत् ॥
2. क-ग-घ—उपस्थितं तु कल्याणि यथेष्टमनुभूयताम् ।

ब्राह्मणी—

मामेव प्रेषय त्वं तु बकाय करमद्य वै ॥

द्विजः—

त्यागोऽयं मम संप्राप्तो मम वा मे सुतस्य वा ।
तव वा तव पुत्र्याश्च अत्र वासस्य तत्फलम् ।
न शृणोषि वचो मह्यं तत्फलं भुङ्क्ष्व भामिनि ।
अथवाऽहं न शक्ष्यामि स्वयं मर्तुं सुतं मम ।
एकं त्यक्तुं न शक्नोमि भवतीं च सुतामपि ।

[अधिकः पाठः]

ख—उपस्थितं तु कल्याणि यथेष्टमनुभूयताम् ।

ब्राह्मणी—

मामेव प्रेषय त्वं तु बकाय करमद्य वै ।

द्विजः—

बन्धुप्रणाशसंप्राप्तो भृशं दुःखकरो मम । [अधिकः पाठः]

वरयित्वा यथान्यायं मन्त्रवत् परिणीय च ॥ ४३॥

कुलीनां शीलसंपन्नाम् अपत्यजननीमथ ।
त्वामहं जीवितस्यार्थे साध्वीमनपकारिणीम् ॥ ४४॥

परित्यक्तुं न शक्ष्यामि भार्यां नित्यमनुव्रताम् ॥ ४५
कुत एव परित्यक्तुं पुत्रं शक्ष्याम्यहं [1]सुताम् ।

[2]भर्तुरर्थाय निक्षिप्तां न्यासं धात्रा महात्मना ॥ ४६

यस्यां दौहित्रजाँल्लोकान् आशंसे पितृभिस्सह ॥ ४६॥
स्वयमुत्पादितां बालां कथमुत्स्रष्टुमुत्सहे ॥ ४७

[3]मन्यन्ते केचिदधिकं स्नेहं पुत्रे पितुर्नराः ।
कन्यायां केचिदपरे मम तुल्यावुभौ मतौ ॥ ४८

---

1. क-ख-ग-घ—स्वयम्
2. क-ख-ग-घ—अप्राप्तयौवनं बालम् अजातव्यञ्जनाकृतिम्।
प्रार्थयेऽहं परां प्रीतिं यस्मिन् स्वर्गफलानि च ॥
दयितं मे कथं बालम् अहं त्यक्तुमिहोत्सहे ।
यस्य जातस्य पितरो मुखं दृष्ट्वा दिवं गताः ॥
अहं मुक्तः पितृऋणाद्यस्य जातस्य तेजसा ।
तमहं ज्येष्ठपुत्रं मे कुलनिस्तारकं भुवि ॥
मम पिण्डोदकनिधिं कथं त्यक्ष्यामि पुत्रकम् ।
कुत एव परित्यक्तुं पुत्रीं शक्ष्याम्यहं स्वयम् ॥
3. घ—मेधाविनीमदोषां तां शुश्रूषुमनहंकृताम् ।
तामिमां मे सुतां बालां नाहमुत्स्रष्टुमुत्सहे ॥ [अधिकः पाठः]

यस्यां लोके प्रतिष्ठा च वरं नित्यमथो सुखम् ।
अपापां तां कथं बालाम् उत्स्रष्टुमहमुत्सहे ॥ ४९

काङ्क्षमाणा रतिं चेह सुखानि च बहूनि च ।
उत्पादयत्यपत्यानि धर्मकामार्थहेतवे ॥ ५०

[1]आत्मानमपि चोत्सृज्य गते प्रेतवशं मयि ।
त्यक्ता ह्येते मया [2]व्यक्तं नेह शक्ष्यन्ति जीवितुम् ॥ ५१

एषां चान्यतमत्यागो नृशंसो गर्हितो बुधैः ।
[3]स कृच्छ्रामहमापन्नो न शक्तस्तर्तुमापदम् ॥ ५२

अहो धिक् कां गतिं त्वद्य गमिष्यामि सबान्धवः ।
सर्वैस्सह मृतं श्रेयो न च मे जीवितुं क्षमम् ॥ ५३

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्याम्
आदिपर्वणि चतुःपञ्चाशदधिकशततमोऽध्यायः ॥ १५४ ॥

॥ १० ॥ बकवधपर्वणि प्रथमोऽध्यायः ॥ १ ॥

[अस्मिन्नध्याये ५३ श्लोकाः]

---

1. ख—मेधाविनीमदोषां च शुश्रूषुं निरहङ्कृताम् ।
तामिमां मे सुतां बालां कथमुत्स्रष्टुमुत्सहे ॥ [अधिकः पाठः]

2. क-ख-ग-घ—सर्वे

3. क-ख-ग-घ—आत्मत्यागे कृते चेमे मरिष्यन्ति मया विना ।
[अधिकः पाठः]

## ।। पञ्चपञ्चाशदधिकशततमोऽध्यायः ।।

ब्राह्मणं प्रति तत्पत्नीवाक्यम्।। १ ।।

ब्राह्मणी—

न सन्तापस्त्वया कार्यः प्राकृतेनेव कर्हिचित् ।
न हि सन्तापकालोऽयं विशेषात् पुरुषस्य ह ।। १

अवश्यं निधनं सर्वैर् गन्तव्यमिह मानवैः ।
अवश्यं करणीयार्थे संतापो नैव विद्यते ।। २

भार्या पुत्रश्च दुहिता सर्वमात्मार्थमिष्यते ।
व्यथां च जहि बुद्ध्या त्वं स्वयं यास्यामि तत्र च ।। ३

एतद्धि परमं नार्याः कार्यं लोके सनातनम् ।
प्राणानपि परित्यज्य भर्तुर्हि हितमाचरेत् ।। ४

तच्च तत्र कृतं कर्म तवापीदं सुखावहम् ।
भवत्यमुत्र चाक्षय्यं लोकेऽस्मिंश्च यशस्करम् ।। ५

एष चैव गुरुर्धर्मो यं प्रवक्ष्याम्यहं तव ।
[1]कामश्च तव धर्मश्च [2]भूयानर्थः प्रदृश्यते ।। ६
यदर्थमिष्यते भार्या प्राप्तस्सोऽर्थस्त्वया मयि ।। ६।।

1. क-ख-ग-घ—अर्थश्च 2. क-ख-ग-घ—भूयानस

कुमारश्चैव कन्या च कृताऽहमनृणा त्वया ॥ ७
समर्थः पोषणे वापि सुतयो रक्षणे तथा ।
न त्वहं सुतयोश्शक्ता तथा रक्षणपोषणे ॥ ८
ममापि त्वद्विहीनायाः सर्वकामार्थमानद ।
कथं स्यातां युतौ बालौ वृत्तिर्वापि कथं भवेत् ॥ ९
कथं हि विधवा बाला बालपुत्रा विना त्वया ।
मिथुनं जीवयिष्यामि स्थिता साधुगते पथि ॥ १०
अहंकृतावलिप्तैश्च प्रार्थ्यमानामिमां सुताम् ।
अयुक्तैस्तव संबन्धैः [1]प्रार्थ्यमाना दुरात्मभिः ॥ ११
[2]स्थातुं पथि न शक्ष्यामि सज्जनेष्टे द्विजोत्तम ॥ ११॥
स्त्रीजन्म गर्हितं नाथ लोके दुष्टजनाकुले ।
मातापित्रोर्वशे कन्या प्रौढा भर्तृवशे तथा ॥ १२॥
अभावे चानयोः पुत्रे स्वतन्त्रा स्त्री विगर्हिता ॥ १३
अनाथत्वं स्त्रियो द्वारं दुष्टानां विवृतं हि तत् ।
[3]वस्त्रखण्डं घृताक्तं हि यथा संकृष्यते श्वभिः ॥ १४

---

1. क-ख-ग-घ—कथं शक्ष्यामि रक्षितुम् ॥

2. क-ख-ग-घ—उत्सृष्टमामिषं भूमौ प्रार्थयन्ति यथा खगाः ।
प्रार्थयन्ति जनास्सर्वे वीरहीनां तथा स्त्रियम् ।
साऽहं विचाल्यमाना हि प्रार्थ्यमाना दुरात्मभिः ॥
[अधिकः पाठः]

3. क-ग-घ—रक्ष्या तथाऽबलाऽनाथा प्रार्थितैश्वर्यगर्वितैः॥[अधिकः पाठः]

कथं तव सुतं चेमम् एकं बालमसंस्कृतम् ।
पितृपैतामहे मार्गे नियन्तुमहमुत्सहे ॥　　१५

कथं शक्ष्यामि बालेऽस्मिन् गुणानाधातुमीप्सितान् ।
अनाथे सर्वतो लुप्ते यथा त्वं धर्मदर्शनः ॥　　१६

सुतामपि च ते बालाम् अनाथां परिभूय माम् ।
अनर्हाः प्रार्थयिष्यन्ति शूद्रा वेदश्रुतिं यथा ॥　　१७

तां चेदहं न दित्सेयं त्वद्गुणैरुपबृंहिताम् ।
प्रमथ्यैनां हरेयुस्ते [1]हविर्ध्वाङ्क्षा इवाध्वरे ॥　　१८

संप्रेक्षमाणाः पुत्रीं ते नानुरूपमिवात्मनः ॥　　१८॥
अनर्हवशमापन्नाम् इमां चापि सुतां तव ॥　　१९
अवलिप्तैर्नरैर्दृष्ट्वा [2]मरिष्यामि न संशयः ॥　　१९॥
[3]तौ च हीनौ मया बालौ त्वया चैव तथाऽऽत्मजौ ।
विनश्येतां न सन्देहो मत्स्याविव जलक्षये ॥　　२०॥
त्रितयं सर्वथा ब्रह्मन् विनाशिष्यत्यसंशयम् ।

---

1. क-ग—कोऽस्याः कर्ता भवेदिति ।
पश्यन्त्या मे हरन्त्येव क्रोशन्त्याश्चापि निष्कृपाः ।
अनाथत्वात् सुतां विद्वन् हविर्ध्वाङ्क्षा इवाध्वरे ॥
2. अ-च—च
3. ख—मृते त्वयि मयाऽवश्यं सहागमनमिष्यते ।
मृते भर्तरि नारीणां सुखलेशो न विद्यते ॥　　[अधिकः पाठः]

त्वया विहीनं तस्मात्त्वं मां परित्यक्तुमर्हसि ॥ २१॥

इष्टा ह्येषा कुलस्त्रीणां पूर्वं भर्तुः परा गतिः ।
अनिष्टमिह पुत्राणां विषये परिवर्तितुम् ॥ २२॥

[1]मितं ददाति हि पिता मितं माता मितं सुतः ।
अमितस्य हि दातारं का पतिं नाभिनन्दति ॥ २३॥

परित्यक्तस्सुतश्चैव दुहितेयं तथा मया ।
बान्धवाश्च परित्यक्तास् त्वदर्थे जीवितं च मे ॥ २४॥

यज्ञैस्तपोभिर्नियमैर् दानैश्च विविधैस्तथा ।
विशेष्यते स्त्रिया भर्तुर् नित्यं प्रियहितेप्सुता ॥ २५॥

तदिदं यच्चिकीर्षामि धर्म्यं परमकं मतम् ।
इष्टं चैव हितं चैव तव चैव कुलस्य च ॥ २६॥

इष्टानि चाप्यपत्यानि द्रव्याणि सुहृदः प्रियाः ।
आपद्धर्मप्रमोक्षाय भार्या चापि मनस्विनी ॥ २७॥

एकतो वा कुलं कृत्स्नम् आत्मा वा कुलवर्धनः ।
न समं सर्वमेवेति बुधानामेष निश्चयः ॥ २८॥

---

3. क-ग-च—हरिद्राञ्जनपुष्पादिसौमङ्गल्ययुता सती ।
मरणं याति या भर्तुस् तद्दत्तजलपायिनी ॥
भर्तृपादार्पितमनास् सा याति गिरिजापदम् ।
गिरिजायास्सखी भूत्वा मोदते नगकन्यया ॥
[अधिकः पाठः]

[1]स कुरुष्व मया कार्यं तारयात्मानमात्मना ।
अनुजानीहि मामार्य [2]सुतौ ते परिरक्ष वै ॥　　२९॥
[3]अवध्याः स्त्रिय इत्याहुर् धर्मज्ञा धर्मनिश्चये ।
धर्मज्ञान् राक्षसानाहुर् न हन्यात् स च मामपि ॥　　३०॥
निस्संशयं वधः पुंसां स्त्रीणां संशयितो वधः ।
अतो मामेव धर्मज्ञ प्रस्थापयितुमर्हसि ॥　　३१॥
भुक्तं प्रियाण्यवाप्तानि धर्मश्च चरितो मया ।
[4]त्वत्प्रसूतिः प्रिया प्राप्ता मा तप्स्ये त्यज्य जीवितम् ॥　　३२॥
[5]समीक्ष्य तदहं सर्वं व्यवसायं करोमि च ।
उत्सृज्यापि च मामार्य [6]वेत्स्यस्यन्यामपि स्त्रियम् ॥　　३३॥
ततः प्रतिष्ठितो धर्मो भविष्यति पुनस्तव ।

---

1. क-ग—उभयोः कोऽधिको विद्वन्नात्माचैवाधिकः कुलात् ।
आत्मनो विद्यमानत्वाद् भुवनानि चतुर्दश ॥
विद्यन्ते द्विजशार्दूल आत्मा रक्ष्यस्सदा त्वया ।
आत्मन्यविद्यमाने चेत् तस्य नास्तीह किञ्चन ।
एतज्जगदिदं सर्वम् आत्मना न समं किल ॥ [अधिकः पाठः]
2. क-ग-घ—त्वं सुतौ परिरक्ष मे ।
3. क-ग-घ—किञ्चान्यच्छृणु मे नाथ यद्वक्ष्यामि हितं तव ।
श्रुत्वाऽवधार्यतां तन्मे ततस्ते तद्धितं कुरु॥[अधिकः पाठः]
4. क-ग-घ—त्वच्छुश्रूषणसंभूता कीर्तिश्चाप्यतुला मम । [अधिकः पाठः]
5. क-ख-ग-घ—जातपुत्रा च वृद्धा च प्रियकामा च ते सदा ।
[अधिकः पाठः]
6. घ—स्त्रियमन्यां यदीच्छसि ।

न चाप्यधर्मः कल्याण बहुपत्नीकता नृणाम् ॥[1] ३४॥

स्त्रीणां त्वधर्मस्सुमहान् भर्तुः पूर्वस्य लङ्घने ॥ ३५

एतत्सर्वं समीक्ष्य त्वम् आत्मत्यागं च गर्हितम् ।

आत्मानं तारय ब्रह्मन् कुलं च मम दारकौ ॥ ३६

वैशम्पायनः—

एवमुक्तस्तया भर्ता तां समालिङ्ग्य भारत ।

मुमोच बाष्पं शनकैस् सभार्यो भृशदुःखितः ॥ ३७

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्याम्
आदिपर्वणि पञ्चपञ्चाशदधिकशततमोऽध्यायः ॥ १५५ ॥
॥ १० ॥ बकवधपर्वणि द्वितीयोऽध्यायः ॥ २ ॥
[अस्मिन्नध्याये ३७ श्लोकाः]

---

## ॥ षट्पञ्चाशदधिकशततमोऽध्यायः ॥

ब्राह्मणं प्रति तत्कन्यावाक्यम् ॥ १ ॥ बालस्य वचनम् ॥ २ ॥

---

वैशम्पायनः—

तयोर्दुःखितयोर्वाक्यम् अतिमात्रं निशम्य सा ।

भृशं दुःखपरीताङ्गी कन्या तावभ्यभाषत ॥ १

---

1. क-ग-ब—वहस्व कुलजां कन्यां धर्मस्ते भविता पुनः ।
अनाश्रमी न तिष्ठेत क्षणमात्रमपि द्विजः ॥ [अधिकः पाठः]

कन्या—

किमिदं भृशदुःखार्तौ रोरवीथो ह्यनाथवत् ।
ममापि श्रूयतां किंचित् तच्छ्रुत्वा क्रियतां क्षमम् ॥ २

धर्मतोऽहं परित्याज्या युवयोर्नात्र संशयः ।
त्यक्तव्यां मां परित्यज्य त्रातं सर्वं मयैकया ॥ ३

इत्यर्थमिष्यतेऽपत्यं तारयिष्यति मामिति ।
अस्मिन्नुपस्थिते काले [1]तरतं प्लवया मया ॥ ४

इह वा तारयेद्दुःखाद् उत वा प्रेत्य तारयेत् ।
[2]सर्वथा तारयेत् पुत्र आत्मा वै पुत्र उच्यते ॥ ५

आकाङ्क्षन्तीह दौहित्रान् यदि नित्यं पितामहाः ।
तान् स्वयं वै परित्रास्ये रक्षन्ती जीवितं पितुः ॥ ६

भ्राता हि मम बालोऽयं गते लोकान्तरं त्वयि ।
अचिरेणैव कालेन विनशिष्यत्यसंशयः ॥ ७

ताते़ऽपि हि गते स्वर्गे विनष्टे च ममानुजे ।
पिण्डः पितॄणां व्युच्छिद्येत् तत् तेषामप्रियं भवेत् ॥ ८

पित्रा त्यक्ता तथा मात्रा भ्रात्रा चैव न संशयः ।
दुःखाद्दुःखतरं प्राप्य म्रियेयमतथोचिता ॥ ९

---

1. घ—तारितं व्यसनं मया।
2. क-ख-ग-घ—पुन्नाम्नो नरकात्त्राणात् तनयः पुत्र उच्यते। [अधिकः पाठः]

त्वयि रोगाविनिर्मुक्ते माता भ्राता च मे शिशुः ।
सन्तानश्चैव पिण्डश्च प्रतिष्ठास्यत्यसंशयम् ॥ १०

आत्मा पुत्रस्सखा भार्या कृच्छ्रं तु दुहिता किल ।
स कृच्छ्रान्मोचयात्मानं मां च धर्मेण योजय ॥ ११

अनाथा कृपणा बाला यत्र क्वचन शायिनी ।
भविष्यामि त्वया तात विहीना कृपणा [1]वद ॥ १२

अतस्त्वहं करिष्यामि कुलस्यास्य विमोक्षणम् ।
फलसंस्था भविष्यामि कृत्वा कर्म सुदुष्करम् ॥ १३

अथवा यास्यसे तत्र त्यक्त्वा मां द्विजसत्तम ।
पीडिताऽहं भविष्यामि तच्चावेक्षस्व मामपि ॥ १४

अतोऽस्मदर्थे धर्मार्थे प्रसवार्थे च सत्तम ।
आत्मानं परिरक्षस्व त्यक्तव्यां मां परित्यज ॥ १५

अवश्यकरणीयेऽर्थे मा स्म कालव्यतिक्रमः ।
त्वया दत्तेन तोयेन भविष्यति हितं च मे ॥ १६

किन्तु तस्मात्परं दुःखं यद् वयं स्वर्गते त्वयि ।
याचमानाः परादन्नं परिधावेमहि श्ववत् ॥ १७

त्वयि रोगाविनिर्मुक्ते क्लेशादस्मात् सबान्धवे ।
अभ्र्तेव सती लोके भविष्यामि सुखान्विता ॥ १८

---

1. क-ख-घ—वत

इत्येतदुभयं तात निशम्य तव यद्धितम् ।
तथ्यवस्य तथाऽम्बाया हितं स्वस्य सुतस्य च ॥ १९

मातापित्रोः पुनः पुत्रा भवितारो गुणान्विताः ।
न तु पुत्रस्य पितरौ पुनर्जातु भविष्यतः ॥ २०

वैशम्पायनः—

एवं बहुविधं तस्या निशम्य परिदेवितम् ।
पिता माता च सा चैव कन्या प्ररुरुदुस्त्रयः ॥ २१

तथा प्ररुदितान् सर्वान् निशम्य तु सुतस्तयोः ।
उत्फुल्लनयनो बालः कलमव्यक्तमब्रवीत् ॥ २२

मा पिता रोद मा मातर् मा [1]स्वस इति पुनः पुनः ।
प्रहसन्निव सर्वांस्तान् एकैकं सोपसर्पति ॥ २३

ततस्स तृणमादाय प्रहृष्टः पुनरब्रवीत् ।
अनेन तं हनिष्यामि राक्षसं पुरुषादनम् ॥ २४

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्याम्
आदिपर्वणि षट्पञ्चाशदधिकशततमोऽध्यायः ॥ १५६ ॥

॥ १० ॥ बकवधपर्वणि तृतीयोऽध्यायः ॥ ३ ॥

[अस्मिन्नध्याये २४ श्लोकाः ।]

---

1. क-ख-ग-घ—स्वसश्च पुनः पुनः

## ॥ सप्तपञ्चाशदधिकशततमोऽध्यायः ॥

कुन्त्या रोदनकारणप्रश्ने ब्राह्मणेन बकवृत्तान्तकथनम् ॥ १ ॥

वैशम्पायनः—

तथाऽपि तेषां दुःखेन परीतानां निरीक्ष्य च ।
तथा ब्रुवन्तं तं बालं हर्षस्समभवत्तदा ॥ १

इदमन्तरमित्येव कुन्ती समुपसृत्य तान् ।
गतासूनमृतेनेव सान्त्वयामास वै गिरा ॥ २

कुन्ती—

कुतोमूलमिदं दुःखं ज्ञातुमिच्छामि तत्त्वतः ।
तद्विदित्वाऽपकर्षेयं शक्यं चेदं परीक्षितुम् ॥ ३

ब्राह्मणः—

उपपन्नं सतामेतद् यद्ब्रवीषि तपोधने ।
न तु दुःखमिदं शक्यं मानुषेण व्यपोहितुम् ॥ ४

तथाऽपि तत्त्वमाख्यास्ये एतद्दुःखस्य संभवम् ।
शक्यं वा यदि वाऽशक्यं शृणु भद्रे यथातथम् ॥ ५

समीपे नगरस्यास्य बको नामेह राक्षसः ।
इतो गव्यूतिमात्रेऽस्ति यमुनागह्वरे गुहा ॥ ६

तस्यां घोरस्स वसति जिघांसुः पुरुषादकः ।

बको नाम स नाम्ना वै दुष्टात्मा राक्षसाधमः ॥ ७

ईशो जनपदस्यास्य पुरस्य च महाबलः ।
[1]तेनोपसृष्टा नगरी वर्षमद्य त्रयोदशम् ॥ ८

[2]स पुष्टो मानुषैर्मांसैर् दुर्बुद्धिः पुरुषादकः ।
तेनेयं पुरुषादेन भक्ष्यमाणा दुरात्मना ॥ ९

अनाथा नगरी नाथं त्रातारं नाधिगच्छति । ९॥
गुहायां च वसंस्तत्र बाधते सततं जनम् ।

स्त्रियो बालांश्च वृद्धांश्च यूनश्चापि दुरात्मवान् ॥ १०॥
अत्र मन्त्रैश्च होमैश्च भोजनैश्चापि राक्षसः ।

ईडितो द्विजमुख्यैश्च पूजितश्च दुरात्मवान् ॥ ११॥
यदा च सकलानेवं प्रसूदयति राक्षसः ।

तदैनं ब्राह्मणास्सर्वे समये समयोजयन् ॥ १२॥
माऽस्मान् कामाद्वधी रक्षो दास्यामस्ते सदा वयं ।
[3]पर्यायेण यथाकामम् इह मांसोदनं प्रभो ॥ १३॥

---

1. क-ख-ग-घ—माथिकः कामरूपी स राक्षसो वै महाबलः ।
[अधिकः पाठः]

2. क-ख-ग-घ-तत्कृते परचक्राच्च भूतेभ्यश्च न नो भयम्।[अधिकः पाठः]

3. क-ख-ग-घ—अन्नं मांससमायुक्तं तिलचूर्णसमन्वितम् ।
सर्पिषा च समायुक्तं व्यञ्जनैश्च विभूषितम् ॥
[अधिकः पाठः]

[1]स्रजश्चित्रास्तिलान् पिण्डाँल्लाजापूपसुरासवान् ।
[2]भृताभृतान् पानकुम्भान् स्थूलमांसं भृताभृतम् ॥ १४॥
वनमाहिषवाराहभाल्लूकं च भृताभृतम् ।
रक्तकुम्भांश्च विवसान् अन्यांश्च विविधान् बहून् ॥ १५॥
[3]अद्यसिद्धैस्समायुक्तैस् तिलचूर्णैस्समाकुलान् ।
कुलान् कुलाच्च पुरुषं बलीवर्दौ च कालकौ ॥ १६॥
[4]प्राप्स्यसि त्वमसंक्रुद्धो रक्षोभागं प्रकल्पितम् ।
तिष्ठेह समयेऽस्माकम् इत्ययाचन्त तं द्विजाः ॥ १७॥
बाढमित्येव तद्रक्षस् तद्वचः प्रत्यगृह्णत ।
परचक्राच्च बिभ्यच्च रक्षणं स करोति च ॥ १८॥
तस्मिन् भागे विनिर्दिष्टे चास्थितस्समयं बली ।
एकैकं चैव पुरुषं संप्रयच्छन्ति वेतनम् ॥ १९॥
[5]स वारो बहुभिर्वर्षैर् भविष्यत्यसुखाय वै ॥ २०
तद्विमोक्षाय ये चापि यतन्ते पुरुषाः क्वचित् ।

---

1. च—पिण्डलाजांस्तथाऽपूपांश् चूर्णां बहुविधोदनम् ।
2. च—भृताभृतानि मांसानि पानपूर्णघटानपि ॥
3. सद्यस्सिद्धसमायुक्तं तिलचूर्णैस्समाकुलम् ।
4. च—एवं भागं प्रदास्यामः समये इव तिष्ठति ॥
5. च—ईशो जनपदस्यास्य पुरस्य च महाबलः ।
पुष्टो मानुषमांसेन कुबुद्धिः पुरुषादकः ।
रक्षत्यसुरराण्णित्यम् इमं जनपदं बली ॥ [अधिकः पाठः]

सपुत्रदारांस्तान् हत्वा तद्रक्षो भक्षयिष्यति ॥ २१

नगरं चैव देशं च रक्षो बलसमन्वितम् ।

[1]रक्षत्यसुरराण्णित्यम् इमं जनपदं बली ॥ २२

वेत्रकीयगृहे राजा ह्येवं न्यायामुपाश्रितः ।

अनामयं जनस्यास्य न करोतीह शाश्वतम् ॥ २३

एतदर्हा वयं नूनं वसामो दुर्बलाश्रये ॥ २३॥

सत्सु चान्येषु देशेषु कुराजविषये रताः ॥ २४

ब्राह्मणाः कस्य वक्तव्याः कस्य वा च्छन्दचारिणः ॥ २४॥

गुणैरेते वसन्त्येव कामगाः पक्षिणो यथा ॥ २५

राजानं प्रथमं विन्देत् ततो भार्यं ततो धनम् ।

राजन्यसति लोकेऽस्मिन् कुतो भार्या कुतो धनम् ॥ २६

त्रयेण सञ्चयेनेह ज्ञातीन् पुत्रांश्च धारयेत् ।

विपरीतं मया त्वेतत् त्रितयं समुपार्जितम् ॥ २७

ते त्विमामापदं प्राप्य भृशं तप्स्यामहे वयम् ।

सोऽयमस्माननुप्राप्तो वारः कुलविनाशनः ॥ २८

भोजनं पुरुषं पेयं प्रदेयं वेतनं मया ॥ २८॥

न च मे विद्यते वित्तं संक्रेतुं पुरुषं क्वचित् ।

सुहृज्जनं प्रदातुं च न शक्ष्यामि कथञ्चन ॥ २९॥

---

1. अ-ब-कोशयोः इदमर्धं नास्ति ;

गतिं चान्यां न पश्यामि तस्मान्मोक्षाय राक्षसात्।
सोऽहं दुःखार्णवे मग्नो महत्यसुकरे भृशम् ॥ ३०॥
सहैवाहं गमिष्यामि बान्धवैरद्य राक्षसम् ।
ततो नस्सहितान् रक्षस् सर्वानेवोपभोक्ष्यति ॥ ३१॥
दुःखमूलमिदं भद्रे मयोक्तं प्रश्नतोऽनघे ॥ ३२

इति श्रीमहाभारते शतसाहस्रिकायां संहितायां वैयासिक्याम्
आदिपर्वणि सप्तपञ्चाशदधिकशततमोऽध्यायः ॥ १५७ ॥
॥ १० ॥ बकवधपर्वणि चतुर्थोऽध्यायः ॥ ४ ॥
[अस्मिन्नध्याये ३२ श्लोकाः]

## ॥ अष्टपञ्चाशदधिकशततमोऽध्यायः ॥

कुन्त्या बकं प्रति स्वपुत्रप्रेषणकथनम् ॥ १ ॥

कुन्ती—
न विषादस्त्वया कार्यो भयादस्मात् कथञ्चन ।
उपायः परिदृष्टोऽत्र तस्मान्मोक्षाय राक्षसात् ॥ १
नैव स्वयं सपुत्रस्य गमनं तत्र रोचये ॥ १॥
एकस्तव सुतो बालः कन्या चैका तपस्विनी ।
न चैतयोस्तथा पत्न्या गमनं तत्र रोचये ॥ २॥
मम पञ्च सुता ब्रह्मंस् तेषामेको गमिष्यति ।
त्वदर्थं बलिमादाय तस्य पापस्य रक्षसः ॥ ३॥

ब्राह्मणः—

नाहमेतत् करिष्यामि जीवितार्थे कथञ्चन ।
ब्राह्मणस्यातिथेश्चैव स्वार्थे प्राणैर्वियोजनम् ॥ ४॥

न त्वेतद्धर्मनित्यानां कुलीनानां सुदुष्करम् ।
यद्ब्राह्मणार्थे विसृजेद् आत्मानमपि चात्मजम् ॥ ५॥

आत्मनस्तु वधश्श्रेयो बोद्धव्यमिति रोचये ।
ब्रह्मवध्यात्मवध्याभ्यां श्रेयानात्मवधो मम ॥ ६॥

ब्रह्मवध्या परं पापं निष्कृतिर्नात्र विद्यते ।
अबुद्धिपूर्वं कृत्वाऽपि प्रत्यवायो हि बुध्यते ॥ ७॥

न त्वहं वधमाकाङ्क्षे स्वयमेवात्मनश्शुभे ।
परैः कृते वधे पापं न किंचिन्मम विद्यते ॥ ८॥

अभिसंधौ कृते तस्मिन् ब्राह्मणस्य वधे मया ।
निष्कृतिं न हि पश्यामि नृशंसं क्षुद्रमेव च ॥ ९॥

आगतस्य गृहे त्यागस् तथैव शरणार्थिनः ।
याचमानस्य च वधो नृशंसं परमं मतम् ॥ १०॥

कुर्यान्न निन्दितं कर्म न नृशंसं कथञ्चन ।
इति पूर्वे महात्मानः प्राहुर्धर्मविदो जनाः ॥ ११॥

श्रेयसे सह दारेण विनाशोऽद्य मम स्वयम् ।
ब्राह्मणस्य वधं नाहम् अनुमंस्ये कथञ्चन ॥ १२॥

कुन्ती—

ममाप्येषा मतिर्ब्रह्मन् विप्रा रक्ष्या इति स्थिता ।
न चाप्यनिष्टः पुत्रो मे यदि पुत्रशतं भवेत् ॥ १३॥
न चासौ राक्षसश्शक्तो मम पुत्रविनाशने ।
वीर्यवान् मन्त्रसिद्धश्च तेजस्वी च सुतो मम ॥ १४॥
राक्षसाय च तत्सर्वं प्रापयिष्यति भोजनम् ।
मोक्षयिष्यति चात्मानम् इति मे निश्चिता मतिः ॥ १५॥
समागताश्च वीरेण दृष्टपूर्वाश्च राक्षसाः ।
बलवन्तो महाकाया निहताश्चाप्यनेकशः ॥ १६॥
न त्विदं केषुचिद्ब्रह्मन् व्याहर्तव्यं कथञ्चन ।
विद्यार्थिनो हि मे पुत्रान् विप्रकुर्युः कुतूहलात् ॥ १७॥
गुरुणा चाननुज्ञातो ग्राहयेद्यस्सुतो मम ।
न कुर्यात्तस्य तत् कार्यम् इत्युवाच गुरुर्हितम् ॥ १८॥

वैशम्पायनः—

एवमुक्तस्तु पृथया स विप्रो भार्यया सह ।
हृष्टस्संपूजयामास तद्वाक्यममृतोपमम् ॥ १९॥
ततः कुन्ती च विप्रश्च सहितावनिलात्मजम् ।
तमब्रूतां कुरुष्वेति प्रतिजज्ञे तथेति सः ॥ २०॥

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्याम्
आदिपर्वणि अष्टपञ्चाशदधिकशततमोऽध्यायः ॥ १५८ ॥
॥ १० ॥ बकवधपर्वणि पञ्चमोऽध्यायः ॥ ५ ॥
[अस्मिन्नध्याये २०॥ श्लोकाः]

---

## ॥ एकोनषष्ट्यधिकशततमोऽध्यायः ॥

भीमसेनप्रभावकथनेन कुन्त्या कृतं युधिष्ठिराश्वासनम् ॥ १ ॥ भीमेन बकवनगमनं शकटस्थान्नभोजनं च ॥ २ ॥ बकवधे भीमवचनम् ॥ ३ ॥

वैशम्पायनः—

[1]प्रतिज्ञातेऽथ भीमेन करिष्यामीति भारत ।
आजग्मुस्सहितास्सर्वे भैक्षमादाय पाण्डवाः ॥ १
भीमसेनं ततो दृष्ट्वा आपूर्णवदनं तथा ।
बुबोध धर्मराजस्तु हृषितं भीममच्युतम् ॥ २
हर्षितुं कारणं यत्तन्मनसाऽचिन्तयद्गुरुः ॥ २॥
स समीक्ष्य तदा राजन् श्रोतुकामो विशांपतिः ।
आकारेणैव तं ज्ञात्वा पाण्डुपुत्रो युधिष्ठिरः ॥ ३॥
रहस्समुपविश्यैकस् ततः पप्रच्छ मातरम् ॥ ४

युधिष्ठिरः—

किं चिकीर्षत्ययं कर्म भीमो भीमपराक्रमः ।
भवत्यनुमते कच्चित् स्वयं कर्तुमिहेच्छति ॥ ५

कुन्ती—

ममैव वचनादेव करिष्यति परन्तपः ।
ब्राह्मणार्थे महत् कृत्यं मोक्षाय नगरस्य च ॥ ६

1. ब—करिष्यामीति भीमेन प्रतिज्ञातेऽथ भारत ।

[1]युधिष्ठिरः—

किमिदं साहसं तीक्ष्णं भवत्या दुष्करं कृतम् ।
परित्यागं हि पुत्रस्य न प्रशंसन्ति साधवः ॥ ७

कथं परसुतस्यार्थे स्वसुतं त्यक्तुमिच्छसि ।
लोकवृत्तविरुद्धं च पुत्रत्यागः कृतस्त्वया ॥ ८

यस्य बाहू समाश्रित्य सुखं सर्वे स्वपामहे ।
राज्यं चापहृतं क्षुद्रैर् आजिहीर्षामहे पुनः ॥ ९

यस्य दुर्योधनो वीर्यं चिन्तयन्नमितौजसः ।
न शेते वसतीस्सर्वा दुःखाच्छकुनिना सह ॥ १०

यस्य वीरस्य वीर्येण मुक्ता जतुगृहाद्वयम् ।
अन्येभ्यश्चैव पापेभ्यो निहतश्च पुरोचनः ॥ ११

यस्य बाहू समाश्रित्य वसुपूर्णां वसुन्धराम् ।
[2]इमां मन्यामहे प्राप्तां निहत्य धृतराष्ट्रजान् ॥ १२

तस्य व्यवसितस्त्यागो बुद्धिमास्थाय कां त्वया ।
कच्चिन्नु दुःखैर्बुद्धिस्ते विप्लुता गतचेतसः ॥ १३

कुन्ती—

युधिष्ठिर न संतापः कार्यः प्रति वृकोदरम् ।

---

1. क-ग—बकाय कल्पितं पुत्र महान्तं बलिमुत्तमम् ।
भीमो भुनक्ति संपुष्टम् अप्येकाहं तपस्सुत ॥ [अधिकः पाठः]

2. ब—भोक्तुमिच्छामहे मातः निस्सपत्ना महात्मनः । [अधिकः पाठः]

न चायं बुद्धिदौर्बल्याद् व्यवसायः कृतो मया ॥　　१४
न च शोकेन बुद्धिर्मे विप्लुता गतचेतना ॥　　१४॥
[1]दृष्ट्वा वीरस्य विक्रान्तं तदा जतुगृहे महत् ।
हिडिम्बस्य वधाच्चैवं विश्वासोऽ[2]यं वृकोदरे ॥　　१५॥
बाह्वोर्बलं हि भीमस्य नागायुतसमं महत् ।
येन यूयं गजप्रख्या निर्व्यूढा वारणावतात् ॥　　१६॥
वृकोदराद्बलीहान्यो न जातो न जनिष्यति ।
योऽभ्युदीयाद्युधि श्रेष्ठम् अपि वज्रधरं स्वयम् ॥　　१७॥
जातमात्रः पुरा चैव ममाङ्कात् पतितो गिरौ ।
शरीरगौरवाद्यस्य शिला गात्रैर्विचूर्णिता ॥　　१८॥
तदहं प्रज्ञया ज्ञात्वा बलं भीमस्य पाण्डव ।
प्रतिकारे च विप्रस्य ततः कृतवती मतिम् ॥　　१९॥
न च मोहान्न चाज्ञानान्न च लोभान्नच भ्रमात् ।
इदं व्यवसितं वीर बुद्धिपूर्वमिदं कृतम् ॥　　२०॥

---

1. क-ख-ग—इह विप्रस्य भवने वयं पुत्र सुखोषिताः ।
तस्य प्रतिक्रिया तात मयैषा प्रसमीक्ष्यते ॥
एतावानेव पुरुषः कृतं यस्मिन्न नश्यति ।
ब्राह्मणार्थे महान् धर्मो जानामीत्थं वृकोदरे ॥
[अधिकः पाठः]

2. क-ख-ग-घ—मे

अर्थौ द्वावपि निर्वृत्तौ युधिष्ठिर भविष्यतः ।
प्रतीकारश्च वासस्य धर्मश्च चरितो महान् ॥ २१॥

यो ब्राह्मणस्य साहाय्यं कुर्यादर्थेषु केषु चित् ।
क्षत्रियस्स शुभाँल्लोकान् आप्नुयादिति [1]निश्चितम् ॥ २२॥

क्षत्रियः क्षत्रियस्यैव कुर्वाणो वधमोक्षणम् ।
विपुलां कीर्तिमाप्नोति लोकेऽस्मिंश्च परत्र च ॥ २३॥

वैश्यस्यैव च साहाय्यं कुर्वाणः क्षत्रियो भुवि ।
स सर्वेष्वपि लोकेषु प्रजा रञ्जयते ध्रुवम् ॥ २४॥

शूद्रं तु मोक्षयेच्छत्रुं उद्विग्नं शरणार्थिनम् ।
प्राप्नोतीह कुले जन्म सद्द्रव्ये राजसत्कृते ॥ २५॥

एवं हि भगवान् व्यासः पुरा कौरवनन्दन ।
प्रोवाच सुतरां प्राज्ञ तस्मादेतच्चिकीर्षितम् ॥ २६॥

युधिष्ठिरः—

उपपन्नमिदं मातस् त्वया यद्बुद्धिपूर्वकम् ।
आर्तस्य ब्राह्मणस्यैवम् अनुक्रोशादिदं कृतम् ॥ २७॥

ध्रुवमेष महाबाहुर् विजित्य पुरुषादकम् ।
आगन्ता नगरं चैव तस्मात् पापाद्विमोक्ष्यते ॥ २८॥

यथा चैव न नो विद्युर् नरा नगरवासिनः ।

1. क-ख-ग-घ—नश्श्रुतम्

तथाऽयं ब्राह्मणो वाच्यः परिगृह्य च यत्नतः ॥ २९॥

वैशम्पायनः—

युधिष्ठिरेण संमन्त्र्य ब्राह्मणार्थमरिन्दम ।
कुन्ती प्रविश्य तान् सर्वान् सान्त्वयमास भारत ॥ ३०॥

[1]अथ रात्र्यां व्यतीतायां भीमसेनो महाबलः ।
ब्राह्मणं समुपागम्य वाक्यमेतदुवाच ह ॥ ३१॥

भीमसेनः—

आपदस्त्वां मोचयेयं सपुत्रं ब्राह्मण प्रियम् ।
मा भैषी राक्षसात्तस्मान्मां ददातु बलिं भवान् ॥ ३२॥

इह मामाशितं कर्तुं प्रयतस्व भवद्गृहे ।
अथात्मानं प्रदास्यामि तस्मै घोराय रक्षसे ॥ ३३॥

त्वरध्वं किं विलम्बध्वं मा चिरं कुरुतानघाः ।
व्यवस्येयं मम प्राणैर् युष्मान् रक्षितुमद्य वै ॥ ३४॥

वैशम्पायनः—

एवमुक्तस्तु भीमेन ब्राह्मणो भरतर्षभ ।
सुहृदां तत् समाख्याय ददावन्नं सुसंस्कृतम् ॥ ३५॥

पिशितोदनमाजह्रुर् अथास्मै पुरवासिनः ।
सघृतं सोपदंशं च सूपैर्नानाविधैस्सह ॥ ३६॥

---

1. क-ख-ग-घ—कोशेषु अत्र अध्यायसमाप्तिः दृश्यते ॥

तदाऽशित्वा भीमसेनो मांसानि विविधानि च ।
मोदकानि च मुख्यानि चित्रोदनचयान् बहून् ॥ ३७॥
ततोऽपिबद्दधिघटान् सुबहून् द्रोणसम्मितान् ॥ ३८
तस्य भुक्तवतः पौरा यथावत् समुपार्जितम् ।
उपजह्रुर्भूतभागं समृद्धमनसस्तदा ॥ ३९
ततो रात्र्यां व्यतीतायां सव्यञ्जनदधिप्लुतम् ।
समारुह्यान्नसंपूर्णं शकटं स वृकोदरः ॥ ४०
प्रययौ तूर्यनिर्घोषैः पौरैश्च परिवारितः ॥ ४०॥
आत्मानमेषोऽन्नभूतो राक्षसाय प्रदास्यति ।
तरुणोऽप्रतिरूपश्च दृढ औदरिको युवा ॥ ४१॥
वाग्भिरेवंप्रकाराभिस् स्तूयमानो वृकोदरः ।
चुचोद स बलीवर्दौ युक्तौ सर्वाङ्गकालकौ ॥ ४२॥
वादित्राणां प्रणादेन ततस्तं पुरुषादकम् ।
अभ्यगच्छत् सुसंहृष्टस् सर्वत्र मनुजैर्वृतः ॥ ४३॥
संप्राप्य स च तं देशम् एकाकी समुपाययौ ।
पुरुषादभयाद्भीतस् तत्रैवासीज्जनव्रजः ॥ ४४॥
स गत्वा [1]दूरमध्वानं दक्षिणामभितो दिशम् ।
यथोपदिष्टमुद्देशे ददर्श विपुलं द्रुमम् ॥ ४५॥

1. क-ख-ग-घ—दीर्घं

केशमज्जास्थिमेदोभिर् बाहूरुचरणैरपि ।
आर्द्रैश्शुष्कैश्च संकीर्णम् अभितोऽथ वनस्पतिम् ॥ ४६॥
गृध्रकङ्कबलच्छन्नं गोमायुगणसङ्कुलम् ।
उग्रगन्धमचक्षुष्यं श्मशानमिव दारुणम् ॥ ४७॥
तं प्रविश्य महावृक्षं चिन्तयामास वीर्यवान् ॥ ४८
यावन्न दृश्यते रक्षो बकस्तु बलदर्पितः ॥ ४८॥
रुचिरं विविधैर्भोज्यैर् अन्नैर्गिरिनिभैरिदम् ॥ ४९
शकटं सूपसंपूर्णं यावद्द्रक्ष्यति राक्षसः ।
तावदेवेह भोक्ष्येऽहं दुर्लभं हि पुनर्भवेत् ॥ ५०
विप्रकीर्येत सर्वं हि प्रयुद्धे मयि रक्षसा ॥ ५०॥
अभोज्यं च शवं स्पृष्ट्वा निगृहीते बके भवेत् ॥ ५१
स त्वेवं भीमकर्मा तु भीमसेनोऽभिलक्ष्य च ।
उपविष्टश्शनैरन्नं भुङ्क्ते स्म परमं परम् ॥ ५२
तं ततस्सर्वतोऽपश्यन् द्रुमानारुह्य नागराः ॥ ५२॥
नारक्षो बलिमश्नीयाद् एवं बहु च मानवाः ।
भुङ्क्ते ब्राह्मणरूपेण बकोऽयमिति चाब्रुवन् ॥ ५३॥
स तं हसति तेजस्वी तदन्नमुपयुञ्ज्य च ।
आसाद्य च वनं तस्य रक्षसः पाण्डवो बली ॥ ५४॥
आजुहाव ततो नाम्ना तदन्नमुपयोजयन् ॥ ५५

ततस्स राक्षसश्श्रुत्वा भीमसेनस्य तद्वचः ।
आजगाम सुसंक्रुद्धो यत्र भीमो व्यवस्थितः ॥ ५६

महाकायो महावेगो दारयन्निव मेदिनीम् ।
त्रिशिखां भ्रुकुटिं कृत्वा संदश्य दशनच्छदम् ॥ ५७

भुञ्जानमन्नं तं दृष्ट्वा भीमसेनं स राक्षसः ।
विवृत्य नयने क्रुद्ध इदं वचनमब्रवीत् ॥ ५८

बकः—

कोऽयमन्नमिदं भुङ्क्ते मदर्थमुपकल्पितम् ।
पश्यतो मम दुर्बुद्धिर् यियासुर्यमसादनम् ॥ ५९

वैशम्पायनः—

भीमसेनस्तु तच्छ्रुत्वा प्रहसन्निव भारत ।
राक्षसं तमनादृत्य भुङ्क्त एव पराङ्मुखः ॥ ६०

ततस्स भैरवं कृत्वा समुद्यम्य करावुभौ ।
अभ्यद्रवद्भीमसेनं जिघांसुः पुरुषादकः ॥ ६१

तथाऽपि परिभूयैनं नेक्षमाणो वृकोदरः ।
राक्षसं भुङ्क्त एवान्नं पाण्डवः परवीरहा ॥ ६२

अमर्षेण तु संपूर्णः कुन्तीपुत्रस्य राक्षसः ।
जघान पृष्ठे पाणिभ्याम् उभाभ्यां पृष्ठतस्स्थितः ॥ ६३

तथा बलवता भीमः पाणिभ्यां भृशमाहतः ।

नैवावलोकयामास भुङ्क्त एव पराङ्मुखः ॥ ६४
[1]ततस्स भूयस्संक्रुद्धो वृक्षमादाय राक्षसः ।
ताडयिष्यंस्तदा भीमं पुनरभ्यद्रवद्बली ॥ ६५
न्यस्तं क्रुद्धेन तं वृक्षं प्रतिजग्राह वीर्यवान् ।
सव्येन पाणिना भीमो दक्षिणेना[2]पि भुक्तवान् ॥ ६६
[3]ततो भीमश्शनैर्भुक्त्वा तदन्नं पुरुषर्षभ ।
वार्युपस्पृश्य संहृष्टस् तस्थौ गिरिरिवाचलः ॥ ६७
[4]भुजवेगं तथाऽऽस्फोटं क्ष्वेलितं च महास्वनम् ।
कृत्वाऽऽह्वयत संक्रुद्धो भीमसेनोऽथ राक्षसम् ॥ ६८

[5]भीमसेनः--

बहुकालं सुपुष्टं ते शरीरं राक्षसाधम ।

---

1. क-ग-घ—भीमोदरगताः पिण्डास्सान्तरालाः परश्शतम् ।
रक्षःपाणिप्रहारेण संश्लिष्टा एकपिण्डवत् ॥
[अधिकः पाठः]

2. क-ख-ग-घ—प्यभुङ्क्त ह ।

3. क-ग-घ—शकटान्नं ततो भुक्त्वा रक्षसः पाणिना सह ।
गृह्णन्नेव महावृक्षं निश्शेषं पर्वतोपमम् ॥
भीमसेनो हसन्नेव भुक्त्वा त्यक्त्वा च राक्षसम् ।
पीत्वा दधिघटान् पूर्णान् घृतकुम्भाञ्शतं शतम् ॥
[अधिकः पाठः]

4. क-ग—स्थित्वा मुहूर्तं विश्रम्य वीरासनमुपाश्रितः ।
भ्रामयन्तं महावृक्षम् आयान्तं भीमदर्शनम् ।
दृष्ट्वोत्थायाहवे वीरः सिंहनादं विनादयन् ॥ [अधिकः पाठः]

5. क-ग-घ—उवाचाशनिशब्देन ध्वनिना भीषयन्निव । [अधिकः पाठः]

[1]मद्बाहुबलमाश्रित्य न त्वं [2]भूयो भविष्यसि ॥ ६९
अद्य मद्बाहुनिष्पिष्टो गमिष्यसि यमक्षयम् ॥ ६९॥
अद्यप्रभृति स्वप्स्यन्ति वेत्रकीयनिवासिनः ।
निरुद्विग्नाः पुरस्यास्य कण्टके सूद्धृते मया ॥ ७०॥
अद्य युद्धे शरीरं ते कङ्कगोमायुवायसाः ।
मया हतस्य खादन्तु विकर्षन्तु च भूतले ॥ ७१॥

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्याम्
आदिपर्वणि एकोनषष्ट्यधिकशततमोऽध्यायः ॥ १५९ ॥
॥ १० ॥ बकवधपर्वणि षष्ठोऽध्यायः ॥ ६ ॥
[अस्मिन्नध्याये ७१॥ श्लोकाः]

---

## ॥ षष्ट्यधिकशततमोऽध्यायः ॥

बकभीमयोर्युद्धम् ॥ १ ॥ भीमेन बकवधश्च ॥ २ ॥

---

वैशम्पायनः—

एवमुक्त्वा सुसंक्रुद्धः पार्थो बकजिघांसया ।
उपाधावद्बकश्चापि पार्थं पार्थिवसत्तम ॥ १
महाकायो महावेगो दारयन्निव मेदिनीम् ।
विरूपरूपः पिङ्गाक्षो भीमसेनमभिद्रवत् ॥ २

---

1. क-ग-घ—द्विपचतुष्पन्मांसैश्च बहुभिश्चौदनाचलैः । [अधिकः पाठः]
2. क-ख-ग-घ—भूयस्त्वशिष्यसि

त्रिशिखां भ्रुकुटीं कृत्वा संदश्य दशनच्छदम् ॥ २॥
ततस्स भूयस्संक्रुद्धो वृक्षमादाय राक्षसः ।
ताडयिष्यंस्तदा भीमं [1]तरसाऽभ्यद्रवद्बली ॥ ३॥
क्षिप्तं क्रुद्धेन तं वृक्षं प्रतिजग्राह वीर्यवान् ।
सव्येन पाणिना भीमः प्रहसन्निव भारत ॥ ४॥
[2]ततस्स पुनरुद्यम्य वृक्षान् बहुविधान् बली ।
प्राहिणोद्भीमसेनाय तस्मै तांश्चैव पाण्डव ॥ ५॥
[3]वृक्षयुद्धमभूद्भीमं महीरुहविनाशनम् ।
सुघोरं वै महाराज बकपाण्डवयोस्तदा ॥ ६॥
नाम विश्राव्य तु बकस् समभिद्रुत्य पाण्डवम् ।
भुजाभ्यां परिजग्राह भीमसेनं महाबलम् ॥ ७॥
भीमसेनोऽपि तद्रक्षः परिगृह्य महाभुजः ।
विष्फुरन्तं महावेगं विचकर्ष बलाद्बली ॥ ८॥
स कृष्यमाणो भीमेन कर्षमाणश्च पाण्डवम् ।

---

1. क-ख-ग-घ—सहसा
2. क-ख-घ—तद्रक्षःप्रहितं वृक्षं महाशाखं वनस्पतिम् ।
गृहीत्वा पाणिनैकेन सव्येनोद्यम्य चेतरम् ।
रक्षोवदनमुद्वीक्ष्य भ्रुकुटीविकटाननम् ।
दर्शयन् राक्षसे दन्तान् प्रजहासाशनिस्वनः ॥
[अधिकः पाठः]
3. क-ख-घ—सर्वानपोहयद्वृक्षान् स्वस्य हस्तस्थशाखया ।

समयुध्यत तीव्रेण क्रमेन पुरुषादकः ॥ ९॥

तयोर्वेगेन महता पृथिवी समकम्पत ।

पादपांश्च महाकायांश् चूर्णयामासतुस्तदा ॥ १०॥

जग्राह भीमः पाणिभ्यां गृहीत्वा चैनमाक्षिपत् ॥ ११

आक्षिप्तो भीमसेनेन पुनरेवोत्थितो हसन् ॥ ११॥

तत आलिङ्ग्य चैवैनं न्यहनद्वसुधातले ॥ १२

भीमोऽप्यतर्जयच्चैनं समाश्वसिहि चेत्यपि ॥ १२॥

आस्फोटयामास बली उत्तिष्ठेति च सोऽब्रवीत् ॥ १३

समुत्पत्य ततः क्रुद्धो रूपं कृत्वा महत्तरम् ।

विरूपस्सहसा तस्थौ तर्जयित्वा वृकोदरम् ॥ १४

अहसद्भीमसेनोऽथ राक्षसं भीमदर्शनम् ॥ १४॥

भीमसेनस्तु जग्राह ग्रीवायां भीमदर्शनम् ।

[1]भुजाभ्यां जानुनैकेन पृष्ठे समभिपीडयत् ॥ १५॥

[2]ततः क्रुद्धो विसृज्यैनं स भीमस्तस्य रक्षसः ।

स्वां कटीमीषदुत्क्षिप्य बाहू चैव परामृशत् ॥ १६॥

तस्य बाहू समादाय त्वरमाणो वृकोदरः ।

---

1. घ—असौ गृहीत्वा पाणिभ्यां पृष्ठतश्च व्यवस्थितः ।
जानुभ्यां पीडयित्वाऽथ पातयामास भूतले ॥

2. च—पुनः क्रुद्धो विसृज्यैनं राक्षसं क्रोधदीपितम् ।

उत्क्षिप्य चावधूयैनं पातयन् बलवान् भुवि ॥ १७॥

तं तु वामेन पादेन क्रुद्धो भीमपराक्रमः ।
[1]उरस्येनं समाजघ्ने भीमस्तु पतितं भुवि ॥ १८॥

सुसङ्क्रुद्धस्समुत्पत्य भीममप्यहनद्भृशम् ।
[2]व्यात्ताननो दीप्तजिह्वो बाहुमुद्यम्य दक्षिणम् ॥ १९॥

तेनाभिद्रुत्य क्रुद्धेन भीमो मूर्ध्नि समाहतः ॥ २०

मुष्टिना जानुना चैव वामे पार्श्वे समर्पितः ।
एवं निहन्यमानस्सन् राक्षसेन बलीयसा ॥ २१

रोषेण महताऽऽविष्टो भीमो भीमपराक्रमः ।
ततः क्रुद्धस्समुत्पत्य भीमो जग्राह राक्षसम् ॥ २२

तावन्योन्यं पीडयन्तौ पुरुषादवृकोदरौ ।
मत्ताविव महानागावन्योन्यं विचकर्षतुः ॥ २३

बाहुविक्षेपशब्दैश्च भीमराक्षसयोस्तदा ।
वेत्रकीयपुरी सर्वा वित्रस्ता समपद्यत ॥ २४

तयोर्वेगेन महता तत्र भूमिरकम्पत ॥ २४॥

---

1. घ—क्रुद्धंस्सोऽपि समुत्क्षिप्य वेगेन महता रुषा ।
उद्धृत्य पाणियुगलं भीमस्योरस्यताडयत् ॥ [अधिकः पाठः]

2. घ—व्यात्ताननेन घोरेण लम्बजिह्वेन रक्षसा ।
दक्षिणं बाहुमुद्यम्य तेनाभिद्रुत्य वेगतः ॥

पादपान् वीरुधश्चैव चूर्णयामासतुश्च तौ ॥ २५

समागतौ च तौ वीरावन्योन्यवधकाङ्क्षिणौ ।
[1]अश्मभिः पादवेगैश्च चूर्णयामासतुस्तदा ॥ २६

[2]अथ तं लोलयित्वा तु भीमसेनो महाबलः ।
[3]अगृह्णात् परिरभ्यैनं भुजाभ्यां भरतर्षभ ॥ २७

जानुभ्यां परिजग्राह भीमसेनो बकं बलात् ।
[4]विष्फुरन्तं महाकायं विचकर्ष महाबलः ॥ २८

विकृष्यमाणो भीमेन कर्षंश्च युधि पाण्डवम् ।

---

1. क-ग-घ—गिरिभिर्गिरिशृङ्गैश्च पाषाणैः पर्वतच्युतैः ।
[अधिकः पाठः]

2. क-ग-घ—आयामविस्तराभ्यां च परितो योजनत्रयम् ॥
निर्महीरुहपाषाणं गिरिकुञ्जलतावलिम् ।
चक्रतुर्युद्धदुर्मत्तौ कूर्मपृष्ठोपमां महीम् ।
मुहूर्तमेवं संयुध्य समं रक्षःकुरूत्तमौ ॥
ततो रक्षोविनाशाय मतिं कृत्वा वृकोदरः ।
दन्तान् कटिकटीकृत्य दष्ट्वा च दशनच्छदम् ॥
नेत्रे संवृत्य विकटं तिर्यक्प्रैक्षत राक्षसम् ॥
[अधिकः पाठः]

3. ग-घ—अथ जानुप्रहारैश्च मुष्टिभिर्वज्रसन्निभैः ।
घोरैः पादप्रहारैश्च क्षोभयामास राक्षसम् ॥ [अधिकः पाठः]

4. घ—भग्नोरुबाहुसक्थिश्च विस्रंसदेहबन्धनः ।
प्रस्वेदो दीर्घनिश्श्वासो निर्यज्जिह्वाक्षितारकः ॥
अजाण्डस्फोटनं कुर्वन्नाक्रोशाशनिसन्निभैः ।
भूमौ निपत्य लुलुठे दण्डाहत इवोरगः ॥ [अधिकः पाठः]

समयुज्यत तीव्रेण श्रमेण पुरुषादकः ॥ २९

ह्रियमाणं तु तदा रक्षस् समीक्ष्य भरतर्षभः ।
निष्पीड्य भूमौ पद्भ्यां वै समाजघ्ने वृकोदरः ॥ ३०

ततोऽस्य जानुना पृष्ठम् अवपीड्य बलादिव ।
बाहुना परिजग्राह दक्षिणेन शिरोधराम् ॥ ३१

सव्येन च कटीदेशे वासस्यादाय पाण्डवः ।
बभञ्ज तत्तदा रक्षो नदन्तं भैरवान् रवान् ॥ ३२

[1]ततोऽस्य रुधिरं वक्त्रात् प्रसुस्राव विशांपते ।
हन्यमानस्य भीमेन तस्य घोरस्य रक्षसः ॥ ३३

ततो भीमस्तमादाय गतासुं पुरुषादकम् ।
नगरद्वारमुद्दिश्य पादावादाय चाक्षिपत् ॥ ३४

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्याम्
आदिपर्वणि षष्ट्यधिकशततमोऽध्यायः ॥ १६० ॥

॥ १० ॥ बकवधपर्वणि सप्तमोऽध्यायः ॥ ७ ॥

[अस्मिन्नध्याये ३४ श्लोकाः]

---

1. घ—निक्षिप्य भूमौ पाणिभ्यां तरसा निष्पिपेष ह ।
नदन्तं भैरवं रावान् विसृजन्तं जलं मलम् ॥ [अधिकः पाठः]

## ॥ एकषष्ट्यधिकशततमोऽध्यायः ॥

बकवधानन्तरं समागतानां तत्परिवाराणां भीमेन समयकरणम् ॥ १ ॥ नगरद्वारदेशे बकशरीरं निधाय ब्राह्मणगृहमानीय भीमेन कुन्त्यादीन्प्रति बकवृत्तान्तकथनम् ॥ २ ॥ मृतबकदर्शनार्थं पौराणां गमनम् ॥३॥ बकवधेन पौराणां भीमसेवनम् ॥ ४ ॥

वैशम्पायनः—

तेन शब्देन वित्रस्तो जनस्सर्वोऽथ रक्षसः ।
निष्पपात गृहाद्राजन् सहैव परिचारिभिः ॥ १

[1]ततस्तु निहतं दृष्ट्वा राक्षसेन्द्रं महाबलम् ।
बकाः परमसंत्रस्ता भीमं शरणमाययुः ॥ २

तान् भीतान् विगतज्ञानान् भीमः प्रहरतां वरः ।
सान्त्वयामास बलवान् समये च न्यवेशयत् ॥ ३

न हिंस्या मानुषा भूयो युष्माभिरिह कर्हि चित् ।
हिंसतां च वधश्शीघ्रम् एवमेव भविष्यति ॥ ४

तस्य तद्वचनं श्रुत्वा तानि रक्षांसि भारत ।
एवमस्त्विति तं प्राहुर् जगृहुस्समयं च तम् ॥ ५

1. क-ग-घ—पौराः परमसम्भ्रान्ता बकस्य परिचारकाः ।
आरामोद्यानचैत्यस्थाः क्षुद्रदेवाख्याश्रिताः ॥
[अधिकः पाठः]

[1]सगणस्तु बकभ्राता प्राणमत्पाण्डवं तदा ॥ ५॥

[2]ततः प्रभृति रक्षांसि तत्र सौम्यानि भारत ।
नगरे प्रत्यदृश्यन्त नरैर्नगरवासिभिः ॥ ६॥

ततो भीमस्तमादाय गतासुं पुरुषादकम् ।
निष्कर्णनेत्रं निर्जिह्वं निरसंज्ञं कण्ठपीडनात् ॥ ७॥

कुर्वन्तं बहुधा चेष्टां सनादं समकर्षत ॥ ८

[3]स एव राक्षसो नूनं पुनरायाति नः पुरीम् ।
सबालवृद्धाः पुरुषा इति भीताः प्रदुद्रुवुः ॥ ९
द्वारदेशे विनिक्षिप्य नगरस्य जगाम तम् ॥ ९॥

ततस्स भीमस्तं हत्वा गत्वा ब्राह्मणवेश्म तत् ।
बलीवर्दौ च शकटं ब्राह्मणाय न्यवेदयत् ॥ १०॥

[4]आचचक्षेऽथ तत्सर्वं रात्रौ युद्धमभूद्यथा ॥ ११

1. क-ग-घ—तत्पुरोपवनोद्याने चैत्यारामान् विसृज्य ते ।
विभीतककपित्थार्कप्लक्षशाल्मलिकाननम् ।
प्रपेदिरे भयत्रस्ता भीतसाध्वसकातराः ॥ [अधिकः पाठः]
2. क-ग-घ—यमुनातीरमुत्सृज्य प्रपेदे पितृकाननम् ॥ [अधिकः पाठः]
3. क-ख-ग—आच्छिद्य बाहू पादै च शिरश्च स वृकोदरः ।
द्वारेषु चतुर्षु क्षिप्त्वा पुनरागाद् स मारुतिः ॥
[अधिकः पाठः]
4. क-ग-घ—तूष्णीमन्तर्गृहं गच्छेत्यभिधाय द्विजोत्तमम् ।
मातृभ्रातृसमक्षं च गत्वा शयनमेत्य च ॥ [अधिकः पाठः]

[1]ततो नरा विनिष्क्रम्य नागराः काल्यमेव तु ।
ददृशुर्निहतं भूमौ राक्षसं रुधिरोक्षितम् ॥ १२
तमद्रिकूटप्रतिमं विनिकीर्णं भयावहम् ॥ १२॥
एकचक्रां पुनर्गत्वा प्रवृत्तिं प्रददुः पुरे ॥ १३
ततस्सहस्रशो राजन् नरा नगरवासिनः ।
तत्राजग्मुर्बकं द्रष्टुं सस्त्रीका [2]वृद्धबालकाः ॥ १४
[3]ततस्ते विस्मितास्सर्वे कर्म दृष्ट्वाऽतिमानुषम् ।
[4]दैवतान्यर्चयामासुस् सर्वाण्येव विशांपते ॥ १५
ततः परीक्षयामासुः कस्य वारोऽद्य भोजने ।
ज्ञात्वा चागम्य तं विप्रं पप्रच्छुः सर्वमेव तत् ॥ १६
पृच्छमानो बहुविधं रक्षमाणश्च पाण्डवान् ।
उवाच नागरान् सर्वान् काश्यपो नामतस्तदा ॥ १७

ब्राह्मणः—
[5]आज्ञापितं मामनिशं रुदन्तं सह बन्धुभिः ।

---

1. क-ग-घ—अशितोऽस्म्यद्य जननि तृप्तिर्मे दशवार्षिकी । [अधिकः पाठः]
2. क-ख-ग-घ—वृद्धकुमारकाः
3. क-ग—ददृशुस्ते बकं सर्वे त्रिशिरःपाणिपादकम् ।
निकृत्तवृक्षं निर्गुल्मं विनिकीर्णं गिरिं यथा॥ [अधिकः पाठः]
4. क-ग—विस्मितोत्फुल्लनयनास्तर्जन्यासक्तनासिकाः । [अधिकः पाठः]
5. घ—अद्य मे रक्षसो वारः पूर्वेद्युर्ज्ञापितो मम ।
ग्रामसाधारणेनैव सूचकेन पुरौकसः ॥ [अधिकः पाठः]

ददर्श ब्राह्मणः कश्चिन्मन्त्रसिद्धो महाबलः ॥ १८

परिपृच्छ्य स मां पूर्वं परिक्लेशं पुरस्य च ।
अब्रवीद्ब्राह्मणश्रेष्ठ आश्वास्य प्रहसन्निव ॥ १९

प्रापयिष्याम्यहं तस्मा इदमन्नं दुरात्मने ।
मन्निमित्तं भयं चापि न कार्यमिति वीर्यवान् ॥ २०

स तदन्नमुपादाय गतो बकवनं प्रति ।
तेन नूनं भवेदेतत् कर्म लोकहितं कृतम् ॥ २१

ततस्ते ब्राह्मणास्सर्वे क्षत्रियाश्च सुविस्मिताः ।
वैश्याश्शूद्राश्च मुदिताश् चक्रुर्ब्रह्ममहं तदा ॥ २२

ततो जानपदास्सर्वे आजग्मुर्नगरं प्रति ।
तमद्भुततमं द्रष्टुं पार्थास्तत्रैव चाभवन् ॥ २३

वेत्रकीयगृहे सर्वे परिवार्य वृकोदरम् ।
विस्मयादभ्यगच्छंस्तं भीमं भीमपराक्रमम् ॥ २४

न वै न संभवेत्सर्वं ब्राह्मणेषु महात्मसु ।
इति सत्कृत्य तं पौराः परिवव्रुस्समन्ततः ॥ २५

अयं त्राताऽर्थिनस्सर्वान् पितेव परमार्थवित् ।
अस्य शुश्रूष[1]या पादौ प्रतिवारमुपास्महे ॥ २६

पशुमद्दधिमच्चास्य वारं भक्तमुपाहरन् ॥ २६॥

---

1. क-ख-ग-ब—चः पादौ परिचारा उपास्महे ।

तस्मिन् हते ते पुरुषा भीतास्ते तमबोधयन् ॥ २७

ततस्संप्राद्रवन् पार्थास् सह मात्रा परन्तपाः ।
आगच्छन्नेकचक्रां ते पाण्डवास्संशितव्रताः ॥ २८

वैदिकाध्ययने युक्ता जटिला ब्रह्मचारिणः ।
अवसंस्ते च तत्रापि ब्राह्मणस्य निवेशने ॥ २९

मात्रा सहैकचक्रायां दीर्घकालं सुखोषिताः ॥ २९॥

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्याम्
आदिपर्वणि एकषष्ट्यधिकशततमोऽध्यायः ॥ १६१ ॥
॥ १० ॥ बकवधपर्वणि अष्टमोऽध्यायः ॥ ८ ॥
[अस्मिन्नध्याये २९॥ श्लोकाः]
॥ समाप्तं बकवधपर्व ॥

---

## ॥ द्विषष्ट्यधिकशततमोऽध्यायः ॥

( चैत्ररथपर्व ॥ )

ब्राह्मणगृहे प्रतिश्रयार्थमागतस्य कस्यचिद्ब्राह्मणस्य मुखात् पाण्डवानां द्रौपदीस्वयंवरश्रवणम् ॥ १ ॥ पाण्डवकृतधृष्टद्युम्नद्रौपदीसंभवप्रश्नस्य ब्राह्मणेनोत्तरकथनम् ॥ २ ॥

---

जनमेजयः—

ते तदा पुरुषव्याघ्रा निहत्य बकराक्षसम् ।
अत ऊर्ध्वं तदा ब्रह्मन् किमकुर्वत पाण्डवाः ॥ १

वैशम्पायनः—

तत्रैव न्यवसन् राजन् निहत्य बकराक्षसम् ।
अधीयाना नरव्याघ्रा ब्राह्मणस्य निवेशने ॥ २

ततः कदाचित्काले तु ब्राह्मणस्संशितव्रतः ।
प्रतिश्रयार्थी तद्वेश्म ब्राह्मणस्यागमत्तदा ॥ ३

स सम्यक् पूजयित्वा तु विद्वान् विप्रर्षभस्तदा ।
ददौ प्रतिश्रयं तस्मै तदा सर्वातिथिर्वशी ॥ ४

ततस्ते पाण्डवास्सर्वे कुन्ती च भरतर्षभ ।
उपासाञ्चक्रिरे विप्रं कथयन्तं कथाश्शुभाः ॥ ५

कथयामास देशान् स तीर्थानि विविधानि च ।
राज्ञश्च विविधाकारान् पुराणि च वनानि च ॥ ६

स तत्राकथयद्विप्रः कथान्ते जनमेजय ।
पञ्चालेष्वद्भुताकारं याज्ञसेन्यास्स्वयंवरम् ॥ ७

धृष्टद्युम्नस्य चोत्पत्तिं द्रोणस्य च शिखण्डिनः ।
अयोनिजत्वं कृष्णाया द्रुपदस्य महामखे ॥ ८

तदद्भुततमं श्रुत्वा पाण्डवास्सत्यविक्रमाः ।
विस्तरेणैव पप्रच्छुः कथां तां पुरुषर्षभाः ॥ ९

पाण्डवाः—

कथं द्रुपदपुत्रस्य धृष्टद्युम्नस्य पावकात् ।
संभवो वेदिमध्ये च कथं कृष्णा व्यजायत ॥ १०

कथं द्रोणान्महेष्वासात् सर्वाण्यस्त्राण्यशिक्षयत् ।
धृष्टद्युम्नो महेष्वासः कथं द्रोणस्य मृत्युवः ॥ ११
कथं प्रियसखायौ तौ भिन्नौ कस्य कृतेऽनघ ॥ ११॥

वैशम्पायनः—

एवं तैश्चोदितो विप्रो राजन् स पुरुषर्षभैः ।
कथयामास तत्सर्वं द्रौपदीसंभवं तदा ॥ १२॥

ब्राह्मणः—

गङ्गाद्वारं प्रति महान् बभूवर्षिर्महातपाः ।
भरद्वाजो महाप्राज्ञस् सततं संशितव्रतः ॥ १३॥
सोऽभिषेक्तुं गतो गङ्गां पूर्वमेवागतां सतीम् ।
ददर्शाप्सरसं तत्र घृताचीमाप्लुतामृषिः ॥ १४॥
तस्या वायुर्नदीतीरे वसनं व्यहरत्तदा ।
अपकृष्टाम्बरां दृष्ट्वा तामृषिश्चकमे तदा ॥ १५॥
तस्यां संसक्तमनसः कौमारब्रह्मचारिणः ।
[1]तस्य रेतस्तु चस्कन्द तदृषिर्द्रोण आदधे ॥ १६॥
ततस्समभवद्द्रोणः कुमारस्तस्य धीमतः ।
अध्यगीष्ट च वेदांश्च वेदाङ्गानि च सर्वशः ॥ १७॥
भरद्वाजसखा ह्यासीत् पृषतो नाम पार्थिवः ।

---

1. क-ग-ब—पश्यतो योनिसंस्थानमभ्यावयवसौष्ठवम् ।[अधिकः पाठः]

तस्यापि द्रुपदो नाम तदा समभवत्सुतः ॥ १८॥

स नित्यमाश्रमं गत्वा द्रोणेन सह पार्षतः ।
चिक्रीडाध्ययनं चैव चकार क्षत्रियर्षभः ॥ १९॥

ततस्तु पृषतेऽतीते स राजा द्रुपदोऽभवन् ।
द्रोणोऽपि रामं शुश्राव दित्सन्तं वसु सर्वशः ॥ २०॥

वनं तु प्रस्थितं रामं भरद्वाजसुतोऽब्रवीत् ।
आगतं वित्तकामं मां विद्धि द्रोणं द्विजर्षभम् ॥ २१॥

रामः—

शरीरमात्रमेवाद्य ममैतदवशेषितम् ।
अस्त्राणि वा शरीरं वा ब्रह्मन्नन्यतरं वृणु ॥ २२॥

द्रोणः—

अस्त्राणि चैव सर्वाणि तेषां संहारमेव च ।
प्रयोगं चैव सर्वेषां दातुमर्हति मे भवान् ॥ २३॥

रामः—

तथेत्युक्त्वा ततस्तस्मै प्रददौ भृगुनन्दनः ।
प्रतिगृह्य तदा द्रोणः कृतकृत्योऽभवत्तदा ॥ २४॥

संप्रहृष्टमनाश्चापि रामात् सद्यो न्यवर्तत ।
ब्रह्मास्त्रं समनुज्ञाप्य नरेष्वभ्यधिकोऽभवत् ॥ २५॥

ततो द्रुपदमासाद्य भारद्वाजः प्रतापवान् ।
अब्रवीत्पुरुषव्याघ्र सखायं विद्धि मामिति ॥ २६॥

द्रुपदः—

नाश्रोत्रियश्श्रोत्रियस्य नारथी रथिनस्सखा ।

नाराजा पार्थिवस्यापि सखिपूर्वं किमिष्यते ॥ २७॥

ब्राह्मणः—

स विनिश्चित्य मनसा पाञ्चाल्यं प्रति बुद्धिमान् ।

जगाम कुरुमुख्यानां नगरं नागसाह्वयम् ॥ २८॥

तस्मै पार्थान् समादाय वसूनि विविधानि च ।

प्राप्ताय प्रददौ भीष्मश् शिष्यान् द्रोणाय धीमते ॥ २९॥

द्रोणश्शिष्यांस्ततस्सर्वान् इदं वचनमब्रवीत् ।

समानीय ततश्शिष्यान् द्रुपदस्यासुखाय वै ॥ ३०॥

आचार्यवेतनं किंचित् प्रदेयं परिवर्तते ।

कृतास्त्रैस्तत् प्रदेयं स्यात् तदृतं वदतानघाः ॥ ३१॥

ब्राह्मणः—

तथेत्युवाच तं पार्थः पादौ जग्राह बुद्धिमान् ॥ ३२

[1]यदा च पाण्डवास्सर्वे कृतास्त्राः कृतनिश्रमाः ।

ततो द्रोणोऽब्रवीद्भूयो वेतनार्थमिदं वचः ॥ ३३

द्रोणः-

पार्षतो द्रुपदो नाम छत्रवत्यां नरेश्वरः ।

तस्यापकृष्य तद्राज्यं मम शीघ्रं प्रदीयताम् ॥ ३४

---

1. क-ग—विद्यानिष्क्रयजं वित्तं किं देयं ब्रूहि मे गुरो ।
घ—स विद्यानिष्क्रयं वित्तं किं देयं ब्रूहि मे गुरो । [अधिकः पादः]

ब्राह्मण:—

धार्तराष्ट्रैश्च सहिताः पाञ्चालान पाण्डवा ययुः ॥ ३४॥

यज्ञसेनेन संगम्य कर्णदुर्योधनादयः ।

निर्जितास्सन्न्यवर्तन्त तथाऽन्ये क्षत्रियर्षभाः ॥ ३५॥

ततः पाण्डुसुताः पञ्च निर्जित्य द्रुपदं युधि ।

द्रोणाय दर्शयामासुर् बद्ध्वा ससचिवं तदा ॥ ३६॥

महेन्द्र इव दुर्धर्षो महेन्द्र इव दानवम् ।

महेन्द्रपुत्रः पाञ्चालं जितवानर्जुनस्तदा ॥ ३७॥

तद्दृष्ट्वा तु महावीर्यं फल्गुनस्यामितौजसः ।

व्यस्मयन्त जनास्सर्वे यज्ञसेनस्य बान्धवाः ॥ ३८॥

नास्त्यर्जुनसमो वीर्ये राजपुत्र इति ब्रुवन् ॥ ३९

द्रोणः—

प्रार्थयामि त्वया सख्यं पुनरेव नराधिप ।

नाराजा किल वै राज्ञस् सखा भवितुमर्हति ॥ ४०

अतः प्रयतितं राज्ये यज्ञसेन मया तव ॥ ४०॥

राजाऽसि दक्षिणे कूले भागीरथ्याहमुत्तरे ।

कन्याकुब्जे च काम्पिल्ये वसेथास्त्वं नरोत्तम ॥ ४१॥

ब्राह्मणैस्सहितो राजन्नहिच्छत्रे वसाम्यहम् ॥ ४२

असत्कारस्स सुमहान् मुहूर्तमपि तस्य तु ।

नापैति हृदयाद्राज्ञो दुर्मनास्स कृशोऽभवत् ॥ ४३

ब्राह्मणः—

अमर्षी द्रुपदो राजा कर्म[1]सिद्धान् द्विजोत्तमान् ।
अन्विच्छन् परिचक्राम ब्राह्मणावसथान् बहून् ॥ ४४

पुत्रजन्म परीप्सन् वै शोकोपहतचेतनः ।
[2]नास्ति श्रेष्ठं ममापत्यम् इति मत्वा विचिन्तयन् ॥ ४५

जातान् पुत्रान् स निर्वेदाद् धिग्बहूनिति चाब्रवीत् ।
निर्वेदश्चाथ तस्यासीद् द्रोणाप्रियचिकीर्षया ॥ ४६

प्रभावं विनयं शिक्षां द्रोणस्य चरितानि च ।
क्षात्रेण च बलेनास्य पराजेतुं हि नाशकत् ॥ ४७

अप्राप्तवान्नरश्रेष्ठो यतमानोऽपि भारत ।
अभितस्सोऽथ कल्माषीं गङ्गाकूले परिभ्रमन् ॥ ४८

ब्राह्मणावसथं पुण्यम् आससाद महीपतिः ॥ ४८॥

तत्र नास्नातकः कश्चिन्न चासीदव्रती द्विजः ॥ ४९

अधीयानौ महाभागौ सोऽपश्यत्संशितव्रतौ ।
याजोपयाजौ ब्रह्मर्षी शाम्यन्तौ पृषतात्मजः ॥ ५०

संहिताध्ययने युक्तौ गोत्रतश्चापि काश्यपौ ।

---

1. क-ख-ग-घ—सिद्धिं द्विजोत्तमात् ।
2. क-ग—द्रोणेन वैरं द्रुपदो न सुष्वाप स्मरन् सदा । [अधिकः पाठः]

तरुणौ तौ युक्तरूपौ ब्राह्मणावृषिसत्तमौ ॥ ५१
स उपामन्त्रयामास सर्वकामैरतन्द्रितः ॥ ५१॥

स बुद्ध्वा बालबुद्धिं तु कनीयांसमुपह्वरे ।
प्रपेदे च्छन्दयन् कामैर् उपयाजं धृतव्रतम् ॥ ५२॥
पादशुश्रूषणे युक्तः प्रियवाक्सर्वकामदः ।
अर्चयित्वा यथान्यायम् उपयाजमुवाच ह ॥ ५३॥

यज्ञसेनः—

येन मे कर्मणा ब्रह्मन् पुत्रस्स्याद्द्रोणमृत्यवे ।
अर्जुनस्य तथा भार्या भवेद्या वरवर्णिनी ॥ ५४॥
उपयाज कृते तस्मिन् गवां दाताऽस्मि तेऽर्बुदं ॥ ५५
यदन्यत्ते द्विजश्रेष्ठ मनसस्सुप्रियं भवेत् ।
सर्वं तत्ते प्रदास्यामि न हि मेऽस्त्यत्र संशयः ॥ ५६

ब्राह्मणः—

इत्युक्तो नाहमित्येवं तमृषिः प्रत्यभाषत ।
आराधयिष्यन् द्रुपदस् स तं पर्यचरत् पुनः ॥ ५७
ततस्संवत्सरस्यान्ते द्रुपदं स द्विजोत्तमः ।
याजो द्रोणविनाशाय प्रतिजज्ञे तथाऽपि सः ॥ ५८
पाण्डोस्स्नुषार्थे कन्या च भवेदिति मतिर्मम ॥ ५८॥
तथेत्युक्त्वा तु तं यज्ञं पुत्रकामीयमारभत् ॥ ५९

गुर्वर्थ इति चाकामम् उपयाजश्चकार ह ॥ ५९॥
याजस्तु यजतां श्रेष्ठो हव्यवाहमतर्पयन् ॥ ६०
याजस्तु सवनस्यान्ते देवीमाह्वापयत्तदा ॥ ६०॥

याजः—

प्रेहि मां राज्ञि पृषति मिथुनं त्वामुपस्थितम् ।
कुमारश्च कुमारी च पतिवंशविवृद्धये ॥ ६१॥

देवी—

नालिप्तं वै मम मुखं पुण्यान् गन्धान् बिभर्मि च ।
न पत्नी तेऽस्मि सूत्यर्थं तिष्ठ याज मम प्रिये ॥ ६२॥

[1]याजः—

याजेन श्रपितं हव्यम् उपयाजेन मन्त्रितम् ।
कथं कामं न सन्दध्यात् पृषति प्रेहि तिष्ठ वा ॥ ६३॥

ब्राह्मणः—

एवमुक्त्वा तु याजेन हुते हविषि संस्कृते ।
उत्तस्थौ पावकात्तस्मात् कुमारो देवसन्निभः ॥ ६४॥
ज्वालावर्णो घोररूपः किरीटी वर्म चोत्तमम् ।
बिभ्रत् सखड्गस्सशरो धनुषा विनदन् मुहुः ॥ ६५॥
अध्यारोहद्दृढरथं तेन स प्रययौ तदा ॥ ६६

1. क-ग-घ—राज्या चैवमभिहितो यातो राज्ञीमुवाच ह ।
तत्सर्वं सहमानश्च ब्रह्मतेजोनिधिस्स्वयम्॥ [अधिकः पाठः]

ततः प्रणेदुः पाञ्चालाः प्रहृष्टास्साधु साध्विति ।
हर्षाविष्टांस्ततश्चैतान् नेयं सेहे वसुन्धरा ॥ ६७
भयापहो राजपुत्रः पाञ्चालानां यशस्करः ।
राज्ञश्शोकापहो जात एष द्रोणवधाय वै ॥ ६८
इत्युवाच महद्भूतम् अदृश्यं खेचरं तदा ॥ ६८॥
कुमारी चापि पाञ्चाली अर्जुनार्थे विनिर्मिता ।
सुभगा दर्शनीयाङ्गी वेदिमध्यात् समुत्थिता ॥ ६९॥
श्यामा पद्मपलाशाक्षी नीलकुञ्चितमूर्धजा ।
मानुषं विग्रहं कृत्वा श्रीस्साक्षाद्देववर्णिनी ॥ ७०॥
नीलोत्पलसमो गन्धो यस्याः [1]क्रोशात्प्रवायति ।
या बिभर्ति परं रूपं यस्या नास्ति समा भुवि ॥ ७१॥
सदृशी पाण्डुपुत्रस्य अर्जुनस्येति भारत ।
ऊचुः प्रहृष्टमनसो राजभक्तिपुरस्कृताः ॥ ७२॥
तां चापि जातां सुश्रोणीं वागुवाचाशरीरिणी ।
सर्वयोषिद्वरा कृष्णा क्षयं क्षत्रं निनीषति ॥ ७३॥
सुरकार्यमियं लोके करिष्यति सुमध्यमा ।
अस्या हेतोः क्षत्रियाणां महदुत्पत्स्यते भयम् ॥ ७४॥
तच्छ्रुत्वा सर्वपाञ्चालाः प्रणेदुस्सिंहसङ्घवत् ॥ ७५

---

1. क-ख-ग-घ—केशात्;

पाञ्चालराजस्तां दृष्ट्वा हर्षादश्रूण्यवर्तयन् ।
परिष्वज्य सुतां कृष्णां स्नुषा पाण्डोरिति ब्रुवन् ॥ ७६
अङ्कमारोप्य पाञ्चालीं राजा हर्षमवाप सः ॥ ७६॥
तयोश्च नामनी चक्रुर् द्विजास्सम्पूर्णमानसाः ॥ ७७

धृष्टत्वादप्रधृष्यत्वाद् द्युम्नादुत्संभवादपि ।
धृष्टद्युम्नः कुमारोऽयं द्रुपदस्य भवत्विति ॥ ७८
कृष्णेत्येवाब्रुवन् कृष्णां कृष्णाऽभूत्सा हि वर्णतः ॥ ७८॥
तथा तन्मिथुनं जज्ञे द्रुपदस्य महामखे ॥ ७९

धृष्टद्युम्नस्तु पाञ्चालान् सिंहनादेन नादयन् ।
सोऽध्यारोहद्रथवरं तेन संप्रययौ गृहम् ॥ ८०
कृष्णा च शिबिकां प्राप्य प्रविवेश निवेशनम् ॥ ८०॥
धृष्टद्युम्नं तु पाञ्चालीम् आनीय स्वं निवेशनम् ।
द्रोणं संपूज्य विधिवद् गुरुरित्येव धर्मतः ॥ ८१॥

परिदाय सुतं शिष्यं धृष्टद्युम्नं तु सोमकाः ।
आहू राज्ञः प्रसीदेति प्राब्रुवन् प्रियवादिनः । ८२॥
महाप्रभावो ब्रह्मर्षिर् ज्ञात्वा तस्य च संभवम् ॥
उपाकरोदस्त्रहेतोर् भारद्वाजः प्रतापवान् ॥ ८३॥

अमोक्षणीयं दैवं हि भावि मत्वा महामतिः ।
तथा तत्कृतवान् द्रोण आत्मकीर्त्यर्थकारणात् ॥ ८४॥

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्याम्
आदिपर्वणि द्विषष्ट्यधिकशततमोऽध्यायः ॥ १६२ ॥
॥ ११ ॥ चैत्ररथपर्वणि प्रथमोऽध्यायः ॥ १ ॥
[अस्मिन्नध्याये ८४॥ श्लोकाः]

---

## ॥ त्रिषष्ट्यधिकशततमोऽध्यायः ॥

जनवार्तया दुर्योधनेन पाण्डवानां दाहं, स्वपुरोहितवचनेन नाशराहित्यं च, ज्ञातवता तेषां जीवने सन्दिहानेन द्रुपदेन उद्घोषितस्य पुत्रीस्वयंवरस्य कुन्तीं प्रति ब्राह्मणेन कथनम् ॥ १ ॥ युष्मासु तत्रागतेष्वीश्वरेच्छया त्वत्पुत्राणामन्यतमं पाञ्चाली वृणुयादपीत्युक्तवता ब्राह्मणेन सह पाण्डवानां पाञ्चालनगरं प्रति गमनम् ॥ २ ॥

---

ब्राह्मणः—

श्रुत्वा जतुगृहे वृत्तं ब्राह्मणास्सपुरोहिताः ।
पाञ्चालराजं द्रुपदम् इदं वचनमब्रुवन् ॥ १

धार्तराष्ट्रास्सहामात्या मन्त्रयित्वा परस्परम् ।
पाण्डवानां विनाशाय मतिं चक्रुस्सुदुष्कराम् ॥ २

दुर्योधनेन प्रहितः पुरोचन इति श्रुतः ।
वारणावतमासाद्य कृत्वा जतुगृहं महत् ॥ ३

तस्मिन् गृहे सुविश्वस्तान् पाण्डवान् पृथया सह ।
अर्धरात्रे महाराज दग्धवान् स पुरोचनः ॥ ४
अग्निना तु स्वयमपि दग्धः क्षुद्रो नृशंसकृत् ॥ ४॥
एतच्छ्रुत्वा सुसंहृष्टो धृतराष्ट्रस्सबान्धवः ॥ ५
श्रुत्वा तु पाण्डवान् दग्धान् धृतराष्ट्रोऽम्बिकासुतः ।
एतावदुक्त्वा करुणं धृतराष्ट्रस्तु मारिष: ॥ ६
अल्पशोकः प्रहृष्टात्मा शशास विदुरं तदा ॥ ६॥
पाण्डवानां महाप्राज्ञ कुरु पिण्डोदकक्रियाम् ॥ ७
अद्य पाण्डुर्हतः क्षत्तः पाण्डवानां विनाशने ।
तस्माद्भागीरथीं गत्वा कुरु पिण्डोदकक्रियाम् ॥ ८
अहो विधिवशादेव गतास्ते यमसादनम् ।
इत्युक्त्वा प्रारुदत्तत्र धृतराष्ट्रस्ससौबलः ॥ ९
श्रुत्वा भीष्मेण विधिवत् कृतवानौर्ध्वदेहिकम् ।
पाण्डवानां विनाशाय कृतं कर्म दुरात्मना ॥ १०
एतत्कार्यस्य कर्ता तु न दृष्टो न श्रुतः पुरा ।
एतद्वृत्तं महाराज पाण्डवान् प्रति नश्श्रुतम् ॥ ११
श्रुत्वा तु वचनं तेषां यज्ञसेनो महामतिः ।
य-।। तज्जनकश्शोचेद् औरसस्य विनाशने ॥ १२
तथाऽतप्यत पाञ्चालः पाण्डवानां विनाशने ॥ १२॥

समाहूय प्रकृतयस् सहितास्सहबान्धवैः ।
कारुण्यादेव पाञ्चालः प्रोवाचेदं वचस्तदा ॥ १३॥

द्रुपदः—

अहो रूपमहो धैर्यम् अहो वीर्यं च शिक्षितम् ।
चिन्तयामि दिवारात्रम् अर्जुनं प्रति बान्धवाः ॥ १४॥
भ्रातृभिस्सहितो मात्रा सोऽदह्यत हुताशने ॥ १५

किमाश्चर्यमितो लोके कालो हि दुरतिक्रमः ।
मिथ्याप्रतिज्ञो लोकेषु किं वदिष्यामि सांप्रतम् ॥ १६

अन्तर्गतेन दुःखेन दह्यमानो दिवानिशम् ।
याजोपयाजौ सत्कृत्य याचितौ तौ मयाऽनघौ ॥ १७

भारद्वाजस्य हन्तारं देवीं चाप्यर्जुनस्य वै ।
लोकस्तद्वेद यच्चैव तथा याजेन वै श्रुतम् ॥ १८

याजेन पुत्रकामीयं हुत्वा चोत्पादितावुभौ ।
धृष्टद्युम्नश्च कृष्णा च मम तुष्टिकरावुभौ ॥ १९
किं करिष्यामि ते नष्टाः पाण्डवाः पृथया सह ॥ १९॥

ब्राह्मणः—

इत्येवमुक्त्वा पाञ्चालश् शुशोच परमातुरः ॥ २०

दृष्ट्वा शोचन्तमत्यर्थं पाञ्चालं गुरुरब्रवीत् ।
पुरोधास्सत्वसंपन्नस् सम्यग्विद्याविशेषवान् ॥ २१

गुरुः—

वृद्धानुशासने सक्ताः पाण्डवा धर्मचारिणः ।
तादृशा न विनश्यन्ति नैव यान्ति पराभवम् ॥ २२

मया दृष्टमिदं सत्यं शृणु[1]ष्व मनुजाधिप ।
ब्राह्मणैः कथितं सत्यं वेदेषु च मया श्रुतम् ॥ २३

बृहस्पतिमुखेनाथ पौलोम्या च पुरा श्रुतम् ।
नष्टमिन्द्रं बिसग्रन्थ्याम् उपश्रुत्या तु दर्शितम् ॥ २४

उपश्रुतिर्महाराज पाण्डवार्थे मया श्रुता ॥ २४॥
यत्र वा तत्र जीवन्ति पाण्डवास्ते न संशयः ॥ २५

मया दृष्टानि लिङ्गानि ध्रुवमेष्यन्ति पाण्डवाः ॥ २५॥
यन्निमित्तमिहायान्ति तच्छृणुष्व नराधिप ॥ २६

स्वयंवरः क्षत्रियाणां कन्यादाने प्रदर्शितः ।
स्वयंवरस्तु नगरे घुष्यतां राजसत्तम ॥ २७

यत्र वा निवसन्तस्ते पाण्डवाः पृथया सह ।
दूरस्था वा समीपस्थास् स्वर्गस्था वाऽपि पाण्डवाः ॥ २८

श्रुत्वा स्वयंवरं राजन् समेष्यन्ति न संशयः ।
तस्मात् स्वयंवरो राजन् घुष्यतां मा चिरं कृथाः ॥ २९

ब्राह्मणः—

श्रुत्वा पुरोहितेनोक्तं पाञ्चालः प्रीतिमांस्तदा ।

---

1. क-ख-ग-घ—स्वं

घोषयामास नगरे द्रौपद्यास्तु स्वयंवरम् ॥ ३०
पुष्यमासे तु रोहिण्यां शुक्लपक्षे शुभे तिथौ ।
दिवसैः पञ्चसप्तत्या भविष्यति स्वयंवरः ॥ ३१
देवगन्धर्वयक्षाश्च ऋषयश्च तपोधनाः ।
स्वयंवरं द्रष्टुकामा गच्छन्त्येव न संशयः ॥ ३२
तव पुत्रा महात्मानो दर्शनीया विशेषतः ।
यदृच्छया तु पाञ्चाली गच्छेद्वा मध्यमं पतिम् ॥ ३३
को हि जानाति लोकेषु प्रजापति[1]विधिं परम् ।
तस्मात् सपुत्रा गच्छेथा ब्राह्मणि यदि रोचते ॥ ३४
नित्यकालं सुभिक्षास्ते पाञ्चालास्तु तपोधने ॥ ३४॥
यज्ञसेनस्तु राजाऽसौ ब्रह्मण्यस्सत्यसङ्गरः ।
ब्रह्मण्या नागराश्चाथ ब्राह्मणाश्चातिथिप्रियाः ॥ ३५॥
नित्यकालं प्रदास्यन्ति आमन्त्रणमयाचितम् ॥ ३६
अहं च तत्र गच्छामिममैभिस्सह शिष्यकैः ।
एकसार्थाः प्रयातास्स्मो ब्राह्मणि यदि रोचते ॥ ३७

वैशम्पायनः—

एतावदुक्त्वा वचनं ब्राह्मणो विरराम ह ॥ ३७॥

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्याम्
आदिपर्वणि त्रिषष्ट्यधिकशततमोऽध्यायः ॥ १६३ ॥
॥ ११ ॥ चैत्ररथपर्वणि द्वितीयोऽध्यायः ॥ २ ॥
[ अस्मिन्नध्याये ३७॥ श्लोकाः ]

---

1 क-ख-ग-घ—शुभम् ।

## चतुष्षष्ट्यधिकशततमोऽध्यायः ॥

पाण्डवानां द्रुपदनगरप्रस्थानम् ॥ १ ॥ व्यासेन द्रौपदीवृत्तान्तकथनं च ॥ २ ॥

वैशम्पायनः—

[1]एवं श्रुत्वा तु कौन्तेया ब्राह्मणात् संशितव्रताः ।
मनसा द्रौपदीं जग्मुर् अनङ्गशरपीडिताः ॥ १
ततस्तां रजनीं राजञ् छल्यविद्धा इवाभवन् ।
सर्वथाऽस्वस्थमनसो बभूवुस्ते महारथाः ॥ २
ततः कुन्ती सुतान् दृष्ट्वा विभ्रान्तान् हृतचेतसः ।
युधिष्ठिरमुवाचेदं वचनं सत्यवादिनी ॥ ३

कुन्ती—

चिररात्रोषितास्स्मेह ब्राह्मणस्य निवेशने ।
रममाणाः पुरे रम्ये लब्धभैक्षा युधिष्ठिर ॥ ४
यानीह रमणीयानि वनान्युपवनानि च ।
सर्वाणि तानि दृष्टानि पुनः पुनररिन्दम ॥ ५
[2]पुनर्दृष्टानि तान्येव प्रीणयन्ति न नस्तथा ।
भैक्षं च न तथा वीर लभ्यते कुरुनन्दन ॥ ६

1. क-ख-ग-घ—एतच्छ्रुत्वा ततस्सर्वे पाण्डवा भरतर्षभ ।
2. घ—तथा दृष्टानि तान्येव तथा न प्रीणयन्ति माम् ।

ते वयं साधु पञ्चालान् गच्छाम यदि मन्यसे ।
अपूर्वदर्शनं तात रमणीयं भविष्यति ॥ ७

सुभिक्षाश्चैव पाञ्चालाश् श्रूयन्ते शत्रुकर्शन ।
यज्ञसेनस्तु राजाऽसौ ब्रह्मण्य इति शुश्रुम ॥ ८

एकत्र चिरवासोऽयं क्षमो न च मतो मम ।
तस्मात्तत्रैव गच्छामो वयं तु यदि मन्यसे ॥ ९

युधिष्ठिरः—

भवत्या यन्मतं कार्यं [1]त्विहास्माकं परं हितम् ।
अनुजांस्तु न जानामि गच्छेयुर्नेति वा पुनः ॥ १०

वैशम्पायनः—

ततः कुन्ती भीमसेनम् अर्जुनं च यमौ तथा ।
उवाच गमनं ते च तां तथेत्यब्रुवंस्तथा ॥ ११

तत आमन्त्र्य तं विप्रं कुन्ती राजसुतैस्सह ।
प्रतस्थे नगरीं रम्यां द्रुपदस्य महात्मनः ॥ १२

वसत्सु तेषु प्रच्छन्नं पाण्डवेषु महात्मसु ।
आजगाम तदा द्रष्टुं व्यासस्सत्यवतीसुतः ॥ १३

तमागतमभिप्रेक्ष्य प्रत्युद्गम्य परन्तपाः ।
प्रणिपत्याभिवाद्यैनं तस्थुः प्राञ्जलयोऽग्रतः ॥ १४

---

1. क-ख-ग-ब—तद

समनुज्ञाप्य तान् सर्वान् आसीनान् मुनिरब्रवीत् ।
[1]प्रसन्नं पूजितः पार्थैः प्रीतिपूर्वमिदं वचः ॥ १५

व्यासः—

[2]अपि धर्मेण वर्तध्वं शास्त्रेणैव परन्तपाः ।
अपि विप्रेषु वः पूजा पूजार्हेषु यथाविधि ॥ १६

वैशम्पायनः—

अथ धर्मार्थवद्वाक्यम् उक्त्वा स भगवानृषिः ।
विचित्रास्तु कथास्तास्ताः पुनरेवेदमब्रवीत् ॥ १७

व्यासः—

आसीत्तपोनिधेः काचिद् ऋषेः कन्या मनस्विनी ।
विलग्नमध्या सुश्रोणी सुभ्रूस्सर्वगुणान्विता ॥ १८
कर्मभिस्स्वकृतैस्सा तु दुर्भगा समपद्यत ।
नाध्यगच्छत् पतिं सा तु कन्या रूपवती सती ॥ १९
तपस्तप्तुमथारेभे पत्यर्थमसुखं ततः ।
तोषयामास [3]महता तपसोग्रेण शङ्करम् ॥ २०
तस्या[4]स्तु भगवांस्तुष्टस् तामुवाच [5]तपस्विनीम् ।
वरं वरय भद्रं ते वरदोऽस्मि तवेप्सितम् ॥ २१

---

1. क-ग—प्रसभं; ख—प्रसन्नः
2. क-ग-घ—अपि धर्मेषु वर्तध्वे परेषु स्वेषु भूमिप ।
3. क-ख-ग-घ—तपसा भगवन्तं महेश्वरम् ।
4. क-ख-ग-घ—स्स
5. क-ख-ग-घ—यशा

अथेश्वरमुवाचेदम् आत्मनस्सा हितं वचः ॥ २१॥
पतिं सर्वगुणोपेतम् इच्छामीति पुनः पुनः ॥ २२
तामथ प्रत्युवाचेदम् ईशानो वदतां वरः ।
पञ्च ते पतयो भद्रे भविष्यन्तीति शङ्करः ॥ २३
[1]प्रतिब्रुवाणामेकं मे पतिं देहीति शङ्करम् ।
पुनरेवाब्रवीदेनाम् इदं वचनमुत्तमम् ॥ २४
पञ्चकृत्वस्त्वयाप्युक्तः पतिं देहीत्यहं पुनः ॥ २४॥
देहमन्यं गतायास्ते यथोक्तं वै भविष्यति ॥ २५
द्रुपदस्य कुले जाता कन्या सा वररूपिणी ॥ २५॥
निर्दिष्टा भवतां पत्नी कृष्णा पार्षत्यनिन्दिता ॥ २६
पाञ्चालनगरीं तस्मात् प्रविशध्वं महाबलाः ॥ २६॥
सुखिनस्तामनुप्राप्य भविष्यथ न संशयः ॥ २७
राज्यं चैवागतं प्राप्ता इन्द्रप्रस्थं गमिष्यथ ॥ २७॥

वैशम्पायनः—

एवमुक्त्वा महाभागः पाण्डवानां पितामहः ।
पार्थानामन्त्र्य कुन्तीं च प्रातिष्ठत महातपाः ॥ २८॥

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्याम्
आदिपर्वणि चतुष्षष्ट्यधिकशततमोऽध्यायः ॥ १६४ ॥
॥ ११ ॥ चैत्ररथपर्वणि तृतीयोऽध्यायः ॥ ३ ॥
[अस्मिन्नध्याये २८॥ श्लोकाः ।]

---

1. क-ग—एवमुक्ता ततः कन्या देवं वरदमीश्वरम् ।
एकमिच्छाम्यहं देव त्वत्प्रसादात् पतिं प्रभो॥[अधिकः पाठः]

## ॥ पञ्चषष्ट्यधिकशततमोऽध्यायः ॥

पाञ्चालनगरं गच्छतां पाण्डवानां मार्गे ब्राह्मणसंवादः ॥ १ ॥

वैशम्पायनः—

ततस्ते नरशार्दूला भ्रातरः पञ्च पाण्डवाः ।
प्रययुर्द्रौपदीं द्रष्टुं तञ्च देशं महोत्सवम् ॥ १

ते प्रयाता नरव्याघ्रा मात्रा सह परन्तपाः ।
ब्राह्मणान् ददृशुर्मार्गे गच्छतस्सहितान् बहून् ॥ २

तानूचुर्ब्राह्मणा राजन् पाण्डवान् ब्रह्मचारिणः ।
क भवन्तो गमिष्यन्ति कुतो वाऽऽगच्छतेति ह ॥ ३

युधिष्ठिरः—

आगतानेकचक्रायास् सोदर्यान् देवदर्शिनः ।
भवन्तोऽपि विजानन्तु सङ्गता मातृचारिणः ॥ ४

गच्छामोऽद्यैव पाञ्चालान् द्रुपदस्य निवेशनम् ।
स्वयंवरो महांस्तत्र भविता सुमहोत्सवः ॥ ५

ब्राह्मणाः—

एकसार्थं प्रयातास्स्म वयमप्यत्र गामिनः ।
तत्र ह्यद्भुतसङ्काशो भविता सुमहोत्सवः ॥ ६

यज्ञसेनस्य दुहिता द्रुपदस्य महात्मनः ।

वेदिमध्यात् समुत्पन्ना पद्मपत्रनिभेक्षणा ॥ ७

दर्शनीयाऽनवद्याङ्गी सुकुमारी यशस्विनी ।
धृष्टद्युम्नस्य भगिनी द्रोणशत्रोः प्रतापिनः ॥ ८

यो जातः कवची खड्गी सशरस्सशरासनः ।
सुसमिद्धे महाराजा पावके पावकप्रभः ॥ ९

स्वसा तस्यानवद्याङ्गी सुकुमारी यशस्विनी ।
नीलोत्पलसमो गन्धो यस्याः क्रोशात्प्रवायति ॥ १०

तां यज्ञसेनस्य सुतां स्वयंवरकृतक्षणाम् ।
संगच्छामो वयं द्रष्टुं तं च देशं महोत्सवम् ॥ ११

राजानो राजपुत्राश्च यज्वानो भूरिदक्षिणाः ।
स्वाध्यायवन्तश्शुचयो महात्मानो महाव्रताः ॥ १२

तरुणा दर्शनीयाश्च नानादेशसमागताः ।
महारथाः कृतास्त्राश्च समुपेष्यन्ति भूमिपाः ॥ १३

ते तत्र विविधं दानं विजयार्थे नरेश्वराः ।
प्रदास्यन्ति धनं गाश्च भक्ष्यं भोज्यं च सर्वशः ॥ १४

प्रतिगृह्य च तत्सर्वं दृष्ट्वा चैव स्वयंवरम् ।
अनुभूयोत्सवं चवै गमिष्यामो यथेप्सितम् ॥ १५

नटा वैतालिकाश्चैव नर्तकास्तत्र मागधाः ।

नियोधकाश्च देशेभ्यस् समेष्यन्ति महाबलाः ॥ १६

एवं कौतूहलं दृष्ट्वा भुक्त्वा च प्रतिगृह्य च ।
सहास्माभिर्महात्मानो रङ्गं प्रति निवत्स्यथ ॥ १७

दर्शनीयांश्च वस्सर्वान् देवरूपानिव स्थितान् ।
समीक्ष्य कृष्णा वरयेत् सङ्गम्यान्यतमं पतिम् ॥ १८

अयं भ्राता च वश्शीघ्रं दर्शनीयो महाभुजः ।
आरभ्यमाणो विजयेत् सङ्गत्या द्रविणं महत् ॥ १९

युधिष्ठिरः—

परमं भोगमिच्छामो द्रष्टुं देशं महोत्सवम् ।
भवद्भिस्सहितास्सर्वे कन्यायास्तं स्वयंवरम् ॥ २०

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्याम्
आदिपर्वणि पञ्चषष्ट्यधिकशततमोऽध्यायः ॥ १६५ ॥

॥ ११ ॥ चैत्ररथपर्वणि चतुर्थोऽध्यायः* ॥ ४ ॥

[अस्मिन्नध्याये २० श्लोकाः]

---

* ख-कोशे नात्राध्यायसमाप्तिः ।

## ॥ षट्षष्ट्यधिकशततमोऽध्यायः ॥

अर्धरात्रे पाण्डवानां गङ्गातीरगमनम् ॥ १ ॥ तत्र स्त्रीभिस्सह जलक्रीडां कुर्वता चित्ररथेन गन्धर्वेण सह अर्जुनस्य युद्धम् ॥ २ ॥ आग्नेयास्त्रेण दग्धाद्रथादधःपतितस्य तस्यार्जुनेन ग्रहणम् ॥ ३ ॥ गन्धर्व-पत्न्या प्रार्थितस्य युधिष्ठिरस्याज्ञया गन्धर्वमोचनम् ॥ ४ ॥

---

वैशम्पायनः—

ते प्रतस्थुः पुरस्कृत्य मातरं भरतर्षभाः ।
समैरुदङ्मुखैर्मार्गैर् यथोद्दिष्टं [1]परन्तपाः ॥ १

ते गच्छन्तस्त्वहोरात्रं पाञ्चालनगरं प्रति ।
अभ्याजग्मुर्लोकनदीं गङ्गां भागीरथीं प्रति ॥ २

चन्द्रास्तमयवेलायाम् अर्ध[2]रात्रे समागते ।
ते च वारि निमज्जन्तस् तीर्थे सोमश्रवायणम् ॥ ३

उल्मुकं तु समुद्यम्य तेषामग्रे धनञ्जयः ।
प्रकाशार्थं ययौ तत्र रक्षार्थं च [3]धनञ्जयः ॥ ४

[4]अथ तत्र जले रम्ये विजने क्रीडयन् स्त्रियः ।
[5]ईर्ष्युर्गन्धर्वराजस्तु जलक्रीडामुपागतः ॥ ५

---

1. क-ख-ग—च भारत
2. क-ख-ग—रात्रसमागमे
3. क-ख-ग-च—महारथः
4. क-ख-ग-च—तत्र गङ्गाजले रम्ये विविक्ते
5 क-ख-ग-च—तदा गन्धर्वराजश्च

शब्दं तेषां स शुश्राव नद्यां समुपसर्पताम् ।
तेन शब्देन चाविष्टश् चुक्रोध सहसा बली ॥ ६

स दृष्ट्वा पाण्डवांस्तत्र सह मात्रा परन्तपान् ।
विस्फारयन् धनुर्घोरम् इदं वचनमब्रवीत् ॥ ७

अङ्गारवर्णः—

सन्ध्या संरज्यते घोरा पूर्वरात्रागमे च या ।
अशीतिभिस्त्रुटिभिर्हीनांस् त्रीन् मुहूर्तान् प्रचक्षते ॥ ८

विहितान् कामचाराय यक्षगन्धर्वरक्षसाम् ।
शेषमन्यन्मनुष्याणां कामचारमिह स्मृतम् ॥ ९

लोभात् प्रचारं चरतस् तासु वेलासु वै नरान् ।
उपक्रम्य निगृह्णीमो राक्षसैस्सह बालिशान् ॥ १०

अहो निशां प्राप्नुवतो भूयिष्ठां पापचेतसः ।
[1]निघ्नन्त्येते नित्यमेव क्षणेषु नृपतीनपि ॥ ११

आराच्च तिष्ठतास्माकं समीपं नोपगच्छत ।
कस्मान्मां नाभिजानीथा प्राप्तं भागीरथीजलम् ॥ १२

अङ्गारवर्णं गन्धर्वं वित्त मां प्रबलाश्रयम् ।
अहं हि मानी चेर्ष्युश्च कुबेरस्य प्रियस्सखा ॥ १३

अङ्गारवर्णमिति च वचनं ख्यातितं मम ।

1. क-ख-ग-घ—गर्हाण्येताभिन्नित्यमेषु

अनुगङ्गं महच्चित्तम् अस्मिन् नित्यं वसाम्यहम् ॥ १४

न कौणपाश्शृङ्गिणो वा न च देवा न चारणाः ।

[1]इदं समुपसर्पन्ति किं मां समुपसर्पथ ॥ १५

अर्जुनः—

समुद्रे हिमवत्पार्श्वे नद्यामस्यां च दुर्मते ।

रात्रावहनि सन्धौ वा कस्य कॢप्तः परिग्रहः ॥ १६

वयं च शक्तिसम्पन्ना अकाले त्वां च धृष्णुमः ।

अशक्ता भवने क्रूरान् युष्मानर्चन्ति मानवाः ॥ १७

पुरा हिमवतश्चैषा हेमशृङ्गाद्विनिस्सृता ।

गङ्गा प्रतिदिशं गत्वा सप्तधा प्रतिपद्यते ॥ १८

वेला भूत्वा चैकवप्रा शुचिराकाशगा पुनः ॥ १८॥

देवेषु गङ्गा गन्धर्व प्राप्नोत्यलकनन्दताम् ॥ १९

तथा पितृन् वैतरणी दुस्तरा पापकर्मभिः ॥ १९॥

गङ्गा भुवि च गन्धर्व यदा द्वैपायनोऽब्रवीत् ॥ २०

असम्बाधा देवनदी सर्वेषां पावनी शुभा ॥ २०॥

कथमिच्छसि तां रोद्धुं नैष धर्मस्सनातनः ॥ २१

अनिवार्यमसम्बाधं तव वाचा कथं वयम् ।

न स्पृशेम यथाकामं पुण्यं भागीरथीजलम् ॥ २२

---

1. क-ख-ग-घ—कुबेरस्य यथोष्णीषं

वैशम्पायनः—

अङ्गारवर्णस्तच्छ्रुत्वा क्रुद्ध आयम्य कार्मुकम् ।
मुमोच सायकान् दीप्तान् अहीन् दीप्ताननानिव ॥ २३

उल्मुकं भ्रामयंस्तूर्णं पाण्डवश्चर्म चोत्तमम् ।
व्यपोवाह शरांस्तस्य सर्वानेव धनञ्जयः ॥ २४

अर्जुनः—

बिभीषिकां हि गन्धर्व नास्त्रज्ञेषु प्रयोजय ।
अस्त्रज्ञेषु प्रयुक्तेयं फेनवत् प्रविलीयते ॥ २५

मानुषानति गन्धर्वान् सर्वान् गन्धर्व लक्षये ।
तस्मादस्त्रेण दिव्येन योत्स्येऽहं न तु मायया ॥ २६

तदिदं जातवेदास्तु प्रादादस्त्रं बृहस्पतेः ।
तस्मादगाद्भरद्वाजं गुरुपुत्रं शतक्रतोः ॥ २७

भरद्वाजात्ततो रामं भार्गवाच्च गुरुर्मम ।
स त्विदं मह्यमददाद् द्रोणो ब्राह्मणसत्तमः ॥ २८

वैशम्पायनः—

इत्युक्त्वा पाण्डवः क्रुद्धो गन्धर्वाय मुमोच ह ।
प्रदीप्तमस्त्रमाग्नेयं ददाहास्य रथं ततः ॥ २९

रथात्तु विप्लुतं तं तु गन्धर्वं सुमहाबलम् ।
अस्त्रतेजःप्रमूढं च प्रपतन्तमवाङ्मुखम् ॥ ३०

शिरोरुहेषु जग्राह माल्यवत्सु धनञ्जयः ॥ ३०॥

भ्रातॄन् प्रति चकर्षाथ सोऽस्त्रपातादचेतनम् ॥ ३१

युधिष्ठिरं तस्य भार्या प्रपेदे शरणार्थिनी ।

नाम्ना कुम्भीनसी नाम पतित्राणमभीप्सती ॥ ३२

गन्धर्वी—

त्राहि त्वं मां महाराज पतिं चेमं विमुञ्च मे ।

गन्धर्वीं शरणं प्राप्तां दीनां कुम्भीनसीं प्रभो ॥ ३३

वैशम्पायनः—

श्रुत्वाऽनुग्रहभावाच्च पार्थः पार्थमुवाच ह ॥ ३३॥

युधिष्ठिरः—

जितं युद्धे यशोहीनं स्त्रीनाथमपराक्रमम् ।

धनञ्जय महाबाहो मुञ्चेममरिसूदन ॥ ३४॥

अर्जुनः—

अङ्गेमां प्रतिपद्यस्व गच्छ गन्धर्व मा शुचः ।

प्रदिशत्यभयं तेऽत्र कुरुराजो युधिष्ठिरः ॥ ३५॥

इति श्रीमहाभारते शतसहस्त्रिकायां संहितायां वैयासिक्याम्
आदिपर्वणि षट्षष्ट्यधिकशततमोऽध्यायः ॥ १६६ ॥

॥ ११ ॥चैत्ररथपर्वणि पञ्चमोऽध्यायः ॥ ५ ॥

[अस्मिन्नध्याये ३५॥ श्लोकाः]

## ॥ सप्तषष्ट्यधिकशततमोऽध्यायः ॥

गन्धर्वप्रार्थनया आग्नेयास्त्रपरिवर्तनेन तस्माद्गान्धर्वास्त्रग्रहणानुमोदनम् ॥ १ ॥

गन्धर्वः—

जितोऽहं पूर्वकं नाम मुञ्चाम्यङ्गारवर्णताम् ।
यशोहीनं तु न श्लाघ्यं स्वं नाम जनसंसदि ॥ १

साध्विमं लब्धवाँल्लाभं यो हि दिव्यास्त्रधारिणम् ।
गन्धर्वे मायया योध्वम् इच्छामि परया वरम् ॥ २

अस्त्राग्निना विचित्रोऽयं दग्धो मे रथ उत्तमः ।
सोऽहं चित्ररथो भूत्वा नाम्ना दग्धरथोऽभवम् ॥ ३

संभृता त्वेव विद्येयं तपसेह पुरा मया ।
निवेदयिष्ये तामद्य प्राणदाय महात्मने ॥ ४

संस्तम्भितं च तरसा जितं शरणमागतम् ।
योऽरिं संयोजयेत् प्राणैः कल्याणं किं न सोऽर्हति ॥ ५

चाक्षुषी नाम विद्येयं यां सोमाय ददौ मनुः ।
ददौ स विश्वावसवे मम विश्वावसुर्ददौ ॥ ६

सेयं कापुरुषं प्राप्ता गुरुदत्ता प्रणश्यति ।
आगमोऽस्या मया प्रोक्तस् तस्या वीर्यं निबोध मे ॥ ७

यच्चक्षुषा द्रष्टुमिच्छेत् त्रिषु लोकेषु किञ्चन ।

तत्पथे यादृशं चेच्छेत् तादृशं द्रष्टुमर्हति ॥ ८

समापद्येत षण्मासान् स्थितो विद्यां लभेदिमाम् ।
अन्वानेष्याम्यहं विद्यां स्वयं तुभ्यं व्रते कृते ॥ ९

विद्यया ह्यनया राजन् वयं नृभ्यो विशेषिणः ॥ ९॥
अनाहार्याश्च देवानाम् अनुभावात्प्रवर्तिनाम् ।

गन्धर्वजानामश्वानाम् अहं पुरुषसत्तम ॥ १०॥
भ्रातृभ्यस्तव तुभ्यं च पृथग्दाता शतं शतं ॥ ११

देवगन्धर्ववाहास्ते दिव्यगन्धा मनोजवाः ।
[1]क्षीणक्षीणा भवन्त्यन्ये न हीयन्ते च रंहसः ॥ १२

पुरा कृतं महेन्द्रस्य वज्रं वृत्रनिबर्हणे ।
दशधा शतधा चैव तच्छीर्णं वृत्रमूर्धनि ॥ १३

तस्या भागः पृथग्भूतस् सर्वभूतैरुपास्यते ।
लोके यत्साधनं किंचित् सा वै वज्रतनुस्स्मृता ॥ १४

अग्नि वज्रं ब्राह्मणानां क्षत्रियाणां रथं विदुः ।
वैश्यवज्रं तु वै सीरं शुश्रूषा हीनयोनिषु ॥ १५

साधनं क्षत्रधर्मस्य मनोज्ञा वाजिनस्स्मृताः ।
रथाङ्गं च रथाङ्गेण धनुश्च भरतर्षभ ॥ १६

---

1. क-ख-ग-घ—क्षीणे क्षीणे

कामवर्णाः कामगमाः कामतस्समुपस्थिताः ।
इमे गन्धर्वजाः कामं पूरयिष्यन्ति मे हयाः ॥ १७

अर्जुनः—

यदि प्रीतेन दत्तं वा संशये जीवितस्य वा ।
विद्यां वित्तं शुभं वाऽपि न तद्गन्धर्व कामये ॥ १८

गन्धर्वः—

संयोगो वै प्रीतिकरस् स सत्सु प्रतिदृश्यते ।
जीवितस्य प्रदानेन प्रीतो विद्यां ददामि ते ॥ १९

त्वत्तो ह्यहं ग्रहीष्यामि अस्त्रमाग्नेयमुत्तमम् ।
तथैव सख्यं बीभत्सो चिराय भरतर्षभ ॥ २०

अर्जुनः—

अश्वेणास्त्रं वृणे वृत्तस् संयोगश्शाश्वतोऽस्तु मे ।
सखे गन्धर्व तद्ब्रूहि युष्मभ्यो यद्भयं त्यजे ॥ २१

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्याम्
आदिपर्वणि सप्तषष्ट्यधिकशततमोऽध्यायः ॥ १६७ ॥

॥ ११ ॥ चैत्ररथपर्वणि षष्ठोऽध्यायः ॥ ६ ॥

[ अस्मिन्नध्याये २१ श्लोकाः ]

---

## ।। अष्टषष्ट्यधिकशततमोऽध्यायः ।।

गन्धर्वेण पाण्डवानां पुरोहितसम्पादनोपदेशः ।। १ ।।

अर्जुनः—

कारणं ब्रूहि गन्धर्व किं तद्येन स्म धर्षिताः ।
यद्ब्रह्म विदुषस्सर्वे सन्तो रात्रावरिन्दमाः ।। १

गन्धर्वः—

अनग्नयोऽनाहुतयो न च विप्रपुरस्कृताः ।
धर्षितास्स्थ ततो यूयं मया पाण्डवनन्दन ।। २

यक्षराक्षसगन्धर्वपिशाचोरगपन्नगाः ।
धर्षयन्ति नरव्याघ्र न ब्राह्मणपुरस्कृतान् ।। ३

जानता च मया तस्मात् तेजश्चाभिजनं च वः ।
इयं मतिमतां श्रेष्ठ धर्षितुं वै कृता मतिः ।। ४

को हि वस्त्रिषु लोकेषु न वेद भरतर्षभ ।
स्वैर्गुणैर्विस्तृतं श्रीमद् यशोऽग्र्यं भूरिवर्चसाम् ।। ५

यक्षराक्षसगन्धर्वाः पिशाचोरगपन्नगाः ।
विस्तारं कुरुवंशस्य श्रीमतः कथयन्ति ते ।। ६

नारदप्रभृतीनां च महर्षीणां मया पुरा ।
श्रुतं कथयतां पार्थ कुरूणां वंशमादितः ।। ७

स्वयं चापि मया दृष्टश् चरता सागराम्बराम् ।
इमां वसुमतीं कृत्स्नां प्रभावस्सुकुलस्य च ॥ ८
वेदे धनुषि चाचार्यम् अभिजानामि चार्जुन ।
विश्रुतं त्रिषु लोकेषु भारद्वाजं यशस्विनम् ॥ ९
सर्ववेदविदां श्रेष्ठं सर्वशस्त्रभृतां वरम् ।
द्रोणमिष्वस्त्रकुशलं धनुष्यङ्गिरसां वरम् ॥ १०
धर्मं वायुं च शक्रं च विजानाम्यश्विनावपि ।
पाण्डुं च नृपशार्दूलं षडेतान् कीर्तिवर्धनान् ॥ ११
पुत्रानेतानहं पार्थ देवमानुषसत्तमान् ॥ ११॥
दिव्यात्मानो महात्मानस् सर्वशस्त्रभृतां वराः ।
भवन्तो भ्रातरस्सर्वे शूराश्च चरितव्रताः ॥ १२॥
उत्तमां तु मनोवृत्तिं भवतां भावितात्मनाम् ।
जानन्नपि च वः पार्थ कृतवानिह धर्षणाम् ॥ १३॥
स्त्रीसकाशेषु कौरव्य न पुमान् क्षन्तुमर्हति ॥ १४
धर्षणामात्मनः पश्यन् बाह्वद्रविणमाश्रितः ।
नक्तं च बलमस्माकं भूय एवाभिवर्धते ॥ १५
यतस्ततो मां कौन्तेय सदारं मन्युराविशत् ॥ १५॥
सोऽहं त्वयेह विजितस् सङ्ख्ये तापत्यनन्दन ॥ १६
येनेमं विधिना सर्वं कीर्त्यमानं निबोध मे ॥ १६॥

ब्रह्मचर्यं परो धर्मस् स चापि नियतस्त्वयि ।
यस्मादस्मादहं पार्थ रणेऽस्मि विजितस्त्वया ॥ १७॥

यस्तु स्यात् क्षत्रियः कश्चित् कामवृत्तः परन्तप ।
नक्तं च युधि युध्येत न स जीवेत् कथञ्चन ॥ १८॥

यस्तु स्यात् कामवृत्तोऽपि राजा राजीवलोचनः ।
जयेन्नक्तञ्चरान् सर्वान् स पुरोहितधूर्गतः ॥ १९॥

तस्मात्तापत्य यत्किञ्चिन्नृणां श्रेय इहेप्सितम् ।
तस्मिन् कर्मणि योक्तव्या दान्तात्मानः पुरोहिताः ॥ २०॥

वेदे षडङ्गे नियताश् शुचयस्सत्यवादिनः ।
धर्मात्मानः कृतात्मानस् स्युर्नृपस्य पुरोहिताः ॥ २१॥

जयश्च नियतो राज्ञस् स्वर्गश्च स्यादनन्तरम् ।
यस्य स्याद्धर्मविद्वाग्मी पुरोधाश्शीलवाञ्छुचिः ॥ २२॥

अलब्धस्य च लाभाय लब्धस्य परिरक्षणे ।
पुरोहितं प्रकुर्वीत राजा गुणसमन्वितम् ॥ २३॥

पुरोहितमते तिष्ठन् य इच्छेत् पृथिवीं नृप ।
प्राप्तुं मेरुवरोत्तंसां सागराम्बरधारिणीम् ॥ २४॥

न हि केवलशौर्येण तापत्याभिजनेन च ।
जयेदब्राह्मणः कश्चिद् भुवि भूमिपतिः क्वचित् ॥ २५॥

तस्मादेवं विजानीहि कुरूणां कीर्तिवर्धन ।
ब्राह्मणप्रमुखं राज्यं शक्यं पालयितुं चिरम् ॥ २६॥

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्याम्
आदिपर्वणि अष्टषष्ट्यधिकशततमोऽध्यायः ॥ १६८ ॥
॥ ११ ॥ चैत्ररथपर्वणि सप्तमोऽध्यायः ॥ ७ ॥
[अस्मिन्नध्याये २६॥ श्लोकाः]

## ॥ ऊनसप्तत्युत्तरशततमोऽध्यायः ॥

सूर्यकन्याया तपत्या उपाख्यानम्—स्वभक्ताय संवरणाय स्वकन्यां दातुं सवितुर्निश्चयः ॥ १ ॥ मृगयार्थं संवरणस्य गिरौ तपतीदर्शनेन कामोत्पत्तिः ॥ २ ॥ राजनि तया सह भाषितुं प्रवृत्ते तपत्या अन्तर्धानम् ॥ ३ ॥

अर्जुनः—

तापत्य इति यद्वाक्यम् उक्तवानसि मामिह ।
तदहं ज्ञातुमिच्छामि तापत्यार्थविनिश्चयम् ॥ १

तपती नाम का चैषा तापत्या यत्कृते वयम् ।
कौन्तेया हि वयं साधो यत्तदिच्छामि वेदितुम् ॥ २

वैशम्पायनः—

एवमुक्तस्स गन्धर्वः प्रत्युवाच यशस्विनम् ।
अर्जुनं त्रिषु लोकेषु विश्रुतं श्रुतिवद्वचः ॥ ३

गन्धर्वः—

हन्त ते कथयिष्यामि कथामतिमनोरमाम् ।
यथावदखिलां पार्थ धर्म्यां धर्मभृतां वर ॥ ४
उक्तवानस्मि यद्वाक्यं तापत्य इति यद्वचः ।
तत्तेऽहं कथयिष्यामि शृणुष्वैकमना नृप ॥ ५
य एष दिवि तेजस्वी नाकं व्याप्नोति तेजसा ।
सा तस्य तपती नाम बभूव सदृशी सुता ॥ ६
विवस्वतो वै कौन्तेय सावित्र्यवरजा विभो ।
विश्रुता त्रिषु लोकेषु तपती तपसा युता ॥ ७
न देवी नासुरी चैव न यक्षी न च किन्नरी ।
नाप्सरा न च गन्धर्वी तथारूपा न काचन ॥ ८
सुविभक्तानवद्याङ्गी [1]सुस्मितायतलोचना ।
स्वाचारा चैव साध्वी च सुवेषा चैव भामिनी ॥ ९
न तस्यास्सदृशं कञ्चित् त्रिषु लोकेषु भारत ।
भर्तारं सविता मेने रूपशीलकुलैश्श्रुतैः ॥ १०
संप्राप्तयौवनां पश्यन् देवो दुहितरं शुभाम् ।
व्यष्टवर्षां तु तां पश्यन् सविता रूपशालिनीम् ॥ ११
नोपलेभे ततश्शान्तिं संप्रदानं विचिन्तयन् ॥ ११॥
अथर्क्षपुत्रः कौन्तेय कुरूणामृषभो युवा ।

1. क-ख-ग-च—स्मि

सूर्यमाराधयामास नृपस्संवरणस्तदा ॥ १२॥
अर्घ्यमाल्योपहारैश्च शश्वत् स नृपतिस्तदा ।
नियमैरुपवासैश्च तपोभिर्विविधैरपि ॥ १३॥
शुश्रूषुरनहंवादी शश्वत् कौरवनन्दन ।
अंशुमन्तं समुद्यन्तं पूजयामास भक्तिमान् ॥ १४॥
ततः कृतज्ञो नृपतिं रूपेणासदृशं भुवि ।
तपत्यास्सदृशं मेने सूर्यस्संवरणं पतिम् ॥ १५॥
दातुमैच्छत् ततः कन्यां तस्मै संवरणाय ताम् ।
नृपोत्तमाय कौरव्य विश्रुताभिजनाय च ॥ १६॥
यथा हि दिवि दीप्तांशुः प्रभासयति तेज[1]सा ।
तथा भुवि महीपालो दीप्त्या संवरणोऽभवत् ॥ १७॥
यथाऽर्चयन्ति चादित्यम् उद्यन्तं ब्रह्मवादिनः ।
तथा संवरणं पार्थ ब्राह्मणावरजाः प्रजाः ॥ १८॥
स सोममति कान्तत्वाद् आदित्यमति तेजसा ।
बभूव नृपतिश्श्रीमान् सुहृदां दुर्हृदामपि ॥ १९॥
एवंगुणाय नृपते तथावृत्ताय नित्यशः ।
तस्मै दातुं मनश्चक्रे तपतीं तपनस्स्वयम् ॥ २०॥
स कदाचिदथो राजा श्रीमानुरुयशा भुवि ।

1. अ—नात्

चचार मृगयां पार्थ पर्वतोपवने किल ॥ २१॥

चरतो मृगयां तस्य क्षुत्पिपासाश्रमान्वितः ।
ममार राज्ञः कौन्तेय गिरावप्रतिमो हयः ॥ २२॥

स मृताश्वश्चरन् पार्थ पद्भ्यामेव गिरौ नृपः ।
ददर्शासदृशीं लोके कन्यामायतलोचनाम् ॥ २३॥

स एक एकामासाद्य कन्यां तामरिमर्दनः ।
तस्थौ नृपतिशार्दूलः पश्यन्नविचलेक्षणः ॥ २४॥

स हि तां तर्कयामास रूपतो नृपतिश्श्रियम् ।
पुनस्स तर्कयामास रवेर्भ्रष्टामिव प्रभाम् ॥ २५॥

गिरिप्रस्थे तु सा यस्मिन् स्थिता स्वसितलोचना ।
स स वृक्षलतागुल्मो हिरण्मय इवाभवत् ॥ २६॥

अवमेने स तां दृष्ट्वा सर्वप्राणभृतां स्त्रियः ।
अवाप्तं चात्मनो मेने स राजा चक्षुषः फलम् ॥ २७॥

जन्मप्रभृति यत्किञ्चिद् दृष्टवान् स महीपतिः ।
रूपं न सदृशं तस्यास् तर्कयामास किञ्चन ॥ २८॥

तया बद्धमनश्चक्षुः पाशैर्गुणमयैस्तदा ।
नातिचक्राम तं देशं बुबुधे न च किञ्चन ॥ २९॥

अस्या नूनं विशालाक्ष्यास् सदेवासुरमानुषम् ।

लोकं निर्मथ्य धात्रेदं रूपमाविष्कृतं कृतम् ॥ ३०॥
इति तां तर्कयामास रूपद्राविणसंपदा ।
कन्यामसदृशीं लोके नृपस्संवरणस्तदा ॥ ३१॥
तां च दृष्ट्वैव कल्याणीं कल्याणाभिजनो नृपः ।
जगाम मनसा चिन्तां काममार्गणपीडितः ॥ ३२॥
दुह्यमानस्सुतीव्रेण नृपतिर्मन्मथाग्निना ।
अप्रगल्भः प्रगल्भां ताम् उवाचाथ यशस्विनीम् ॥ ३३॥

संवरणः—

काऽसि कस्यासि रम्भोरु किमर्थं चेह तिष्ठसि ।
कथं च निर्जनेऽरण्ये चरस्येका शुचिस्मिते ॥ ३४॥
त्वं हि सर्वानवद्याङ्गी सर्वाभरणभूषिता ।
विभूषणमिवैतेषां भूषणानामभीप्सितम् ॥ ३५॥
न देवीं नासुरीं चैव न यक्षीं न च किन्नरीम् ।
न च भोगवतीं मन्ये न गन्धर्वीं न मानुषीम् ॥ ३६॥
या हि दृष्टा मया काश्चिच् छ्रुताश्चापि वराङ्गनाः ।
न तासां सदृशीं मन्ये त्वामहं मत्त[1]गामिनि ॥ ३७॥

गन्धर्वः—

एष तां स महीपालो बभाषे न तु सा तदा ।
कामार्तं निर्जनेऽरण्ये प्रत्यभाषत किञ्चन ॥ ३८॥

---

1. क-ख-ग-घ—काशिनि

तथा लालप्यमानस्य पार्थिवस्यायतेक्षणा ।
सौदामिनीव चाभ्रेषु तत्रैवान्तरधीयत ॥ ३९॥

तामन्विच्छन् स नृपतिः परिचक्राम तत्तदा ।
वनं वनजपत्राक्षीं भ्रमन्नुन्मत्तवत्तदा ॥ ४०॥

अपश्यमानस्स तु तां बहु तत्र विलप्य च ।
निश्चेष्टः कौरवश्रेष्ठ मुहूर्तं स व्यतिष्ठत ॥ ४१॥

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्याम्
॥ आदिपर्वणि ऊनसप्तत्युत्तरशततमोऽध्यायः ॥ १६९ ॥
॥ ११ ॥ चैत्ररथपर्वणि अष्टमोऽध्यायः ॥ ८ ॥
[अस्मिन्नध्याये ४१॥ श्लोकाः]

## ॥ सप्तत्यधिकशततमोऽध्यायः ॥

भूतले पतितं राजानं दृष्ट्वा तत्समीपे तपत्या आगमनम् ॥ १ ॥ तयोः संवादः ॥ २ ॥

गन्धर्वः—

अथ तस्यामदृश्यायां नृपतिर्भावमोहितः ।
पातनश्शत्रुसङ्घानां पपात धरणीतले ॥ १

तस्मिन्निपतिते भूमावथ सा चारु[1]वर्णिनी ।

1. क-ख-ग-घ—हासिनी

पुनः पीनायतश्रोणी दर्शयामास तं नृपम् ॥ २
आबभाषेऽथ कल्याणी वाचा मधुरया नृपम् ।
तं कुरूणां कुलकरं कामाभिहतचेतसम् ॥ ३

तपती—

उत्तिष्ठोत्तिष्ठ भद्रं ते न त्वमर्हस्यरिन्दम ।
मोहं नृपतिशार्दूल गन्तुमाविष्कृतं कृतम् ॥ ४

गन्धर्वः—

एवमुक्तस्स नृपतिर् वाचा मधुरया गिरा ।
ददर्श विपुलश्रोणीं तामेवाभिमुखे स्थिताम् ॥ ५
अथ तामसितापाङ्गीम् आबभाषे नराधिपः ।
मन्मथाभिपरीतात्मा सन्दिग्धाक्षरया गिरा ॥ ६

संवरणः—

साधु मामसितापाङ्गि कामार्तं मत्तकाशिनि ।
भजस्वेह यथा नाहं प्राणाञ्जह्यां शुचिस्मिते ॥ ७
त्वदर्थं हि विशालाक्षि मामयं निशितैश्शरैः ।
कामः कमलगर्भाभे प्रतिविध्यन्न शाम्यति ॥ ८
दष्टं स्त्रस्तमनाक्रन्दं भद्रे काममहाहिना ।
मां च पीनघनश्रोणि संजीवयितुमर्हसि ॥ ९
त्वदधीनाश्च मे प्राणाः किन्नरोद्गीतभाषिणि ।
चारुसर्वानवद्याङ्गी पद्मेन्दुसदृशानने ॥ १०
न ह्यहं त्वदृते भीरु शक्ष्ये जीवितुमात्मना ।

तस्मात् कुरु विशालाक्षि मय्यनुक्रोशमङ्गने ॥ ११

भक्तं मामसितापाङ्गे न परित्यक्तुमर्हसि ।
त्वं हि मां प्रीतियोगेन त्रातुमर्हसि भामिनि ॥ १२

गान्धर्वेण च मां भीरु विवाहेनैहि सुन्दरि ॥ १२॥

विवाहानां हि रम्भोरु गान्धर्वश्श्रेष्ठ उच्यते ॥ १३

कन्या—

नाहमीशाऽऽत्मनो राजन् कन्या पितृमती ह्यहम् ।
मयि चेदस्ति ते प्रीतिर् याचस्व पितरं मम ॥ १४

यथा हि ते मया प्राणास् संहृताश्च नरेश्वर ।
दर्शनादेव भूयस्त्वं तथा प्राणान् ममाहरः ॥ १५

न चाहमीशा देहस्य तस्मान्नृपतिसत्तम ।
समीपं नोपगच्छामि न स्वतन्त्रा हि योषितः ॥ १६

का हि सर्वेषु लोकेषु विश्रुताभिजनं नृपम् ।
कन्या नाभिलषेन्नाथं भर्तारं भक्तवत्सलम् ॥ १७

तस्मादेवं गते काले याचस्व पितरं मम ।
आदित्यं प्रणिपातेन तपसा नियमेन च ॥ १८

स चेत् कामयते दातुं तव मामरिमर्दन ।
भविष्याम्यथ ते राजन् सततं वशवर्तिनी ॥ १९

अहं हि तपती नाम सावित्र्यवरजा सुता ।
अस्य लोकप्रदीपस्य सवितुः क्षत्रियर्षभ ॥ २०

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्याम्
आदिपर्वणि सप्तत्यधिकशततमोऽध्यायः ॥ १७० ॥
॥ ११ ॥ चैत्ररथपर्वणि नवमोऽध्यायः ॥ ९ ॥
[अस्मिन्नध्याये २० श्लोकाः]

---

## ॥ एकसप्तत्यधिकशततमोऽध्यायः ॥

तपत्यां मोहितस्य संवरणस्य सूर्योपासनसमये वसिष्ठस्यागमनम् ॥ १ ॥

---

गन्धर्वः—

एवमुक्त्वा ततस्तूर्णं जगामोर्ध्वमनिन्दिता ।
तपती तपतीत्येव विललापातुरो नृपः ॥ १

प्रास्खलच्चा[1]तुरो राजा पुनरुत्थाय धावति ।
धावमानस्तु तपतीम् अदृष्ट्वैव महीपते ॥ २

स तु राजा पुनर्भूमौ तत्रैव निपपात ह ॥ २॥

अमात्यस्सानुयात्रस्तु संददर्श महावने ।
क्षितौ निपतितं काले शक्रध्वजमिवोच्छ्रितम् ॥ ३॥

तं हि दृष्ट्वा महेष्वासं निरश्वं पतितं क्षितौ ।

---

1. क-ग-ग-च—सकृत्

बभूव सोऽस्य सचिवस् संप्रदीप्त इवाग्निना ॥ ४॥
त्वरया चोपसङ्गम्य स्नेहादागतसंभ्रमः ।
तं समुत्थापयामास नृपतिं काममोहितम् ॥ ५॥
भूतलाद्भूमिपालेशं पितेव पतितं सुतम् ॥ ६
प्रज्ञया तपसा चैव वृद्धः कीर्त्या दमेन च ।
अमात्यस्तं समुत्थाप्य बभूव विगतज्वरः ॥ ७
उवाच चैनं कल्याणं वाचा मधुरयोत्थितम् ।
मा भैर्मनुजशार्दूल भद्रं चास्तु तवानघ ॥ ८
क्षुत्पिपासाश्रमार्तं तु तर्कयामास तं नृपम् ।
पतितं पातनं सङ्ख्ये शात्रवाणां महीतले ॥ ९
वारिणाऽथ सुशीतेन शिरस्तस्यावसेचयत् ।
अस्पृशन्मकुटं राज्ञः पुण्डरीकसुगन्धिना ॥ १०
ततः प्रत्यागतप्राणस् तद्बलं बलवान्नृपः ।
सर्वं विसर्जयामास तमेकं सचिवं विना ॥ ११
ततस्तस्याज्ञया राज्ञो विप्रतस्थे महद्बलम् ।
स तु राजा गिरिप्रस्थे तस्मिन् पुनरुपाविशत् ॥ १२
स तु तस्मिन् गिरिवरे शुचिर्भूत्वा कृताञ्जलिः ।
आरिराधयिषुस्सूर्यं तस्थावूर्ध्वभुजः क्षितौ ॥ १३
जगाम मनसा चैवं वसिष्ठमृषिसत्तमम् ।

पुरोहितममित्रघ्नं तदा संवरणो नृपः ॥ १४
नक्तंदिवमथैकत्र स्थिते तस्मिञ्जनाधिपे ।
अथाजगाम विप्रर्षिस् तदा द्वादशमेऽहनि ॥ १५
स विदित्वैव नृपतिं तपत्या हृतमानसम् ।
दिव्येन चक्षुषा ज्ञात्वा भावितात्मा महानृषिः ॥ १६
तथा तु नियतात्मानं तं वै नृपतिसत्तमम् ।
आबभाषे स धर्मात्मा तस्यैवार्थचिकीर्षया ॥ १७
स तस्य मनुजेन्द्रस्य पश्यतो भगवानृषिः ।
ऊर्ध्वमाचक्रमे द्रष्टुं भास्करं भास्करद्युतिः ॥ १८
योजनानां तु नियुतं क्षणाद्गत्वा तपोधनः ।
सहस्रांशुं ततो विप्रः कृताञ्जलिरुपस्थितः ॥ १९
वसिष्ठोऽहमिति प्रीत्या स चात्मानं न्यवेदयत् ॥ १९॥
तमुवाच महातेजा विवस्वान् मुनिसत्तमम् ।
महर्षे स्वागतं तेऽस्तु कथयस्व यथेप्सितम् ॥ २०॥

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्याम्
आदिपर्वणि एकसप्तत्यधिकशततमोऽध्यायः ॥ १७१ ॥
॥ ११ ॥ चैत्ररथपर्वणि दशमोऽध्यायः ॥ १० ॥
[अस्मिन्नध्याये २०॥ श्लोकाः]

---

## ॥ द्विसप्तत्यधिकशततमोऽध्यायः ॥

सूर्यनिकटं प्राप्य वसिष्ठेन आदित्यस्तुतिकरणम् ॥ १ ॥

गन्धर्वः—

योजनानां चतुष्षष्टिं निमेषात् त्रिशतं तथा ।
अश्वैर्गच्छति नित्यं यस् तत्पार्श्वस्थोऽब्रवीदिदम् ॥ १

वसिष्ठः—

अजाय लोकत्रयपावनाय
भूतात्मने गोपतये वृषाय ।
सूर्याय सर्गप्रलयालयाय
नमो महाकारुणिकोत्तमाय ॥ २

विवस्वते ज्ञानभृ[1]दन्तरात्मने
जगत्प्रदीपाय जगद्धितैषिणे ।
स्वयंभुवे दीप्तसहस्रचक्षुषे
सुरोत्तमायामिततेजसे नमः ॥ ३

नमस्सवित्रे जगदेकचक्षुषे
जगत्प्रसूतिस्थितिनाशहेतवे ।
त्रयीमयाय त्रिगुणात्मधारिणे
विरिञ्चनारायणशङ्करात्मने ॥ ४

---

1. अ—दृन्तराय

सूर्यः—

स्तुतोऽस्मि वरदस्तेऽहं वरं वरय सुव्रत ।

स्तुतिस्त्वयोक्ता भक्तानां जप्येयं वरदोस्म्यहम् ॥ ५

वसिष्ठः—

यैषा ते तपती नाम सावित्र्यवरजा सुता ।

तां त्वां संवरणस्यार्थे वरयामि विभावसो ॥ ६

स हि राजा बृहत्कीर्तिर् धर्मार्थविदुदारधीः ।

युक्तस्संवरणो भर्ता दुहितुस्ते वियद्गम ॥ ७

गन्धर्वः—

इत्युक्तस्सविता तेन ददामीत्येव निश्चितः ।

प्रत्यभाषत तं विप्रं प्रतिनन्द्य दिवाकरः ॥ ८

सूर्यः—

वरस्संवरणो राज्ञां त्वमृषीणां वरो मुने ।

तपती योषितां श्रेष्ठा किमन्यत्रापवर्जनात् ॥ ९

गन्धर्वः—

ततस्सर्वानवद्याङ्गीं तपतीं तपनस्स्वयम् ।

ददौ संवरणस्यार्थे वासिष्ठाय महात्मने ॥ १०

प्रतिजग्राह तां कन्यां महर्षिस्तपतीं तदा ।

वसिष्ठोऽथ विसृष्टश्च पुनरेवाजगाम ह ॥ ११

यत्र विख्यातकीर्तिस्स कुरूणामृषभोऽभवत् ।

स राजा मन्मथाविष्टस् तद्गतेनान्तरात्मना ॥ १२

दृष्ट्वा तु देवकन्यां तां तपतीं चारुहासिनीम् ।

वसिष्ठेन सहायान्तीं संहृष्टोऽभ्यधिकं बभौ ॥ १३
कृच्छ्रे द्वादशरात्रे तु तस्य राज्ञस्समापिते ।
आजगाम विशुद्धात्मा वसिष्ठो भगवानृषिः ॥ १४
तपसाऽऽराध्य वरदं देवं गोपतिमीश्वरम् ।
लेभे संवरणो भार्यां वसिष्ठस्य च तेजसा ॥ १५
ततस्तस्मिन् गिरिश्रेष्ठे देवगन्धर्वसेविते ।
जग्राह विधिवत् पाणिं तपत्यास्स नरर्षभः ॥ १६
वसिष्ठेनाभ्यनुज्ञातस् तस्मिन्नेव धराधरे ॥ १६॥
सोऽकामयत राजर्षिर् विहर्तुं सह भार्यया ॥ १७
ततः पुरेषु राष्ट्रेषु वाहनेषु बलेषु च ।
आदिदेश महीपालस् तमेव सचिवं तदा ॥ १८
नृपतिं तं ह्यनुज्ञाप्य वसिष्ठोऽथापचक्रमे ।
स हि राजा गिरौ तस्मिन् विजहारामरोपमः ॥ १९
ततो द्वादशवर्षाणि काननेषु जलेषु च ॥
रेमे तस्मिन् गिरौ राजा सहितो भार्यया यदा ॥ २०
तस्य राज्ञः पुरे तस्मिन् समा द्वादश कृत्स्नशः ।
न ववर्ष सहस्राक्षो रहितेऽ[1]थ नृपे तदा ॥ २१
तत् क्षुधार्तैर्निरानन्दैश् शवभूतैस्तदा नरैः ।
अभवत् प्रेतराजस्य पुरं प्रेतैरिवावृतम् ॥ २२
ततस्तत्तादृशं दृष्ट्वा स एव भगवानृषिः ।

---

1. अ—ख—च—स नरेश्वरे

अभ्यपद्यत धर्मात्मा वसिष्ठो नरसत्तमम् ॥ २३
तं च पार्थिवशार्दूलम् आनयामास तत्पुरम् ।
तपत्या सहितं तत्र वर्षे द्वादशमे गते ॥ २४
ततः [1]प्रवृष्टस्तत्रासीद् यथा[2]कालमरिन्दम ॥
तस्मिन्नृपतिशार्दूले प्रविष्टे नगरं पुनः ॥ २५
प्रववर्ष सहस्राक्षस् सस्यानि जनयन् प्रभुः ॥ २५॥
ततस्सराष्ट्रं मुमुदे तत् पुरं परया मुदा ।
तेन पार्थिवमुख्येन भावितं भावितात्मना ॥ २६॥
ततो द्वादश वर्षाणि पुनरीजे जनाधिपः ।
पत्न्या तपत्या सहितो यथा शच्या मरुत्पतिः ॥ २७॥
[3]एवमासीन्महाभागा तपती नाम पूर्विका ।
[4]सैषा वैवस्वती कन्या लब्धा संवरणेन ह ॥ २८॥
तस्यां स जनयामास कुरुं संवरणो नृपः ।
तपत्यां तपतां श्रेष्ठ तापत्यस्त्वं ततोऽर्जुन ॥ २९॥
कुरूद्भवा यतो यूयं कौरवाः कुरवस्तथा ।
पौरवा आजमीढाश्च भारता भरतर्षभ ॥ ३०॥
तापत्यमखिलं प्रोक्तं वृत्तान्तं तव पूर्विकम् ।
पुरोहितमुखा यूयं भुङ्क्षध्वं पृथिवीमिमाम् ॥ ३१॥

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्याम्
आदिपर्वणि द्विसप्तत्यधिकशततमोऽध्यायः ॥ १७२ ॥
॥ ११ ॥ चैत्ररथपर्वणि एकादशोऽध्यायः ॥ ११ ॥
[अस्मिन्नध्याये ३१॥ श्लोकाः]

---

*1. क-ख-ग-घ—प्रहृष्टः  2. क-ख-ग-घ—कालं सुरारिहा
3. अ-कोशे—इमे चत्वारः श्लोका न दृश्यन्ते ।
4. घ—तव वैवस्वती पार्थ तापत्यस्त्वं यथा मतः ।

## ।। त्रिसप्तत्यधिकशततमोऽध्यायः ।।



गन्धर्वेण वसिष्ठमाहात्म्यकथनपूर्वकं पाण्डवानां पुरोहितसंग्रहणोपदेशः ॥ १ ॥ वसिष्ठाश्रमं प्राप्तस्य विश्वामित्रस्य वसिष्ठधेनुयाचनम् ॥ २ ॥ धेनुनिमित्तं तयोर्विवादः ॥ ३ ॥ विश्वामित्रपराजयश्च ॥ ४ ॥



वैशम्पायनः—

स गन्धर्ववचश्श्रुत्वा तत्तदा भरतर्षभ ।
अर्जुनः परया प्रीत्या पूर्णचन्द्र इवाबभौ ।। १
उवाच च महाप्राज्ञो गन्धर्वं कुरुसत्तमः ।। १।।

अर्जुनः—

जातकौतूहलोऽतीव वसिष्ठस्य तपोबलात् ।। २
वसिष्ठ इति यस्यैतद् ऋषेर्नाम त्वयेरितम् ।
एतदिच्छाम्यहं श्रोतुं यथावत्तद्वदस्व मे ।। ३
स एष गन्धर्वपते पूर्वेषां नः पुरोहितः ।
आसीदेतन्ममाचक्ष्व क एष भगवान् ऋषिः ।। ४

गन्धर्वः—

ब्रह्मणो मानसः पुत्रो वसिष्ठोऽरुन्धतीपतिः ।। ४।।
तपसा निर्जितौ शश्वद् अजेयावमरैरपि ।
कामक्रोधावुभौ यस्य चरणौ संववाहतुः ।। ५।।

[1]यश्च नोच्छेदनं चक्रे कुशिकानामुदारधीः ।
विश्वामित्रापराधेन धारयन् मन्युमुत्तमम् ॥ ६॥
पुत्रव्यसनसंतप्तश् शक्तिमानपि यत् प्रभुः ॥ ७
विश्वामित्रविनाशाय मेने कर्म न दारुणम् ॥ ७॥
मृतांश्च पुनराहर्तुं शक्तः पुत्रान् यमक्षयात् ।
कृतान्तं नातिचक्राम वेलामिव महोदधिः ॥ ८॥
यं प्राप्य विजितात्मानं महात्मानं नराधिपाः ।
इक्ष्वाकवो महीपाला लेभिरे पृथिवीमिमाम् ॥ ९॥
पुरोहितवरं प्राप्य वसिष्ठमृषिसत्तमम् ।
ईजिरे क्रतुभिश्चापि नृपास्ते कुरुनन्दन ॥ १०॥
स हि तान् याजयामास सर्वान् नृपतिसत्तमान् ।
ब्रह्मर्षिः पाण्डवश्रेष्ठ बृहस्पतिरिवामरान् ॥ ११॥
यथा वसिष्ठेन सह स सौदासस्सुसङ्गतः ।
रक्षोभिर्विप्रमुक्तस्तु विश्वामित्रेण योजितैः ॥ १२॥
तथा द्विजसहायान् वै न गन्धर्वा न राक्षसाः ।
शक्ताः प्रार्थयितुं वीर मनसाऽपि महाबलाः ॥ १३॥

---

[1]. क-ख-ग-घ—यथा कामश्च क्रोधश्च निर्जितावजितौ नरैः ।
जितारयो जिता लोकाः पन्थानश्च जिता दिशः ॥
[अधिकः पाठः]

तस्माद्धर्मप्रधानस्तु वेदशास्त्रप्रदीपितः ।
ब्राह्मणो गुणवान् कश्चित् पुरोधाः परिमृश्यताम् ॥ १४॥

क्षत्रियेण तु जातेन पृथिवीं जेतुमिच्छता ।
पूर्वं पुरोहितः कार्यः पार्थ राज्यविवृद्धये ॥ १५॥

महीं जिगीषता राज्ञा ब्रह्म कार्यं पुरस्कृतम् ।
तस्मात् पुरोहितः कश्चिद् गुणवानस्तु वो द्विजः ॥ १६॥

अर्जुनः—

किं निमित्तमभूद्वैरं विश्वामित्रवसिष्ठयोः ।
[1]वसिष्ठस्याश्रमे तत्र शंस तत्सर्वमेत्र मे ॥ १७॥

गन्धर्वः—

इदं वासिष्ठमाख्यानं पुराणं परिचक्षते ।
पार्थ सर्वेषु लोकेषु यथावत्तन्निबोध मे ॥ १८॥

कन्याकुब्जे महानासीत् पार्थिवो भरतर्षभ ।
गाधीति विश्रुतो लोके सत्यधर्मपरायणः ॥ १९॥

तस्य धर्मात्मनः पुत्रस् समृद्धबलवाहनः ।
विश्वामित्र इति ख्यातो बभूव रिपुनाशनः ॥ २०॥

स चचार सहामात्यो मृगयां सुमहावने ।
मृगाभिघ्नन् वराहांश्च चचार मरुधन्वसु ॥ २१॥

---

1. क-ख-ग-घ—वसतोराश्रमे

व्यायामार्तस्तु स तदा मृगलिप्सुः पिपासितः ।
आजगाम रथिश्रेष्ठो वसिष्ठस्याश्रमं प्रति ॥ २२॥

[1]वसिष्ठस्तु स तं दृष्ट्वा राजर्षिमतिथिं तदा ।
विश्वामित्रं सशिष्यो वै प्रतिजग्राह पूजया ॥ २३॥

पाद्येनार्घ्यप्रदानेन स्वागतेन च तं नृपम् ।
प्रतिजग्राह धर्मात्मा वन्येन हविषा तदा ॥ २४॥

तस्यैव कामधुग्धेनुर् वसिष्ठस्य महात्मनः ।
उक्ता नन्दिनि धत्स्वेति सा कामान् दुदुहे तदा ॥ २५॥

बाष्पाढ्यस्योदनस्यात्र राशयः पर्वतोपमाः ।
निष्ठानानि च सूपांश्च दधिकुल्यास्तथैव च ॥ २६॥

कूपांश्च दधिसंपूर्णान् गुडानां राशयस्तथा ।
भोजनानि महार्हाणि तत्र तत्र सहस्रशः ॥ २७॥

इक्षून् मधूनि लाजांश्च मैरेयांश्च वरासवान् ।
वस्त्राणि च महार्हाणि कम्बलानि सहस्रशः ॥ २८॥

ग्राम्यारण्यौषधीश्चैव दुदुहे पय एव च ॥ २९

षड्रसं चामृतरसं रसायनमनुत्तमम् ॥ २९॥

भोजनीयानि पेयानि भक्ष्याणि विविधानि च ।
लेह्यान्यमृतकल्पानि चोष्याणि च तथाऽर्जुन ॥ ३०॥

---

1. घ—समागतमभिप्रेक्ष्य वसिष्ठश्श्रेष्ठभागृषिः ।

रत्नानि च महार्हाणि वासांसि विविधानि च ॥ ३१
[1]तैः कामैस्सर्वसंपन्नैः पूजितस्स महीपतिः ।
सामात्यस्सबलस्तत्र तुतोष सुभृशं तदा ॥ ३२
षडुन्नतां सुपार्श्वोरुं त्रिपृथुं पञ्चसंवृताम् ।
मण्डूकनेत्रां स्वाकारां पीनोधसमनिन्दिताम् ॥ ३३
[2]सुवालधिं शङ्कुकर्णां पीनश्रोणिपयोधराम् ।
पुष्टायतशिरोग्रीवां विस्मितस्सोऽभिवीक्ष्य ताम् ॥ ३४
अभ्यनन्दत् सदा नन्दीं वसिष्ठस्य यशस्विनीम् ।
अब्रवीच्च भृशं तुष्टो विश्वामित्र ऋषिस्तदा ॥ ३५
अर्बुदेन गवां ब्रह्मंस् तथा राज्येन वा पुनः ।
नन्दिनीं संप्रयच्छस्व भुङ्क्ष्व राज्यं महामुने ॥ ३६

वसिष्ठः—

देवताऽतिथिपित्रर्थे याज्यार्थे च पयस्विनी ।
अदेया नन्दिनी चेयं राज्येनापि तवानघ ॥ ३७

विश्वामित्रः—

रत्नं हि भगवन्नेतद् रत्नहारी च पार्थिवः ।

---

1. घ—यस्य यस्य च यः कामस् स स तेन स तर्पितः ।

2. क-ग-घ—अस्यायतशिरोग्रीवां सुपुष्टाङ्गीं सुयोनिकाम् ।
संभृतोभयपार्श्वोरुं दीर्घवालां पृथूदराम् ॥
दृष्ट्वा गृष्टिमृषेर्भूयो विस्मयाविष्टचेतनः । [अधिकः पाठः]

क्षत्रियोऽहं भवान् विप्रस् तपस्स्वाध्यायसाधनः ॥ ३८

ब्राह्मणेषु कुतो वीर्यं प्रशान्तेषु धृतात्मसु ।
अर्बुदेन गवां यस्त्वं न ददासि ममेप्सितम् ॥ ३९

स्वधर्मं न प्रहास्यामि स नेष्ये ते बलेन गाम् ॥ ३९॥

क्षत्रियोऽस्मि न विप्रोऽहं बाहुवीर्योऽस्मि धर्मतः ।
तस्माद्भुजबलेनेमां हरिष्यामीह पश्यतः ॥ ४०॥

वसिष्ठः—

अत्र हव्यं च कव्यं च प्राणयात्रा तथैव च ।
आयत्तमग्निहोत्रं च आतिथ्यं च न संशयः ॥ ४१॥

बहुना किं प्रलापेन न दास्ये कामदोहिनीम् ॥ ४२

बलस्थश्चासि राजा च बाहुवीर्यश्च क्षत्रियः ।
[1]यथेच्छसि तथा क्षिप्रं कुरु त्वं मा विचारय ॥ ४३

गन्धर्वः—

एवमुक्तस्तदा पार्थ विश्वामित्रो बलादिव ।
हंसचन्द्रप्रतीकाशां नन्दिनीं वै जहार गाम् ॥ ४४

सा तदा ह्रियमाणाऽपि विश्वामित्रबलैर्बलात् ।

---

1. क-ख-ग—रत्नद्वयं ब्राह्मणस्य नापहार्यं नृपैर्भुवि ।
अग्निहोत्री च गौः पत्नी प्रजारणिरनुत्तमा ॥
[अधिकः पाठः]

कशादण्डप्रहारैश्च काल्यमाना इतस्ततः ॥ ४५

ह्रियमाणा तथा तेन वसिष्ठस्याथ नन्दिनी ।
आगम्याभिमुखी पार्थ तस्थौ भगवदुन्मुखी ॥ ४६
भृशं संतप्यमानाऽपि नाजगामाश्रमात्ततः ॥ ४६॥

आश्रमान्नैव गच्छन्ती हुंकारावैर्ननाद च ॥ ४७

सा तु तेषां बलान्नन्दी बलानां भरतर्षभ ।
[1]विश्वामित्रभयोद्विग्ना वसिष्ठं समुपागमत् ॥ ४८

वसिष्ठः—

शृणोमि ते रवं भद्रे रुदन्त्या वै मुहुर्मुहुः ।
बलात् प्रयासि मे नन्दि क्षमयन् ब्राह्मणो ह्यहम् ॥ ४९

नन्दिनी—

[2]पाषाणदण्डैर्निहतां क्रन्दन्तीं मामनाथवत् ।
विश्वामित्रबलैर्घोरैर् भगवन् किमुपेक्षसे ॥ ५०

[3]गन्धर्वः—

एवं तस्यां तथा पार्थ धर्षितायां महामुनिः ।
न चाक्षुभ्यत धैर्याच्च नैव कोपं समादधे ॥ ५१

---

1. ब—बलानि येषां निर्धूय छित्वा पाशनिबन्धनम् । [अधिकः पाठः]
2. क-ख-ग—उपेक्षसे कथं ब्रह्मन् भक्तां पादाब्जसेविनीम् । [अधिकः पाठः]
3. ब—वसिष्ठः—शृणोमि ते रवं भद्रे विनदन्त्या मुहुर्मुहुः ।
बलाद्ध्रियसि मे नन्दि क्षमावान् ब्राह्मणोऽस्म्यहम् ॥

वसिष्ठः—

क्षत्रियाणां बलं वीर्यं ब्राह्मणानां क्षमा बलम् ।
क्षमा मां भजते यस्माद् गम्यतां यदि रोचते ॥ ५२

नन्दिनी—

किं नु त्यक्ताऽस्मि भगवन् यदेवं मां प्रभाषसे ।
न त्यक्ताऽहं त्वया ब्रह्मन् नेतुं शक्या बलान्न हि ॥ ५३

वसिष्ठः—

न त्वां त्यजामि कल्याणि स्थीयतां यदि शक्यते ।
दृढेन दाम्ना बद्ध्वैष वत्सस्ते ह्रियते बलात् ॥ ५४
येन केनाप्युपायेन त्वया वत्सो निवार्यताम् ॥ ५४॥

गन्धर्वः—

स्थीयतामिति तच्छ्रुत्वा वसिष्ठस्य पयस्विनी ।
ऊर्ध्वाञ्चितशिरोग्रीवा प्रभावाच्चारुदर्शना ॥ ५५॥
क्रोधरक्तेक्षणा सा गौर् हुंफारवघनस्वनैः ।
विश्वामित्रस्य तत् सैन्यं व्यद्रावयत सर्वशः ॥ ५६॥
कशाग्रदण्डाभिहता काल्यमाना ततस्ततः ।
क्रोधदीप्तेक्षणा क्रोधं भूय एव समादधे ॥ ५७॥
आदित्य इव मध्याह्ने क्रोधदीप्तवपुर्बभौ ॥ ५८
अङ्गारवर्षं मुञ्चन्ती मुहुर्वालं मुखाद्वमत् ।

असृजत् पल्लवान् पुच्छात् प्रस्रवाच्छबराञ्छकान् ॥ ५९
योनिदेशाच्च यवनाञ् शकृद्देशाच्छकांस्तथा ।
[1]मूत्रतश्चासृजच्चापि नन्दिनी क्रोधमूर्छिता ॥ ६०
पौण्ड्रान् किरातान् द्रमिडान् सिंहलान् बर्बरांस्तथा ।
[2]तथैव बर्बरान् म्लेच्छान् फेनतस्सा ससर्ज ह ॥ ६१
तैर्विसृष्टैर्महासैन्यैर् नानाम्लेच्छगणैस्तथा ।
नानावरणसंछन्नैर् नानायुधधरैस्तथा ॥ ६२
अवकीर्यत संरब्धैर् विश्वामित्रस्य पश्यतः ॥ ६२॥
एकैकशस्तस्य योधाः पञ्चभिस्सप्तभिर्वृताः ॥ ६३
शस्त्रवर्षेण महता वध्यमानं बलं ततः ।
प्रभग्नदर्पं संत्रस्तं विश्वामित्रस्य पश्यतः ॥ ६४
तस्य तच्चतुरङ्गं वै बलं परमदुस्सहम् ।
प्रभग्नं सर्वतो घोरं पयस्विन्या विनिर्जितम् ॥ ६५
न च प्राणैर्वियुज्यन्ते तदा केचन सैनिकाः ।
विश्वामित्रस्य संक्रुद्धैर् वासिष्ठैर्भरतर्षभ ॥ ६६
विश्वामित्रस्य तत् सैन्यं काल्यमानं त्रियोजनम् ।
क्रोशमानं भयोद्विग्नं त्रातारं नाध्यगच्छत ॥ ६७

---

1. ब—मूत्रतश्चासृजन्म्लेच्छान् मूर्ध्ना चान्ध्रान् सृजत्तदा ।
2. ब—पारसीकांश्च सिंहांश्च वनतस्सा ससर्ज ह ।

विश्वामित्रस्ततो दृष्ट्वा क्रोधाविष्टस्स रोदसी ।
ववर्ष शरवर्षाणि वसिष्ठे मुनिसत्तमे ॥ ६८

घोररूपांश्च नाराचान् क्षुरान् भल्लान् महामुनिः ।
विश्वामित्रप्रयुक्तांस्तान् वैणवेन व्यमोचयत् ॥ ६९

वसिष्ठस्य तदा दृष्ट्वा कर्मकौशलमाहवे ॥ ६९॥

विश्वामित्रोऽपि कोपेन भूयश्शत्रुनिपातनः ।
दिव्यास्त्रवर्षं तस्मै तु प्राहिणोन्मुनये रुषा ॥ ७०॥

आग्नेयं वारुणं चैन्द्रं याम्यं वायव्यमेव च ।
विससर्ज महाभागे वसिष्ठे ब्रह्मणस्सुते ॥ ७१॥

अस्त्राणि सर्वतो ज्वालां विसृजन्ति प्रपेदिरे ।
युगान्तसमये घोराः पतङ्गस्येव रश्मयः ॥ ७२॥

वसिष्ठोऽपि महातेजा ब्रह्मशक्तिप्रयुक्तया ।
यष्ट्या निवारयामास सर्वाण्यस्त्राणि स स्मयन् ॥ ७३॥

ततस्ते भस्मसाद्भूताः पतन्ति स्म महीतले ।
अपोह्य दिव्यान्यस्त्राणि वसिष्ठो वाक्यमब्रवीत् ॥ ७४॥

वसिष्ठः—

निर्जितोऽसि महाराज दुरात्मन् गाधिनन्दन ।
यदि तेऽस्ति परं शौर्यं तद्दर्शय मयि स्थिते ॥ ७५॥

गन्धर्वः—

विश्वामित्रस्तथा चोक्तो वसिष्ठेन नराधिप ।
नोवाच किंचिद्व्रीडाढ्यो विद्रावितमहाबलः ॥ ७६॥

तद्दृष्ट्वा महदाश्चर्यं ब्रह्मतेजोभवं बलम् ।
विश्वामित्रः क्षत्रभावान्निर्विण्णो वाक्यमब्रवीत् ॥ ७७॥

विश्वामित्रः—

धिग्बलं क्षत्रियबलं ब्रह्मतेजोबलं बलम् ।
बलाबले विनिश्चित्य तप एव परं बलम् ॥ ७८॥

गन्धर्वः—

स राज्यं स्फीतमुत्सृज्य तां च दीप्तां नृपश्रियम् ।
भोगांश्च पृष्ठतः कृत्वा तप एव समाददे ॥ ७९॥

स गत्वा तपसा सिद्धिं लोकान् विष्टभ्य तेजसा ।
तताप सर्वान् लोकांश्च ब्राह्मणत्वमवाप च ॥ ८०॥

अपिबच्च [1]सुतं सोमम् इन्द्रेण सह कौशिकः ॥ ८१

एवंवीर्यस्तु राजर्षिर् विप्रर्षिस्संबभूव ह ॥ ८१॥

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्याम्
आदिपर्वणि त्रिसप्तत्यधिकशततमोऽध्यायः ॥ १७३ ॥
॥ ११ ॥ चैत्ररथपर्वणि द्वादशोऽध्यायः ॥ १२ ॥
[अस्मिन्नध्याये ८१॥ श्लोकाः]

---

1. क-ख-ग-घ—हुतं

## ॥ चतुस्सप्तत्यधिकशततमोऽध्यायः ॥

कल्माषपादराजोपाख्याने—वसिष्ठपुत्रेण शक्तिना कल्माषपादं प्रति शापदानम् ॥ १ ॥ पुनरन्येन ब्राह्मणेन च कल्माषपादं प्रति शापदानम् ॥ २ ॥ राक्षसाविष्टेन कल्माषपादेन वसिष्ठपुत्राणां भक्षणम् ॥ ३ ॥ पुत्रशोकाभिसंतप्तेन वसिष्ठेन प्राणत्यागार्थं अनेकधा प्रयतनम् ॥ ४ ॥

अर्जुनः—

ऋष्योस्तु यत्कृते वैरं विश्वामित्रवसिष्ठयोः ।
बभूव गन्धर्वपते ब्रूहि तत्सर्वमेव च ॥ १
माहात्म्यं च वसिष्ठस्य ब्राह्मण्यं ब्रह्मतेजसः ।
विश्वामित्रस्य च तथा क्षत्रस्य च महात्मनः ॥ २
न शृण्वानस्त्वहं तृप्तिम् उपगच्छामि खेचर ।
आख्याहि गन्धर्वपते [1]तत्कथासारमेव च ॥ ३
माहात्म्यं च वसिष्ठस्य [2]विचित्राणि च भाषसे ॥ ३॥

गन्धर्वः—

इदं वासिष्ठमाख्यानं पुराणं पुण्यमुत्तमम् ।
पार्थ सर्वेषु लोकेषु विश्रुतं तन्निबोध मे ॥ ४॥
कल्माषपाद इत्यस्मिन् लोके राजा बभूव ह ॥ ५
इक्ष्वाकूणां कुले जातस् तेजसा सदृशो भुवि ।

1. अ-क-ख-ग—ब्रूहि तत्सर्वमेव च 2. क-ख-ग—विश्वामित्रस्य

नास्ति तस्य महाराज वैश्वानरसमद्युतेः ॥ ६
स कदाचिद्वने रम्ये मृगयामचरद्बली ।
मृगान्निघ्नन् वराहांश्च चचार रिपुसूदनः ॥ ७
स तु राजा महात्मानं वासिष्ठमृषिसत्तमम् ।
स तृष्णार्तः क्षुधार्तश्च एकायनगतः पथि ॥ ८
अपश्यदजितस्सङ्ख्ये मुनिं प्रतिमुखागतम् ॥ ८॥
शक्तिं नाम महाभागं वसिष्ठकुलनन्दनम् ।
ज्येष्ठं [1]पुत्रशतात् पुत्रं वसिष्ठस्य महात्मनः ॥ ९॥
अपगच्छ पथोऽस्माकम् इत्येवं पार्थिवोऽब्रवीत् ।
स चाप्यृषिरुवाचैनं सान्त्वयञ्श्लक्ष्णया गिरा ॥ १०॥

शक्तिः—

मम पन्था महाराज धर्म एष सनातनः ।
राज्ञा धर्मेण संदिष्टो देयः पन्था द्विजातये ॥ ११॥

गन्धर्वः—

ऋषिस्तु नापचक्राम तस्मिन् धर्मपथे स्थितः ।
अपि राजा मुनेर्मार्गात् क्रोधान्नापजगाम ह ॥ १२॥
अमुञ्चन्तं तु पन्थानं तमृषिं नृपसत्तमः ।
जघान कशया मोहान्नृपो राक्षसवन्मुनिम् ॥ १३॥
कशाप्रहाराभिहतो राजानमृषिसत्तमः ।

---

1. च—पुत्रशतानां च वासिष्ठानां महात्मनाम् ।

तं शशाप नृपश्रेष्ठं वासिष्ठः क्रोधमूर्च्छितः ॥ १४॥

शक्तिः—

हंसि राक्षसवद्यन्मां राजापशद तापसम् ।
तस्मात् त्वमद्यप्रभृति पुरुषादो भविष्यसि ॥ १५॥
मनुष्यपिशिते सक्तश् चरिष्यसि महीमिमाम् ।
गच्छ राजाधमेत्युक्तश् शक्तिना वीर्यशक्तिना ॥ १६॥
तत्र राज्यनिमित्तं तु विश्वामित्रवसिष्ठयोः ।
वैरमासीद्यदा तं तु विश्वामित्रोऽन्वविन्दत ॥ १७॥
तयोर्विवदतोरेवं समीपमुपचक्रमे ।
ऋषिरुग्रतपाः पार्थ विश्वामित्रः प्रतापवान् ॥ १८॥
ततस्स बुबुधे पश्चात् तमृषिं नृपसत्तम ।
ऋषेः पुत्रं वसिष्ठस्य वसिष्ठमिव तेजसा ॥ १९॥
अन्तर्धाय तदाऽऽत्मानं विश्वामित्रस्तु भारत ।
तावुभावपचक्राम चिकीर्षन्नात्मनः प्रियम् ॥ २०॥
स तु शप्तस्तदा तेन शक्तिना वै नृपोत्तमः ।
जगाम शरणं राजा प्रसादयितुमर्हयन् ॥ २१॥
तस्य भावं विदित्वा तु नृपतेः कुरुनन्दन ।
विश्वामित्रस्ततो रक्ष आदिदेश नृपं प्रति ॥ २२॥
शापात्तस्य स विप्रर्षेर् विश्वामित्रस्य चाज्ञया ।

राक्षसः किङ्करो नाम विवेश नृपतिं तदा ॥ २३॥

रक्षसा तं गृहीतं तु विदित्वा स मुनिस्तदा ।
विश्वामित्रोऽप्यपाक्रामत् तस्माद्देशादरिन्दम ॥ २४॥

ततस्स नृपतिर्विद्वान् रक्षन्नात्मानमात्मना ।
बलवत्पीड्यमानोऽपि रक्षसा[1]ऽन्तर्गतेन ह ॥ २५॥

ददर्श तं द्विजः कश्चिद् राजानं प्रस्थितं पुनः ।
ययाचे क्षुधितश्चैनं समांसं भोजनं तथा ॥ २६॥

तमुवाच स राजर्षिर् द्विजं मित्र[2]सहं तदा ॥ २७

आस्स्व ब्रह्मंस्त्वमत्रैव मुहूर्तमिव सान्त्वयन् ।
विनिवृत्तः प्रदास्यामि भोजनं ते यथेप्सितम् ॥ २८

इत्युक्त्वा प्रययौ राजा तस्थौ च द्विजसत्तमः ॥ २८॥

अन्तःपुरं गतो राजा श्रुत्वा ब्राह्मणभाषितम् ॥ २९

सोऽन्तःपुरं प्रविश्याथ न सस्मार नराधिपः ॥ २९॥

ततोऽर्धरात्र उत्थाय सूदमानाय्य सत्तमः ।
उवाच वचनं स्मृत्य ब्राह्मणस्य प्रतिश्रुतम् ॥ ३०॥

राजा—

गच्छामुष्मि[3]न्नसौ देशे ब्राह्मणो मां प्रतीक्षते ।

---

1. अ—सत तेन
2. क-ख-ग-च—सहसता
3. क-ख-ग—न्वनोद्देशे

अन्नार्थिनं त्वमन्नेन समांसेनोपपादय ॥ ३१॥

गन्धर्वः—

एवमुक्तस्तथा सूदस् सोऽनासाद्यामिषं क्वचित् ।
निवेदयामास पुनस् तस्मै राज्ञे व्यथाऽन्वितः ॥ ३२॥

राजा तु रक्षसाऽऽविष्टस् सूदमाह गतव्यथः ।
अप्येनं नरमांसेन भोजयेति पुनः पुनः ॥ ३३॥

तथेत्युक्त्वा ततस्सूदस् संस्थानं वध्यघातिनाम् ।
गत्वाऽऽजहार त्वरितो नरमांसमपेतभीः ॥ ३४॥

एतत् संस्कृत्य विधिवद् अन्नं सामिषमाशु वै ।
तस्मै प्रादाद्ब्राह्मणाय क्षुधिताय तपस्विने ॥ ३५॥

[1]स दिव्यचक्षुर्दृष्ट्वा तु तदन्नं द्विजसत्तमः ।
अभोज्यमिति मत्वाऽऽह क्रोधपर्याकुलेक्षणः ॥ ३६॥

ब्राह्मणः—

यस्मादभोज्यमन्नं मे ददाति स नृपाधमः ।
तस्मात्तस्यैव मुग्धस्य भविष्यत्यत्र लोलुपः ॥ ३७॥

सक्तो मानुषमांसेषु यथोक्तं शक्तिना पुरा ।
उद्वेजनीयो भूतानां चरिष्यति महीमिमाम् ॥ ३८॥

गन्धर्वः—

द्विरनुव्याहृते वाक्ये शापो हि बलवानभूत् ।

---

1. घ—स मानुषामिषं ज्ञात्वा ददासि स नृपाधम ।

रक्षोबलसमाविष्टो विसंज्ञश्चाभवत्तदा ॥ ३९॥

ततस्स नृपतिः पार्थ रक्षसाऽपहृतेन्द्रियः ।
उवाच शक्तिं दृष्ट्वा तु न चिरादिव भारत ॥ ४०॥

यस्मादसदृशश्शापः प्रयुक्तोऽयं मयि त्वया ।
तस्मात्त्वत्तः प्रवर्तिष्ये खादितुं मानुषानहम् ॥ ४१॥

एवमुक्त्वा ततस्सद्यस् तं प्राणैर्विप्रयोज्य सः ।
शक्तिनं भक्षयामास व्याघ्रः पशुमिवेप्सितम् ॥ ४२॥

शक्तिनं तु हृतं दृष्ट्वा विश्वामित्रस्ततः पुनः ।
वसिष्ठस्यैव पुत्रेषु तद्रक्षस्संदिदेश ह ॥ ४३॥

स ताञ्शतावरान् पुत्रान् वसिष्ठस्य महात्मनः ।
भक्षयामास संक्रुद्धस् सिंहः क्षुद्रमृगानिव ॥ ४४॥

वसिष्ठो घातिताञ्श्रुत्वा विश्वामित्रेण स्वान् सुतान् ।
धारयामास संशोकं महाद्रिरिव मेदिनीम् ॥ ४५॥

चक्रे चात्मविनाशाय बुद्धिं स मुनिपुङ्गवः ।
न त्वेव कुशिकोच्छेदं मेने मतिमतां वरः ॥ ४६॥

स मेरुकूटादात्मानं मुमोच भगवानृषिः ।
शिरस्तस्य शिलायां च तूलराशाविवापतत् ॥ ४७॥
न ममार च पातेन तदा स मुनिसत्तमः ॥ ४८

तदाऽग्निमिध्वा भगवान् संविवेश महावने ।

तं तदा सुसमिद्धोऽपि न ददाह हुताशनः ॥ ४९

दीप्यमानोऽप्ययमित्रघ्न शीतोऽग्निरभवत्तदा ॥ ४९॥

स समुद्रमभिप्रेत्य शोकाविष्टो महामुनिः ।

बद्ध्वा कण्ठे शिलां गुर्वीं निपपात तदम्भसि ॥ ५०॥

स समुद्रोर्मिवेगेन स्थले न्यस्तो महामुनिः ॥ ५१

जगाम सततं खिन्नः पुनरेवाश्रमं प्रति ॥ ५१॥

इति श्रीमहाभारते शतसाहस्रिकायां संहितायां वैयासिक्याम्
आदिपर्वणि चतुस्सप्तत्यधिकशततमोऽध्यायः ॥ १७४ ॥
॥ ११ ॥ चैत्ररथपर्वणि त्रयोदशोऽध्यायः ॥ १३ ॥
[अस्मिन्नध्याये ५१॥ श्लोकाः]

---

## ॥ पञ्चसप्तत्यधिकशततमोऽध्यायः ॥

पूर्वोपायैरपि दुस्त्यजप्राणस्य वसिष्ठस्य पुनर्गङ्गापतनादिनाऽपि प्राणत्यागासंभवे आश्रमं प्रत्यागमनम् ॥ १ ॥ शक्तिभार्यामदृश्यन्तीनाम्नीं गर्भवतीं ज्ञात्वा आत्मघातान्निवर्तनम् ॥ २ ॥

---

गन्धर्वः—

[1]स आश्रमपदं दृष्ट्वा रहितं तैर्महामुनिः ।

निर्जगाम सुदुःखार्तः पुनरेवाश्रमात्ततः ॥ १

सोऽपश्यत् सरितं पूर्णां प्रावृट्काले नवाम्भसा ।

---

1. घ—ततो दृष्ट्वाऽऽश्रमपदं पुत्रैर्विरहितो मुनिः ।

वृक्षान् वञ्जुलनीपादीन् वहन्तीं तीरजान् बहून् ॥ २
अथ चिन्तां समापेदे मुनिः पौरवनन्दन ।
अम्भस्यस्या निमज्जेयम् इति दुःखसमन्वितः ॥ ३
तथा पाशैस्तदाऽऽत्मानं गाढं बद्ध्वा महामुनिः ।
तस्या जले महानद्या निममज्ज सुदुःखितः ॥ ४
अथ च्छित्त्वा नदी पाशं तस्यारिबलमर्दन ।
स्थलस्थं तमृषिं कृत्वा विपाशं [1]सा समासृजत् ॥ ५
उत्ततार ततः पाशैर् विमुक्तस्स महानृषिः ।
विपाशेति च नामास्या नद्याश्चक्रे महानृषिः ॥ ६
सा विपाशेति विख्याता नदी लोकेषु भारत ।
ऋषेस्त्वथ नरव्याघ्र वचनात्तस्य धीमतः ॥ ७
उत्तीर्य च ततो राजन् दुःखितो भगवानृषिः ।
शोके बुद्धिं तु तां चक्रे न चैकत्र व्यतिष्ठत ॥ ८
सोऽपश्यत् पर्वतांश्चैव सरितश्च सरांसि च ॥ ८॥
दृष्ट्वा स पुनरेवर्षिर् नदीं हैमवतीं तदा ।
चण्डग्राहवतीं दृष्ट्वा स्रोतस्यात्मानमात्मना ॥ ९॥
मज्जयामास शोकार्तो मरणे कृतनिश्चयः ॥ १०
सा तमग्निसमं विप्रम् उपलभ्य सरिद्वरा ।

1. च—समवासृजत्

शतधा विद्रुता तस्मात् छतद्रुरिति विश्रुता ॥ ११

ततस्स्थलगतं दृष्ट्वा आत्मानमृषिसत्तमः ।
[1]मर्तुं न शक्यमित्युक्त्वा पुनरेवाश्रमं ययौ ॥ १२

वध्वाऽदृश्यन्त्याऽनुगता आश्रमाभिमुखं व्रजन् ।
अथ शुश्राव संगम्य वेदाध्ययननिस्स्वनम् ॥ १३

पृष्ठतः परिपूर्णार्थैष् षड्भिरङ्गैरलङ्कृतम् ॥ १३॥

अनुव्रजति कोन्वेष मामित्येव च सोऽब्रवीत् ॥ १४

अदृश्यन्त्यहमित्येवं तं स्नुषा प्रत्यभाषत ।
शक्तेर्भार्या महाभाग तपोयुक्ता मनस्विनी ॥ १५

वसिष्ठः—

पुत्रि कस्यैष साङ्गस्य वेदस्याध्ययनस्वनः ।
पुरा साङ्गस्य वेदस्य शक्तेरिव मया श्रुतः ॥ १६

अदृश्यन्ती—

अयं कुक्षौ समुत्पन्नस् शक्तेर्गर्भस्सुतस्य ते ।
समा द्वादश तस्येह वेदानभ्यस्यतो गताः ॥ १७

गन्धर्वः—

एवमुक्तस्ततो हृष्टो वसिष्ठश्श्रेष्ठभागिनीम् ।
अस्ति सन्तानमित्युक्त्वा मृत्योः पार्थ न्यवर्तत ॥ १८

---

1. घ—स गत्वा विविधाञ्शैलान् देशान् बहुविधांस्तथा ।
अथ दिष्ट्याऽऽगतश्श्रीमान् आश्रमाभिमुखो ययौ॥
[अधिकः पाठः]

ततः प्रतिनिवृत्तस्स तया वध्वा महानघ ।
कल्माषपादमासीनं ददर्श विजने तदा ॥ १९

स तु दृष्ट्वैव तं राजा क्रुद्ध उत्थाय भारत ।
आविष्टो रक्षसोग्रेण इयेषात्तुमथौजसा ॥ २०

अदृश्यन्ती तु तं दृष्ट्वा घोरकर्माणमग्रतः ।
भयसंविग्नया वाचा वसिष्ठमिदमब्रवीत् ॥ २१

अदृश्यन्ती—

असौ मृत्युरिवोग्रेण दण्डेन भगवन्निह ।
प्रगृहीतोऽतिघोरेण राक्षसोऽभ्येति भीषणः ॥ २२

तं निवारयितुं शक्तो नान्योऽस्ति भुवि कश्चन ।
त्वदृतेऽद्य महाभाग सर्ववेदविदां वर ॥ २३

त्राहि मां भगवन् पापाद् अस्माद्दारुणदर्शनात् ।
[1]राक्षसोऽत्तुमिहाप्यायान्नूनमेतच्चिकीर्षितम् ॥ २४

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्याम्
आदिपर्वणि पञ्चसप्तत्यधिकशततमोऽध्यायः ॥ १७५ ॥

॥ ११ ॥ चैत्ररथपर्वणि चतुर्दशोऽध्यायः ॥ १४ ॥

[अस्मिन्नध्याये २४ श्लोकाः]

---

1. घ—राक्षसोऽत्तुमयं ह्यावां नूनमद्य चिकीर्षति ।

## ॥ षट्सप्तत्यधिकशततमोऽध्यायः ॥



वसिष्ठं भक्षयितुमागतस्य कल्माषपादस्य वसिष्ठेन शापान्मोक्षणम् ॥ 1 ॥ सौदासपत्न्या वसिष्ठाद्गर्भसंभवः ॥ २ ॥ अश्मकनामपुत्रोत्पत्तिः ॥ ३ ॥



वसिष्ठः—

मा भैः पुत्रि न भेतव्यं रक्षसस्ते कथञ्चन ।
नैतद्रक्षो भयं यस्मात् पश्यसि त्वमुपस्थितम् ॥ १

राजा कल्माषपादोऽयं वीर्येण प्रथितो भुवि ।
स एषोऽस्मिन् वनोद्देशे निवसत्यतिभीषणः ॥ २

गन्धर्वः—

तमापतन्तं संक्रुद्धं वसिष्ठो भगवानृषिः ।
वारयामास तेजस्वी हुङ्कारेणैव भारत ॥ ३

मन्त्रपूतेन च पुनस् स तमभ्युक्ष्य वारिणा ।
मोक्षयामास घोराद्वै राक्षसाद्राजसत्तम ॥ ४

स हि द्वादश वर्षाणि वासिष्ठस्यैव तेजसा ।
ग्रस्त आसीद्ग्रहेणेव पर्वकाले दिवाकरः ॥ ५

रक्षसा विप्रमुक्तोऽथ स नृपस्तद्वनं महत् ।
तेजसा रञ्जयामास सन्ध्याभ्रमिव भास्करः ॥ ६

प्रतिलभ्य ततस्संज्ञाम् अभिवाद्य कृताञ्जलिः ।
उवाच नृपतिः काले वसिष्ठमृषिसत्तमम् ॥ ७

सौदासोऽहं महाभाग याज्यस्ते द्विजसत्तम ।
अस्मिन् काले यदिष्टं ते ब्रूहि किं करवाणि ते ॥ ८

वसिष्ठः—

वृत्तमेतद्यथाकालं गच्छ राज्यं प्रशाधि तत् ।
ब्राह्मणांश्च मनुष्येन्द्र माऽवमंस्थाः कदाचन ॥ ९

राजा—

नावमंस्यामि वै ब्रह्मन् कदाचिद्ब्राह्मणानहम् ।
त्वन्निदेशे स्थितश्शश्वत् पूजयिष्याम्यहं द्विजान् ॥ १०

इक्ष्वाकूणां तु येनाहम् अनृणस्स्यां द्विजोत्तम ।
तत्त्वतः प्राप्तुमिच्छामि सर्ववेदविदां वर ॥ ११

अपत्यायेप्सिताय त्वं महिषीं गन्तुमर्हसि ।
शीलरूपगुणोपेताम् इक्ष्वा[1]कूणां हि वृद्धये ॥ १२

गन्धर्वः—

ददानीत्येव तं तत्र राजानं प्रत्युवाच ह ।
वसिष्ठः परमेष्वासं सत्यसन्धो महातपाः ॥ १३

ततः प्रतिययौ काले वसिष्ठसहितोऽनघः ।
ख्यातं पुरवरं लोकेष्वयोध्यां मनुजेश्वरः ॥ १४

---

1. क-ख-ग-घ—कुकुत्थ

तं प्रजाः प्रतिनन्दन्त्यस् सर्वाः प्रत्युद्ययुस्तदा ।
विपाप्मानं महात्मानं दिवौकस इवेश्वरम् ॥ १५

अचिरात् स मनुष्येन्द्रो नगरीं पुण्यकर्मणाम् ।
विवेश सहितस्तेन वसिष्ठेन महात्मना ॥ १६

ददृशुस्तं ततो राजन्नयोध्यापुरवासिनः ।
पुष्येण सहितं काले निशाकरमिवोदितम् ॥ १७

स हि तां पूरयामास लक्ष्म्या लक्ष्मीवतां वरः ।
अयोध्यां व्योम शीतांशुश् शरत्काल इवोदितः ॥ १८

संसिक्तमृष्टपन्थानं पताकोच्छ्रितभूषितम् ।
मनः प्रह्लादयामास तस्य तत्पुरमुत्तमम् ॥ १९

हृष्टपुष्टजनाकीर्णा सा पुरी कुरुनन्दन ।
अशोभत तदा तेन शक्रेणेवामरावती ॥ २०

ततः प्रविष्टे कौन्तेय तस्मिन् राजनि तां पुरीम् ।
तस्य राज्ञोऽथ सा देवी वसिष्ठमुपचक्रमे ॥ २१

ऋतावथ महर्षिस्स संबभूव तया सह ।
देव्या दिव्येन विधिना वसिष्ठश्श्रेष्ठभागृषिः ॥ २२

ततस्तस्यां समुत्पन्ने गर्भे स मुनिसत्तमः ।
राज्ञाऽभिवादितस्तेन जगाम पुनराश्रमम् ॥ २३

दीर्घकालधृतं गर्भं सुषाव न तु तं यदा ।

[1]साऽथ देव्यश्मना कुक्षिं निर्बिभेद तदा स्वकम् ॥ २४

द्वादशेऽथ ततो वर्षे संजज्ञे मनुजर्षभ ।
अश्मको नाम राजर्षिः [2]पातनं यो न्यवेशयत् ॥ २५

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्याम्
आदिपर्वणि षट्सप्तत्यधिकशततमोऽध्यायः ॥ १७६ ॥

॥ ११ ॥ चैत्ररथपर्वणि पञ्चदशोऽध्यायः ॥ १५ ॥
[अस्मिन्नध्याये २५ श्लोकाः]

---

## ॥ सप्तसप्तत्यधिकशततमोऽध्यायः ॥

पराशरोत्पत्तिः ॥ १ ॥ पितरं कल्माषपादभक्षितं ज्ञात्वा क्रुद्धेन पराशरेण लोकविनाशाय यतनम् ॥ २ ॥ कार्तवीर्यवंश्यैः क्षत्रियैः धनार्थं भृगुवंश्यानां ब्राह्मणानां हननम् ॥ ३ ॥ क्षत्रियभीत्या कयाचिद्ब्राह्मण्या ऊरौ गर्भे धृतं हन्तुं क्षत्रियाणामुद्यमः ॥४॥ ऊरुं भित्त्वा निर्गतस्य बालकस्य तेजसाऽन्धीभूतानां क्षत्रियाणां ब्राह्मणीं प्रति शरणगमनम् ॥ ५ ॥

---

गन्धर्वः—

आश्रमस्था ततः पुत्रम् अदृश्यन्ती व्यजायत ।
शक्तेः कुलकरं राजन् द्वितीयमिव शक्तिनम् ॥ १

जातकर्मादिकास्तस्य क्रियास्स मुनिपुङ्गवः ।
पौत्रस्य भरतश्रेष्ठ चकार भगवान् स्वयम् ॥ २

---

1. ख—अश्मना चात्मनः कुक्षिं निष्पिपेष मनस्विनी ।
2. क-ख-ग—पत्तनं

पराशीर्णो यतस्तेन वसिष्ठस्थापितस्तदा ।
गर्भस्तेन ततो लोके पराशर इति स्मृतः ॥ ३
अमन्यत स धर्मात्मा वसिष्ठं पितरं तदा ।
जन्मप्रभृति तस्मिंस्तु पितरीव व्यवर्तत ॥ ४
स तात इति विप्रर्षिं वसिष्ठं प्रत्यभाषत ।
मातुस्समीपे कौन्तेय अदृश्यन्त्या नराधिप ॥ ५
तातेति परिपूर्णार्थं तस्येदं मधुरं वचः ।
अदृश्यन्त्यश्रुपूर्णाक्षी शृण्वन्ती तमुवाच ह ॥ ६

अदृश्यन्ती—

मा तात तात तातेति न ते तातो महामुनिः ।
रक्षसा भक्षितस्तात तव तातो महामुनिः ॥ ७
मन्यसे यं तु तातं त्वं नैव तातस्तवानघ ।
आर्य एष पिता तस्य पितुस्तव मनस्विनः ॥ ८

गन्धर्वः—

स एवमुक्तो दुःखार्तस् सत्यवागृषिसत्तमः ।
सर्वलोकविनाशाय मतिं चक्रे महातपाः ॥ ९
वसिष्ठो वारयामास हेतुना येन तच्छृणु ।
कृतवीर्य इति ख्यातो बभूव नृपतिः क्षितौ ॥ १०
याज्यो वेदविदां लोके भृगूणां पार्थिवर्षभ ।
स तानग्र्यमगृह्णात धान्येन च धनेन च ॥ ११
सोमेन तर्पयामास विपुलेन विशांपतिः ॥ १२॥

तस्मिंस्तु नृपशार्दूले स्वर्यातेऽथ कदाचन ।
बभूव तत्कुले राज्ञां द्रव्यकार्यमुपस्थितम् ॥ १२॥
ते भृगूणां धनं ज्ञात्वा राजानस्सर्व एव हि ।
याचिष्णवोऽभिजग्मुस्तांस् तात भार्गवसत्तमान् ॥ १३॥
भूमौ तु निदधुः केचिद् भृगवो धनमक्षयम् ।
ददुः केचिद्द्विजातिभ्यो ज्ञात्वा क्षत्रियतो भयम् ॥ १४॥
भृगवस्तु ददुः केचित् तेषां वित्तं यथेप्सितम् ॥ १५
क्षत्रियाणां तदा तात कारणान्तरदर्शनात् ॥ १५॥
ततो महीतलं तात क्षत्रियेण यदृच्छया ।
खनताऽधिगतं वित्तं कस्मिंश्चिद्भृगुवेश्मनि ॥ १६॥
तद्वित्तं ददृशुस्सर्वे समेताः क्षत्रियर्षभ ॥ १७
अवमत्य ततः क्रोधाद् भृगूंस्ते शरणागतान् ।
निजघ्नुस्ते महेष्वासा बहून् वै निशितैश्शरैः ॥ १८
आगर्भादनुकृन्तन्तश् चेरुश्चैव वसुन्धराम् ॥ १८॥
तत उत्साद्यमानेषु भृगुष्वेवं भयात्तदा ।
भृगुपत्न्यो गिरिं तात हिमवन्तं प्रपेदिरे ॥ १९॥
तासामन्यतमा गर्भं धारयामास तेजसा ।
ऊरुणैकेन वामोरूर् भर्तुः कुलविवृद्धये ॥ २०॥
तं गर्भमुपलभ्याथ ब्राह्मण्योऽन्या भयार्दिताः ।

गत्वा वै कथयामासुः क्षत्रियाणामुपान्तिके ॥ २१॥

ततस्ते क्षत्रिया जग्मुस् तं गर्भं हन्तुमुद्यताः ।

ददृशुर्ब्राह्मणीं तां ते दीप्यमानां स्वतेजसा ॥ २२॥

अथ गर्भस्स भित्त्वोरुं ब्राह्मण्या निर्जगाम ह ॥ २३

मुष्णन् दृष्टीः क्षत्रियाणां मध्याह्न इव भास्करः ॥ २३॥

ततश्चक्षुर्विहीनास्ते गिरिदुर्गेषु बभ्रमुः ॥ २४

ततस्ते मोघसङ्कल्पा भयार्ताः क्षत्रियाः पुनः ।

ब्राह्मणीं शरणं जग्मुर् दृष्ट्यर्थं तामनिन्दिताम् ॥ २५

ऊचुश्चैनां महाभागां क्षत्रियास्ते विचेतसः ।

ज्योतिःप्रहीणा दुःखार्ताश् शान्तार्चिष इवाग्नयः ॥ २६

भगवत्याः प्रसादेन गच्छेत् क्षत्रं निरामयम् ।

[1]पापादस्मादुपारम्य पश्येम च तथा पुनः ॥ २७

सपुत्रा त्वं प्रसादं नस् सर्वेषां कर्तुमर्हसि ।

पुनर्दृष्टिप्रदानेन क्षत्रियांस्त्रातुमर्हसि ॥ २८

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्याम्
आदिपर्वणि सप्तसप्तत्यधिकशततमोऽध्यायः ॥ १७७ ॥
॥ ११ ॥ चैत्ररथपर्वणि षोडशोऽध्यायः ॥ १६ ॥

[अस्मिन्नध्याये २८ श्लोकाः]

---

1. ख—उपारम्य च गच्छेम सहिताः पापकर्मणः ।

## ॥ अष्टसप्तत्यधिकशततमोऽध्यायः ॥

ब्राह्मणीवाक्येन और्वं प्रति शरणागतानां क्षत्रियाणां चक्षुःप्राप्तिः॥१॥ लोकविनाशार्थं तपस्यत और्वस्य तत्पितृकृततपोनिवारणम् ॥ २ ॥

ब्राह्मणी—

नाहं मुष्णामि वस्तात दृष्टिं नास्मि रुषाऽन्विता ।
अयं तु भार्गवो नाम ऊरुजः कुपितो ध्रुवम् ॥ १

तेन चक्षूंषि वस्तात कुपितेन महात्मना ।
स्मरता निहतान् बन्धून् आर्तानिह कथञ्चन ॥ २

गर्भानपि यदा यूयं भृगूणां हत पुत्रकाः ।
तदाऽयमूरुणा गर्भो मया वर्षशतं धृतः ॥ ३

षडङ्गश्चाखिलो वेद इमं गर्भस्थमेव च ।
विवेश भृगुवंशस्य भूयः प्रियचिकीर्षया ॥ ४

सोऽयं पितृवधान्नूनं क्रोधाद्वो हन्तुमिच्छति ।
तेजसा यस्य दिव्येन चक्षूंषि मुषितानि वः ॥ ५

तमेव यूयं याचध्वम् और्वं मम सुतोत्तमम् ।
अयं वः प्रणिपातेन तुष्टो दृष्टीः प्रदास्यति ॥ ६

गन्धर्वः—

एवमुक्तास्ततस्सर्वे राजानस्ते तमूरुजम् ।

ऊचुः प्रसीदेति तदा प्रसादं च चकार सः ॥ ७

अनेनैव तु विख्यातो नाम्ना लोकेषु सत्तमः ।
स और्व इति विख्यात ऊरुं भित्वा विनिस्सृतः ॥ ८

चक्षूंषि प्रतिलभ्याथ प्रतिजग्मुस्ततो नृपाः ॥ ८॥

भार्गवस्तु मुनिर्नूनं मेने लोके पराभवम् ॥ ९

स चक्रे तत्र लोकानां विनाशाय मुनिस्तदा ।
सर्वेषामेव कार्त्स्न्येन मनः प्रवणमात्मनः ॥ १०

इच्छन्नपचितिं कर्तुं भृगूणां भृगुसत्तमः ।
सर्वलोकविनाशाय तेपे तूग्रं परं तपः ॥ ११

तापयामास ताँल्लोकान् ससुरासुरमानवान् ।
तपसोग्रेण महता मानयिष्यन् पितामहान् ॥ १२

ततस्तं पितरस्तात विज्ञाय भृगुसत्तमम् ।
पितृलोकादुपागम्य सर्व ऊचुरिदं वचः ॥ १३

पितरः—

और्व दृष्टः प्रभावस्ते तपसोग्रस्य पुत्रक ।
प्रसादं कुरु लोकानां नियच्छ क्रोधमात्मनः ॥ १४

तादृशैर्हि तदा तात भृगुभिर्भावितात्मभिः ।
वधोऽप्युपेक्षितस्सर्वैः क्षत्रियाणां विहिंसताम् ॥ १५

आयुषा च प्रकृष्टेन यदा नः खेद आविशत् ।

तदाऽस्माभिर्वधस्तात क्षत्रियैरीप्सितस्स्वयम् ॥ १६

निखातं तद्धि वै वित्तं कस्मिंश्चिद्भृगुवेश्मनि ।
वैरायैव ततो न्यस्तं क्षत्रियान् कोपयिष्णुभिः ॥ १७

किं हि वित्तेन नः कार्यं स्वर्गेप्सूनां द्विजर्षभ ॥ १७॥
[1]यदा तु मृत्युरादातुं न शक्नोति च सर्वशः ।
तदाऽस्माभिरयं दृष्ट उपायस्तत्र धर्मतः ॥ १८॥

आत्महा च पुनस्तात न लोकाँल्लभते शुभान् ।
ततोऽस्माभिस्समीक्ष्यैवम् आत्मनाऽऽत्मा विनाशितः ॥ १९॥

न चैतन्नः प्रियं तात यदिदं कर्तुमिच्छसि ।
नियच्छेदं मनः पापात् सर्वलोकपराभवात् ॥ २०॥

न हि नः क्षत्रियाः केचिन्न लोकास्सप्त पुत्रक ।
दूष्यन्ति च पुनस्तेजः क्रोधमुत्पतितं जहि* ॥ २१॥

औंर्वः—

उक्तवानस्मि यां क्रोधात् प्रतिज्ञां पितरस्तथा ।
सर्वलोकविनाशाय न सा मे वितथा भवेत् ॥ २२॥

वृथा रोषप्रतिज्ञोऽहं न तु जीवितुमुत्सहे ।
अनिस्तीर्णो हि मे रोषो दहेदग्निरिवारणिम् ॥ २३॥

---

1. च—यदस्माकं धनाध्यक्षस् स्वयं वित्तमुपाहरत् । [अधिकः पाठः]
* अ-क-ख-ग—कोशेषु अत्रैवाध्यायसमाप्तिर्दृश्यते ।

[1]देशकालेन संजातं क्रोधं यः क्षन्तुमर्हति ।
नालं स मनुजस्सम्यक् त्रिवर्गं परिरक्षितुम् ॥ २४॥

[2]स्थाने रोषः प्रयुक्तस्स्यान्नृपैस्स्वर्गजिगीषुभिः ॥ २५
अश्रौषमहमूरुस्थो गर्भशय्यागतस्तदा ।

[3]आरावं तु भृशं तत्र भृगूणां क्षत्रियैर्वधे ॥ २६
[4]सामरेऽस्मिन् यदा लोके भृगूणां क्षत्रियाधमैः ।

आगर्भोत्सादनं क्षान्तं तदा मां मन्युराविशत् ॥ २७

प्रकीर्णकेशाः किल मे मातरः पितरस्तथा ।
भयात् सर्वेषु लोकेषु नाधिजग्मुः परायणम् ॥ २८

तान् भृगूणां परान् दारान् कश्चिन्नाभ्यवपद्यत ।
यदा तदा दधारेयम् ऊरुणैकेन मां शुभा ॥ २९

प्रतिषेद्धा हि पापस्य यदा लोके न विद्यते ।
तदा सर्वेषु लोकेषु पापकृन्नोपशाम्यति ॥ ३०

यदा तु प्रतिषेद्धारं पापो न लभते कचित् ।
तिष्ठन्ति बहवो लोकास् तदा पापेषु कर्मसु ॥ ३१

1. क-ख-ग—योग्यकारणतः क्रोधं संजातं
2. क-ख-ग-घ—अशिष्टानां निहन्ता हि शिष्टानां परिरक्षिता । [अधिकः पाठः]
3. क-ग-घ—आरावं मातृवर्गस्य; अ—आनायं
4. अ—समाहितैस्तदा लोकैर्; घ—सामरैर्हि यदा लोकैः

जानन्नपि च यः पापं शक्तिमान्न नियच्छति ।
ईशस्स चापि तेनैव कर्मणा संप्रयुज्यते ॥ ३२

राजभिश्चेतरैश्चैव यदा वै पितरो मम ।
शक्तै[1]र्न यतितास्त्रातुम् इष्टं मत्वेह जीवितम् ॥ ३३

अत एषामहं क्रुद्धो लोकानामीश्वरोऽद्य सन् ।
भवतां च वचो [2]नाहम् अलं समतिवर्तितुम् ॥ ३४

मम चापि भवेदेवम् ईश्वरस्य सतो महत् ।
उपेक्षमाणस्य पुनर् लोकानां किल्बिषं भयम् ॥ ३५

यश्चायं मन्युना ह्यग्निर् लोकानादातुमिच्छति ।
दहेदेव च मामेष निगृहीतस्स्वतेजसा ॥ ३६

भवतां च विजानामि सर्वलोकहितेप्सुताम् ।
तस्मा[3]द्विदध्वं यच्छ्रेयो लोकानां मम चेप्सथ ॥ ३७

पितरः—

य एष मन्युजस्तेऽग्निर् लोकानादातुमिच्छति ।
अप्सु तं मुञ्च भद्रं ते लोका ह्यप्सु प्रतिष्ठिताः ॥ ३८

---

1. क-ग—र्निवारितैस्त्रातुं
घ—न लोकैरीप्सितास्त्रातुं शक्तैस्सम्तोऽखिलैरपि ।
2. क-ग—माहं नालं प्रतिनिवर्तितुम् ।
अ—नाहम् नृशंसमतिवर्तितुम् ।
3. क-ग—द्धि धर्मः

[1]तस्मादप्सु प्रमुञ्चेमं क्रोधाग्निं द्विजसत्तम ॥ ३८॥
अयं तिष्ठतु ते विप्र यदीच्छसि महोदधौ ।
मन्युजोऽग्निर्दहन्नापो लोकाश्चैवाम्मयास्स्मृताः ॥ ३९॥
एवं प्रतिज्ञा सत्येयं भविष्यति तवानघ ।
न चैव सामरा लोका गमिष्यन्ति पराभवम् ॥ ४०॥

वसिष्ठः—

ततस्तं क्रोधजं तात और्वोऽग्निं वरुणालये ।
उत्ससर्ज स चैवाप उपयुङ्क्ते महोदधौ ॥ ४१॥
महद्धयशिरो भूत्वा यत्तद्वेदविदो विदुः ।
तमग्निमुद्गिरन् वक्त्रात् पिबत्यापो महोदधौ ॥ ४२॥
तस्मात्त्वमपि भद्रं ते न लोकान् हन्तुमर्हसि ।
पराशर परं धर्मं ज्ञात्वा ज्ञानविदां वर* ॥ ४३॥

गन्धर्वः—

एवमुक्तस्स विप्रर्षिर् वसिष्ठेन महात्मना ।
[2]नियच्छदात्मनः क्रोधं सर्वलोकपराभवात् ॥ ४४॥
ईजे च स महातेजास् सर्ववेदविदां वरः ।
ऋषी राक्षससत्रेण शाक्तेयोऽथ पराशरः ॥ ४५॥
ततो वृद्धांश्च बालांश्च राक्षसान् स महामतिः ।

---

1. क-ग-घ-अम्मया हि रसास्सर्वे सर्वमेवाम्मयं जगत् । [अधिकः पाठः]
*. अ-क-ख-ग—कोशेषु अत्र अध्यायसमाप्तिर्दृश्यते
2. क-ग—न्ययच्छ

दग्दाह वितते यज्ञे शक्तेर्वधमनुस्मरन् ॥ ४६॥
न हि तं वारयामास वसिष्ठो रक्षसां वधात् ।
द्वितीयामस्य मा [1]हन्याम् प्रतिज्ञामिति चिन्तयन् ॥ ४७॥
त्रयाणां पावकानां स सत्रे तस्मिन् महामुनिः ।
आसीत् पुरस्ताद्दीप्तानां चतुर्थ इव पावकः ॥ ४८॥
तेन यज्ञेन शुद्धेन हूयमानेन युक्तितः ।
तद्विदीपितमाकाशं सूर्येणेव घनात्यये ॥ ४९॥
तं वसिष्ठादयस्सर्वे मुनयस्तत्र मेनिरे ।
तेजसा दीप्यमानं तु द्वितीयमिव भास्करम् ॥ ५०॥
ततः परमदुष्प्रापम् अन्यैर्ऋषिरुदारधीः ।
[2]समापिपयिपुस्सत्रं निर्ऋतेयं प्रियकाम्यया ॥ ५१॥
ततः पुलस्त्यः पुलहः क्रतुश्चैव महातपाः ।
तदाऽऽजग्मुरमित्रघ्न रक्षसां जीवितेप्सया ॥ ५२॥
पुलस्त्यस्तु वधात्तेषां रक्षसां भरतर्षभ ।
उवाचेदं वचः पार्थ पराशरमरिन्दमम् ॥ ५३॥

पुलस्त्यः—

कच्चित्तपस्यविघ्नं ते कच्चिन्नन्दसि पुत्रक ।
अजानतामदोषाणां सर्वेषां रक्षसां वधात् ॥ ५४॥

---

1. क-ग-घ—हिंस्यां प्रतिज्ञामिति; ख—जह्ने प्रतिज्ञामिति
2. क-ग-घ—स समापयिषुस्सत्रं निर्ऋतेः प्रियकाम्यया।
ख—समापिपयिषुस्सत्रं नृपतेः प्रियकाम्यया।

प्रजोच्छेदमिमं मह्यं मा कार्षीस्तापसोत्तम ॥ ५५
अधर्मिष्ठं वरिष्ठस्सन् कुरुषे त्वं पराशर ॥ ५५॥
[1]शक्तिना वाऽपि धर्मज्ञ नातिक्रमितुमर्हसि ॥ ५६
प्रजानां च ममोच्छेदं न वै कर्तुं त्वमर्हसि ॥ ५६॥
शापाद्धि शक्तेर्वासिष्ठास् तदा राज्ञा विनाशितः ।
आत्मजेन सरोषेण शक्तिर्नीत इतो दिवम् ॥ ५७॥
न हि तं राक्षसः कश्चिच् छक्तो भक्षयितुं मुने ॥ ५८
वासिष्ठा भक्षिताश्चासन् कौशिकोत्सृष्टरक्षसा ।
शापं न कुर्वन्ति तदा वाक्छक्त्या यत्परायणम् ॥ ५९
क्षमावन्तोऽदहन् देहं देहमन्यं व्रजन्ति हि ॥ ५९॥
आत्मनैवाऽऽत्मनस्तेन नष्टो मृत्युस्तदाऽभवत् ॥ ६०
निमित्तभूतस्तत्रासीद् विश्वामित्रः पराशर ॥ ६०॥
राजा कल्माषपादस्तु दिवमारोढुमिच्छति ॥ ६१
ये च शक्त्यवराः पुत्रा वसिष्ठस्य महामुनेः ।
ते च सर्वे मुदा युक्ता मोदन्ते सहितास्सुरैः ॥ ६२
सर्वमेतद्वसिष्ठस्य विदितं वै महामुने ॥ ६२॥
रक्षसां च समुच्छेद एष तात तपस्विनाम् ।
निमित्तभूतस्त्वं चात्र क्रतौ वासिष्ठनन्दन ॥ ६३॥
स सत्रं मुञ्च भद्रं ते समाप्तमिदमस्तु ते ॥ ६४

---

1. अ-ख-च—कोशेषु इत आरभ्य पञ्चश्लोका न दृश्यन्ते ।

गन्धर्वः—

एवमुक्तः पुलस्त्येन वसिष्ठेन च धीमता ।
तदा समापयामास सत्रं शान्तः पराशरः ॥ ६५
सर्वराक्षससत्राय संभृतं पावकं मुनिः ।
उत्तरे हिमवत्पार्श्वे उत्ससर्ज महावने ॥ ६६
स तत्राद्यापि रक्षांसि वृक्षानश्मन एव च ।
भक्षयन् दृश्यते वह्निस् सदा पर्वणि पर्वणि ॥ ६७

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्याम्
आदिपर्वणि अष्टसप्तत्यधिकशततमोऽध्यायः ॥ १७८ ॥
॥ ११ ॥ चैत्ररथपर्वणि सप्तदशोऽध्यायः ॥ १७ ॥
[अस्मिन्नध्याये ६७ श्लोकाः]



## ॥ ऊनाशीत्यधिकशततमोऽध्यायः ॥



सौदासभार्यायां वसिष्ठेन पुत्रोत्पादनकारणं पृष्टवन्तमर्जुनं प्रति पुनः कल्माषपादकथाकथनम् ॥ १ ॥ ब्राह्मणं भक्षितवतः सौदासस्य ब्राह्मण्या शापः ॥ २ ॥

अर्जुनः—[1]

राज्ञा कल्माषपादेन गुरौ ब्रह्मविदां वरे ।
कारणं किं पुरस्कृत्य भार्या वै सन्नियोजिता ॥ १

1. क-ग-ब—गन्धर्वः—
पुनश्चैव महातेजा विश्वामित्रजिघांसया ।
अग्निं संभृतवान् घोरं शाक्तेयस्सुमहातपाः ॥
वासिष्ठसंभृतश्चाग्निर्विश्वामित्राहितैषिणा ।
तेजसा वह्नितुल्येन प्रसन्नस्कन्देन धीमता ॥ [अधिकः पाठः]

जानता च परं धर्मं लौक्यं तेन महर्षिणा ।
अगम्यागमनं कस्माद् वसिष्ठेन महात्मना ॥ २
[1]कृतं तेन पुरा सर्वं वक्तुमर्हसि पृच्छतः ॥ २॥

गन्धर्वः—

धनञ्जय निबोधेदं यन्मां त्वं परिपृच्छसि ।
वसिष्ठं प्रति दुर्धर्षं तथा मित्रसहं नृपम् ॥ ३॥
कथितं ते मया सर्वं यथा शप्तस्स पार्थिवः ।
शक्तिना भरतश्रेष्ठ वासिष्ठेन महात्मना ॥ ४॥
स तु शापवशं प्राप्तः क्रोधपर्याकुलेक्षणः ।
निर्जगाम पुराद्राजन् सहदारः परन्तपः ॥ ५॥
अरण्यं निर्जनं गत्वा सदारः परिचक्रमे ॥ ६
नानामृगगणाकीर्णं नानासत्वसमाकुलम् ।
नानागुल्मलताच्छन्नं नानाद्रुमसमावृतम् ॥ ७
अरण्यं घोरसन्नादं शापग्रस्तः परिभ्रमत् ।
स कदाचित् क्षुधाऽऽविष्टो मृगयन् भक्ष्यमात्मनः ॥ ८
ददर्श सुपरिक्लिष्टः कस्मिंश्चित् सुमनोरमे ।
ब्राह्मणं ब्राह्मणीं चैव मिथुनायोपसंगतौ ॥ ९

---

1. व—धर्मिणं वरिष्ठेन कृतिनाऽपि पुरा सखे ।
तत्र मे संशयो जातः कार्याकार्यविनिश्चये ।
संशयोऽप्रतिषेधं वै तन्मे त्वं वक्तुमर्हसि ॥ [अधिकः पाठः]

तौ समीक्ष्य च वित्रस्तावकृतार्थौ प्रधावितौ ॥ ९॥

तयोः प्रद्रवतोर्विप्रं जगृहे नृपतिर्बलात् ॥ १०

दृष्ट्वा गृहीतं भर्तारम् अथ ब्राह्मण्यभाषत ॥ १०॥

ब्राह्मणी—

शृणु राजन् वचो मह्यं यत्त्वां वक्ष्यामि सुव्रत ॥ ११

आदित्यवंशप्रभवस् त्वं हि लोके च विश्रुतः ॥ ११॥

अप्रमत्तस्स्थितो धर्मे गुरुशुश्रूषणे रतः ;

शापोपहत दुर्धर्ष न पापं कर्तुमर्हसि ॥ १२॥

ऋतुकाले तु संप्राप्ते भर्त्राऽहं समुपागता ।

अकृतार्थिन्यहं भद्र प्रसवार्थश्च मे महान् ॥ १३॥

प्रसीद नृपतिश्रेष्ठ भर्ता मम विसृज्यताम् ॥ १४

गन्धर्वः—

एवं विक्रोशमानायां तस्यां स सुनृशंसकृत् ।

भर्तारं भक्षयामास व्याघ्रो मृगमिवेप्सितम् ॥ १५

तस्याः क्रोधाभिभूतायास् तदाऽश्रूण्यपतन् भुवि ।

सोऽग्निस्समभवद्दीप्तस् तं च देशं व्यदीपयत् ॥ १६

ततस्सा शोकसंतप्ता भर्तृव्यसनदुःखिता ।

कल्माषपादं राजर्षिम् अशपद्ब्राह्मणी रुषा ॥ १७

ब्राह्मणी—

यस्मान्ममाकृतार्थायास् त्वया क्षुद्र नृशंसवत् ।
प्रेक्षन्त्या भक्षितो मेऽद्य प्रभुर्भर्ता महायशाः ॥ १८

तस्मात्त्वमपि दुर्बुद्धे मच्छापपरिविक्षतः ।
पत्नीमृतावनुप्राप्य सम्यक् त्यक्ष्यसि जीवितम् ॥ १९
[1]तेन प्रसाद्यमाना सा प्रसादमकरोत्तदा ॥ १९॥

यस्य चर्षेर्वसिष्ठस्य त्वया पुत्रा विनाशिताः ।
तेन संगम्य ते भार्या तनयं जनयिष्यति ॥ २०॥
स ते वंशकरः पुत्रो भविष्यति नृपाधम ॥ २१

गन्धर्वः—

एवं शप्त्वा तु राजानं सा तदाऽऽङ्गिरसी शुभा ।
तस्यैव सन्निधौ दीप्तं प्रविवेश हुताशनम् ॥ २२

वसिष्ठश्च महाभागस् सर्वमेतदपश्यत ।
ज्ञानयोगेन महता तपसा च परन्तप ॥ २३

मुक्तशापश्च राजर्षिः कालेन महता ततः ।
ऋतुकाले निपतितो भार्यया सन्निवारितः ॥ २४

न हि सस्मार नृपतिस् तं शापं काममोहितः ॥ २४॥
देव्यास्सोऽथ वचश्श्रुत्वा विसंज्ञस्समपद्यत ॥ २५

तं शापमनुसंस्मृत्य पर्यतप्यद्भृशं तदा ॥ २५॥

---

1. अ-ब-कोशयोः इदमर्धं नास्ति ।

एतस्मात् कारणाद्राजा वसिष्ठं संन्ययोजयत् ।
स्वदारे भरतश्रेष्ठ शापदोषसमन्वितः ॥ २६॥

यदा कल्माषपादस्तु राक्षसत्वमवाप सः ।
तदा वसिष्ठः कुरुणा यज्ञार्थे स वृतोऽभवत् ॥ २७॥

यदा कल्माषपादस्तु राक्षसत्वं विसृष्टवान् ।
तदा तेनैव राज्ञा तु वसिष्ठस्स वृतोऽभवत् ॥ २८॥

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्याम्
आदिपर्वणि ऊनाशीत्यधिकशततमोऽध्यायः* ॥ १७९ ॥
॥ ११ ॥ चैत्ररथपर्वणि अष्टादशोऽध्यायः ॥ १८ ॥

[अस्मिन्नध्याये २८॥ श्लोकाः]

---

## ॥ अशीत्यधिकशततमोऽध्यायः ॥

---

अर्जुनेन अनुरूपपुरोहितसंपादनं पृष्टेन गन्धर्वेण धौम्यवरणाभ्यनुज्ञा ॥ १ ॥ गन्धर्वाय आग्नेयास्त्रदानम् ॥ २ ॥ उत्कचतीर्थे पाण्डवैः धौम्यस्य पौरोहित्ये वरणम् ॥ ३ ॥

---

अर्जुनः—

अस्माकमनुरूपं वै यस्स्याद्गन्धर्वसत्तम ।
पुरोहितं ममाचक्ष्व सर्वं हि विदितं तव ॥ १

---

* घ—कोशे नात्र अध्यायसमाप्तिः

गन्धर्वः—

यवीयान् देवलस्यैष वने भ्राता तपस्यति ।
धौम्य उत्कचके तीर्थे तं वृणीष्व यदीच्छसि ॥ २

वैशम्पायनः—

ततोऽर्जुनोऽस्त्रमाग्नेयं प्रददौ तद्यथाविधि ।
गन्धर्वाय ददौ प्रीतो वचनं चेदमब्रवीत् ॥ ३

त्वय्येव तावत्तिष्ठन्तु हया गन्धर्वसत्तम ।
कार्यकाले ग्रहीष्यामि स्वस्ति तेऽस्त्विति चाब्रवीत् ॥ ४

तेऽन्योन्यमभिसंपूज्य गन्धर्वः पाण्डवाश्च ह ।
रम्याद्भागीरथीतीराद् यथाकामं प्रतस्थिरे ॥ ५

तत उत्कचकं तीर्थं गत्वा धौम्याश्रमान्तिके ।
तं वव्रुः पाण्डवा धौम्यं पौरोहित्याय पाण्डव ॥ ६

तांश्चापि प्रतिजग्राह सर्ववेदविदां वरः ।
पाद्येन फलमूलेन पौरोहित्येन चैव ह ॥ ७

तेन चाशंसिरे लब्धां श्रियं राज्यं च पाण्डवाः ।
ब्राह्मणं तं पुरस्कृत्य पाञ्चा[1]ल्याश्च स्वयंवरे ॥ ८

मातृषष्ठास्ततस्तेन गुरुणा सह संगताः ।
नाथवन्तमिवात्मानं मेनिरे भरतर्षभाः ॥ ९

1. क-ग—ल्याश्च; घ—पाञ्चसेन्याः स्वयंवरे ।

स हि वेदार्थतत्त्वज्ञस् तेषां गुरुरुदारधीः ।
वेदविश्वैकवाग्मी च धौम्यश्श्रीमान् द्विजोत्तमः ॥ १०

तेजसा चैव बुद्ध्या च रूपेण यशसा श्रिया ।
मन्त्रैश्च विविधैर्धौम्यस् तुल्य आसीद्बृहस्पतेः ॥ ११

स चापि विप्रस्तान् मेने स्वभावाभ्यधिकान् भुवि ॥ ११॥

तेन धर्मविदा पार्था [1]याज्यास्सर्वविदा पुरा ।
मेनिरे सहिता वीराः प्राप्तं राज्यं स्वधर्मतः ॥ १२॥

बुद्धिवीर्यबलोत्साहैर् युक्ता देवा इवापरे ।
कृतस्वस्त्ययनास्तेन ततस्ते मनुजाधिपाः ॥ १३॥

मेनिरे सहिता गन्तुं पाञ्चाल्यास्तं स्वयंवरम् ॥ १४

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्याम्
आदिपर्वणि अशीत्यधिकशततमोऽध्यायः ॥ १८० ॥

॥ ११ ॥ चैत्ररथपर्वणि एकोनविंशोऽध्यायः ॥१९॥

[अस्मिन्नध्याये १४ श्लोकाः]

॥ समाप्तं चैत्ररथपर्व ॥

---

1. क-ख-ग—याज्यास्सर्वविदा वृताः ।

## ॥ एकाशीत्यधिकशततमोऽध्यायः ॥

(अथ स्वयंवरपर्व)

द्रौपदीस्वयंवरं शृण्वतां राज्ञां पाण्डवानां च द्रुपदपुरप्रवेशनम् ॥१॥
धृष्टद्युम्नेन लक्ष्यवेधपणकथनं च ॥ २ ॥

वैशम्पायनः—

[1]एवं मत्वा प्रयातास्ते पाण्डवा जनमेजय ।
ब्रह्मरूपधरास्सर्वे जटिला ब्रह्मचारिणः ॥ १
राजन् दक्षिणपाञ्चालान् द्रुपदेनाभिरक्षितान् ॥ १॥
ततस्ते तं महात्मानं शुद्धात्मानमकल्मषम् ।
ददृशुः पाण्डवा राजन् पथि द्वैपायनं तदा ॥ २॥
तस्मै यथावत् सत्कारं कृत्वा तेन च सान्त्विताः ।
कथयित्वाऽभ्यनुज्ञाताः प्रययुर्द्रुपदक्षयम् ॥ ३॥
पश्यन्तो रमणीयानि वनानि च सरांसि च ।
तत्र तत्र वसन्तश्च शनैर्जग्मुर्महारथाः ॥ ४॥
स्वाध्यायवन्तो मधुराः पाण्डवाः प्रियवादिनः ।
आनुपूर्व्येण संप्राप्ताः पाञ्चालान् कुरुनन्दनाः ॥ ५॥
ते तु दृष्ट्वा पुरं तस्य स्कन्धावारं च पाण्डवाः ।

---

1. च—ततस्ते कुरुशार्दूला भ्रातरः पञ्च पाण्डवाः ।
ब्रह्मरूपधराः पार्थाः

कुम्भकारस्य शालायां निवेशं चक्रिरे तदा ॥ ६॥

तत्र भैक्षं समाजह्रुर् ब्राह्मीं वृत्तिं समाश्रिताः ॥ ७

[1]तांश्च प्राप्तांस्तथा वीरान् जज्ञिरे न नराः क्वचित् ॥ ७॥

[2]यज्ञसेनस्य कामस्तु पाण्डवाय किरीटिने ।
[3]कृष्णां ददानि च सदा न चैतद्विवृणोति सः ॥ ८॥

[4]जामातृबलसंयोगं मेने हि बलवत्तरम् ॥ ९

अन्वेषमाणः पाञ्चालः कौन्तेयान् जनमेजय ।
[5]दृढं धनु[6]रनायम्यं कारयामास भारत ॥ १०

---

1. घ—संप्राप्तांस्तांस्तदा तत्र जनाः पार्थान् न जज्ञिरे ।

2. क-ख-ग-घ—यज्ञसेनस्तु पाञ्चालो भीष्मद्रोणकृतागसम् ।
ज्ञात्वाऽऽत्मानं तदाऽऽरेभे त्राणायात्मक्षमां क्रियाम् ॥
अवमन्य धृष्टद्युम्नं हि न स द्रोणमचिन्तयत् ।
स तु वैरप्रसङ्गाच्च भीष्माद्भयमचिन्तयत् ॥
[अधिकः पाठः]

3. घ—दास्यामि कृष्णां पार्थाय न चैनं विवृणोति सः ।

4. क-ख-ग-घ—कन्यादानाद्धि शरणं सोऽमन्यत महीपतिः ।
[अधिकः पाठः]

5. ख—शङ्करेण वरं दत्तं प्रीतेन च महात्मना ।
तन्निष्फलं स्यान्न तु मे इति प्रामाण्यमागतः ॥
मया कर्तव्यमधुना दुष्करं लक्ष्यवेधनम् ।
इति निश्चित्य मनसा कारितं लक्ष्यमुत्तमम् ॥ [अधिकः पाठः]

6. क-ख-ग-घ—रनायम्यं मार्गयामास वै तदा ।

[1]यन्त्रं वैहायसं चापि कारयामास कृत्रिमम् ।
तेन यन्त्रेण सहितं कारयामास काञ्चनम् ॥ ११

इदं सज्यं धनुः कृत्वा छिद्रेणानेन सायकैः ।
[2]अतीत्य लक्ष्यं यो वेद्धा स लब्धा च सुतामिति ॥ १२
[3]इत्येवं द्रुपदो राजा सर्वतस्समघोषयत् ॥ १२॥
तच्छ्रुत्वा पाण्डवास्सर्वे समीयुस्तत्र भारत ॥ १३
ऋषयश्च महात्मानस् स्वयंवरदिदृक्षया ।
[4]दुर्योधनपुरोगाश्च सकर्णकुरवो नृपाः ॥ १४

---

1. क-ख-ग-घ—वैयाघ्रपद्यस्योग्रं वै सृञ्जयस्य महीपतेः ।
तद्धनुःकिंधुरं नाम देवदत्तमुपानयत् ॥
आयसी तस्य ज्या चासीत् प्रतिबद्धा महाबल ।
न तु ज्यां प्रसहेदन्यम् तद्धनुःप्रवरं महत् ॥
* [अधिकः पाठः]

2. घ—विध्वा यः पातयेल्लक्ष्यं स लब्धा द्रुपदात्मजाम् ॥

3. घ—अघोषयन्महीं सर्वां चतुरर्णवसंवृताम् ।

4. क-ग-घ—यादवा वासुदेवेन सार्धमन्धकवृष्णयः ।
राजानो राजपुत्राश्च युवानो मृष्टकुण्डलाः ॥
नानाजनपदाधीशा यज्वानो भूरिदक्षिणाः ।
मनोज्ञरूपा लावण्यान्महेन्द्रसमविक्रमाः ॥
क्रोधेन चाग्निसदृशाः क्षमया पृथिवीसमाः ।
स्थैर्ये मेरुसमा धीरास् सूर्यवैश्वानरोपमाः ॥
पृथिव्यां ये च राजानो ऋषयश्च तपोधनाः ।
बालवृद्धानृते सर्वे महीपालास्समागताः ॥
[अधिकः पाठः]

ब्राह्मणाश्च महाभागा देशेभ्यस्समुपागताः ।
ते ह्यर्चिता नरेन्द्रेण द्रुपदेन महात्मना ॥ १५

[1]ततः पुरवरश्रेष्ठे सागरोद्भूतनिस्स्वने ।
शिशुमारगिरिं प्राप्य न्यविशन्त महारथाः ॥ १६

प्रागुत्तरे च नगराद् भूमिभागे समे शुभे ।
समाजवाटश्शुशुभे भवनैस्सर्वतो वृतः ॥ १७

प्रासादपरिघोपेतो द्वारतोरणमण्डितः ।
वितानेन विचित्रेण सर्वतस्समलङ्कृतः ॥ १८

तूर्यौघशतसङ्कीर्णः परार्ध्यागुरुधूपितः ।
चन्दनोदकसिक्तश्च माल्यदामैश्च शोभितः ॥ १९

कैलासशिखरप्रख्यैर् नभस्स्थलविलेखिभिः ।
सर्वतस्संवृतैर्नद्धः प्रासादैस्सुकृतोच्छ्रितैः ॥ २०

सुवर्णजालसंवीतैर् मणिकुट्टिमभूषितैः ।
सुखारोहणसोपानैर् महासनपरिच्छदैः ॥ २१

[2]अग्राम्यसमवच्छन्नैर् अगुरूत्तमधूपितैः ।

---

1. क-ग-घ—त्रयस्त्रिंशत्सुरास्सर्वे विमानैर्व्योम्नि निष्ठिताः ।
ब्राह्मणैरेव सहिताः पाण्डवास्समुपाविशन् ।
वैतालिका नर्तकाश्च सूतमागधबन्दिनः ।
राजानुपागमन् सर्वे द्रष्टुकामास्स्वयंवरम् ॥ [अधिकः पाठः]

2. घ—स्रग्दामभिरविच्छिन्नैर् विमानध्वजशोभितैः ।

हंसवर्णैश्च बहुभिर् आयोजनसुगन्धिभिः ॥ २२
असंबाधपथद्वारैश् शयनासनशोभितैः ।
बहुधातुपिनद्धाङ्गैर् हिमवच्छिखरैरिव ॥ २३
तत्र नानाप्रकारेषु विमानेषु स्वलङ्कृताः ।
स्पर्धमानास्तदाऽन्योन्यं निषेदुस्सर्वपार्थिवाः ॥ २४
तत्रोपविष्टा ददृशुर् महासत्वान् पृथग्जनाः ।
राजसिंहान् महाभागान् मृष्टस्रगनुलेपनान् ॥ २५
महाप्रसादान् ब्रह्मण्यान् स्वराष्ट्रपरिरक्षिणः ।
प्रियान् सर्वस्य लोकस्य सुकृतैः कर्मभिश्शुभैः ॥ २६
ततो मञ्चातिमञ्चेषु पौरजानपदा जनाः ।
उपोपविविशुस्सर्वे याज्ञसेनीदिदृक्षवः ॥ २७
ब्राह्मणैस्त्वेव सहिताः पाण्डवास्समुपाविशन् ।
ऋद्धिं पञ्चालदेशस्य पश्यन्तस्तामनुत्तमाम् ॥ २८
ततस्समाजो ववृधे स राजन् दिवसान् बहून् ।
रत्नप्रदानबहुलश् शोभितो नटनर्तकैः ॥ २९
वर्तमाने समाजे तु रमणीयेऽह्नि षोडशे ।
आप्लुता शुद्धवसना सर्वाभरणभूषिता ॥ ३०
[1]वीरकां स्रजमादाय काञ्चनैस्समलङ्कृता ।

---

1. अ—वरकांस्यमुपादाय काञ्चनं समलङ्कृतम् ।

अवतीर्णा ततो रङ्गे द्रौपदी द्रुपदात्मजा ॥ ३१

पुरोहितस्सोमकानां मन्त्रविद्ब्राह्मणश्शुचिः ।
परिस्तीर्य जुहावाग्निम् आज्येन विधिना तदा ॥ ३२

संतर्पयित्वा ज्वलनं ब्राह्मणान् स्वस्ति वाच्य च ।
वारयामास सर्वाणि वादित्राणि समन्ततः ॥ ३३

निश्शब्दे तु कृते तस्मिन् धृष्टद्युम्नो विशांपते ।
रङ्गमध्यं गतस्तत्र मेघगम्भीरया गिरा ॥ ३४
वाक्यमुच्चैर्जगादेदं श्लक्ष्णमर्थवदुत्तमम् ॥ ३४॥

धृष्टद्युम्नः—

इदं धनुर्लक्ष्यमिमे च बाणाः
शृण्वन्तु मे क्षत्रियास्सर्वे एव ।
यन्त्रच्छिद्रेणाभ्यतिक्रम्य लक्ष्यं
समर्पयध्वं खगमैर्दशार्धैः ॥ ३५॥

एतत्कर्ता कर्म सुदुष्करं यः
कुलेन रूपेण बलेन युक्तः ।
तस्याद्य भार्या भगिनी ममेयं
कृष्णा भवित्री न मृषा ब्रवीमि ॥ ३६॥

वैशम्पायनः—

तानेवमुक्त्वा द्रुपदस्य पुत्रः
पश्चादिदं द्रौपदीमित्युवाच ।

नाम्ना च गोत्रेण च कर्मणा च
संकीर्तयंस्तान् नृपतीन् समेतान् ॥ ३७॥

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्याम्
आदिपर्वणि एकाशीत्यधिकशततमोऽध्यायः ॥ १८१ ॥

॥ १२ ॥ स्वयंवरपर्वणि प्रथमोऽध्यायः ॥ १ ॥

[अस्मिन्नध्याये ३७॥ श्लोकाः ]

---

## ॥ द्व्यशीत्यधिकशततमोऽध्यायः ॥

---

रङ्ग आगतानां राज्ञां नामकथनम् ॥ १ ॥ ब्राह्मणमध्यस्थान्पाण्डवान् विज्ञाय श्रीकृष्णेन बलरामाय कथनम् ॥ २ ॥ धनुर्दर्शनेनैव केषां चिद्राज्ञां धनुःपूरणे निराशता ॥ ३ ॥ शिशुपालादीनां धनुःपूरणे भङ्गः ॥ ४ ॥ अर्जुनस्य धनुःपूरणे एषणा ॥ ५ ॥

---

धृष्टद्युम्नः—

दुर्योधनो दुर्विषहो दुर्मुखो दुष्प्रधर्षणः ।
विविंशतिर्विकर्णश्च सहो दुःशासनस्समः ॥ १

युयुत्सुर्वायुवेगश्च भीमवेगश्च वीर्यवान् ।
उग्रायुधो बलाकिश्च कनकायुर्विरोचनः ॥ २

सुकुण्डलश्चित्रसेनस्सुवर्चाः कनकध्वजः ।
नन्दको बाहुशाली च कुण्डली विकटस्तथा ॥ ३

विन्दश्चाप्यनुविन्दश्च सदीपी विकलः करी ।

एते चान्ये च बहवो धार्तराष्ट्रा महाबलाः ॥ ४
कर्णेन सहिता वीरास् त्वदर्थं समुपागताः ॥ ४॥

शतसंख्या महात्मानस् समेता देवरूपिणः ।
शकुनिश्चाचलश्चैव वृषकोऽथ महारथः ॥ ५॥

एते गान्धारराजस्य सुतास्सर्वे समागताः ॥ ६

अश्वत्थामा च भोजश्च सर्वशस्त्रभृतां वरौ ।
[1]वार्धक्षेमिस्सुवर्चाश्च सेनाबिन्दुश्च वीर्यवान् ॥ ७

अभिभूस्सह पुत्रेण वसुना च सुवर्चसा ।
सुमित्रस्सुकुमारश्च वृत्तस्सत्यधृतिस्सदा ॥ ८

सूर्यध्वजो रोचमानो नीलश्चित्रायुधस्तदा ।
अंशुमांश्चेकितानश्च श्रेणिमांश्च महाबलः ॥ ९

समुद्रसेनश्चन्द्रसेन इन्द्रसेनश्च पार्थिवः ।
जरासन्धस्सपुत्रश्च सुदण्डो दण्ड एव च ॥ १०

पौण्ड्रको वासुदेवश्च भगदत्तश्च वीर्यवान् ।
कलिङ्गस्ताम्रलिप्तश्च पत्तनाधिपतिर्महान् ॥ ११

---

1. क-ख-ग-घ—समवेतौ महात्मानौ त्वदर्थं समलङ्कृतौ ।
बृहन्तो मणिमांश्चैव दण्डधारश्च वीर्यवान् ॥
सहदेवो जयत्सेनो मेघसन्धिश्च मागधः ।
विराटस्सह पुत्राभ्यां शङ्खेनैवोत्तरेण च ॥
[अधिकः पाठः]

मद्रराजस्तथा शल्यस् सहपुत्रो महाबलः ।
रुक्माङ्गदेन वीरेण तथा रुक्मरथेन च ॥ १२

कौरव्यस्सोमदत्तश्च पुत्रास्त्वस्य महारथाः ।
समवेतास्त्रयश्शूरा भूरिर्भूरिश्रवाश्शलः ॥ १३

सुदक्षिणश्च काम्भोजो दृढधन्वा च कौरवः ।
बृहद्बलस्सुषेणश्च शिबिरौशीनरस्तथा ॥ १४

पाण्ड्यचकेरलचोलेन्द्रास् त्रयश्चेताग्नयो यथा ।
आसनेषु विराजन्ते आशामागस्त्यमाश्रिताः ॥ १५

सङ्कर्षणो रौहिणेयो वासुदेवश्च वीर्यवान् ।
साम्बश्च चारुदेष्णश्च सारणोऽथ गदस्तथा ॥ १६

अक्रूरस्सात्यिकश्चैव युयुधानश्च सात्यकिः ।
कृतवर्मा च हार्दिक्यः पृथुर्विपृथुरेव च ॥ १७

विदूरथश्च कण्वश्च समीकस्सारिमेजयः ।
वीरो धनपतिश्चैव वाह्विवाङ्गारकस्तथा ॥ १८

उशीनरश्च विक्रान्तो वृष्णयस्ते प्रकीर्तिताः ॥ १८॥
भगीरथो बृहत्क्षत्रस् सैन्धवश्च बृहद्रथः ॥ १९

जयद्रथो वाह्लिकश्च श्रुतायुरथ वीर्यवान् ।
उल्मुकः कैतवो राजा चित्राङ्गदशुभाङ्गदौ ॥ २०

वत्सराजश्च धृतिमान् कोसलाधिपतिर्महान् ।

कर्णश्च सह पुत्रेण वृषसेनश्च वीर्यवान् ॥ २१

बृहद्बलश्च बलवान् राजा चैवाथ दुर्जयः ॥ २१॥

दमघोषात्मजश्चैव शिशुपालो महाबलः ।

चेदीनामाधिपो वीरो बलवानन्तकोपमः ॥ २२॥

[1]एते चान्ये च बहवो नानाजनपदेश्वराः ।

त्वदर्थमागता भद्रे क्षत्रियाः प्रथिता भुवि ॥ २३॥

एते विध्यन्ति विक्रान्तास् त्वदर्थे लक्ष्यमुत्तमम् ।

वेद्धा तु यो भवेदेषां तं वरं वरयस्व वै* ॥ २४॥

वैशम्पायनः—

तेऽलङ्कृताः कुण्डलिनो युवानः

परस्परं स्पर्धमानास्समेताः ।

अस्त्रं बलं चात्मनि मन्यमानाः

सर्वे समुत्पेतुरहङ्कृतेन ॥ २५॥

वीर्येण रूपेण कुलेन चैव

शीलेन वित्तेन च यौवनेन ।

समृद्धदर्पा मदवेगभिन्ना

मत्ता यथा हैमवता गजेन्द्राः ॥ २६॥

1. क-ग-घ—प्राच्योदीच्यःप्रतीच्याश्च दाक्षिणात्याः क्षितीश्वराः ।
[अधिकः पाठः]

* अ-क-ख-ग—कोशेषु अत्रैवाध्याय समाप्तिर्दृश्यते

परस्परं स्पर्धया प्रेक्षमाणाः
सङ्कल्पजेनाभिपरिप्लुताङ्गाः ।
कृष्णा ममैवेत्यभिभाषमाणा
नृपास्समुत्पेतुरथासनेभ्यः ॥ २७॥

ते क्षत्रिया रङ्गगतास्समेता
[1]जिहीर्षमाणा द्रुपदात्मजां ताम् ।
चकाशिरे पर्वतराजकन्याम्
उमां यथा देवगणास्समेताः ॥ २८॥

कन्दर्पबाणाभिनिपीडिताङ्गाः
कृष्णागतैस्तद्धृदयैर्नरेन्द्राः ।
रङ्गावतीर्णा द्रुपदात्मजार्थे
द्वेष्यान् हि चक्रुस्सुहृदोऽपि सर्वे । २९॥

अथाययुर्देवगणा विमानै-
रुद्रादित्या वसवोऽथाश्विनौ च ।
साध्याश्च सर्वे मरुतस्तथैव
धर्मं पुरस्कृत्य धनेश्वरं च ॥ ३०॥

दैत्यास्सुपर्णाश्च महोरगाश्च
देवर्षयो गुह्यकाश्चारणाश्च ।

---

1. ख—जिजीषवस्ते

विश्वावसुर्नारदः पर्वतश्च
गन्धर्वमुख्यास्सहिताऽप्सरोभिः ॥ ३१॥

हलायुधस्तत्र च केशवश्च
वृष्ण्यन्धकाश्चैव यथाप्रधानाः ।
प्रेक्षांबभूवुर्यदुपुङ्गवास्ते
स्थिताहि कृष्णस्य मते बभूवुः ॥ ३२॥

दृष्ट्वा हि तान् मत्तगजेन्द्ररूपान्
पद्माभिपन्नानिव वारणेन्द्रान् ।
भस्मावृताङ्गानिव हव्यवाहान्
पार्थान् प्रदध्यौ स यदुप्रवीरः ॥ ३३॥

शशंस रामाय युधिष्ठिरं च
भीमं सजिष्णुं यमजौ च वीरौ ।
शनैश्शनै[1]स्तांश्च निरीक्ष्य रामो
जनार्दनं प्रीतमना ददर्श ॥ ३४॥

अन्ये तु वीरा नृपपुत्रपौत्राः
कृष्णागतैर्नेत्रमनस्स्वभावैः ।
व्यायच्छमाना ददृशुस्समन्तात्
सन्दष्टताम्रोज्वलदन्तवक्त्राः ॥ ३५॥

---

1. घ—स्तान् स निरीक्षमाणो जनार्दनः प्रीतमना बभूव ।

तथैव वीराः पृथुबाहुवर्णाः
पार्थाः यमौ चैव महानुभावौ ।
तां द्रौपदीं प्रेक्ष्य तदा स्म सर्वे
कन्दर्पबाणाभिहता बभूवुः ॥ ३६॥

[1]देवर्षिगन्धर्वसमाकुलं तत्
सुपर्णनागासुरयक्षजुष्टम् ।
दिव्येन गन्धेन समाकुलं च
दिव्यैश्च माल्यैरवकीर्यमाणम् ॥ ३७॥

समाहतैर्दुन्दुभिभिश्च राजन्
रराज तत् सङ्कुलमन्तरिक्षे ॥ ३८

विमानसंबाधमभूत्समन्तात्
सवेणुवीणा[2]पणवाभिनादितम् ।
समाजवाटोपरि संस्थितानां
मेघैस्समन्तादिव गर्जितानाम् । ३९

---

1. क-ग—देवाश्च सर्वे सगणास्समेतास् तान्द्रष्टुकामा वसवोऽश्विनौ च ।
रुद्राश्च सोमो वरुणो यमश्च शक्रं पुरस्कृत्य धनेश्वरं च ।
विश्वावसुर्नारदपर्वतौ च देवर्षयश्चाप्सरसां गणाश्च ॥
[अधिकः पाठः]

2. क-ग—पणवाभिनन्दितम् । अ—पणवस्य नादितम् ।
घ—पणवानुरावैः ।

ततस्तु ते राजगणाः क्रमेण
कृष्णानिमित्तं [1]च समीहमानाः ।
तत्कार्मुकं संहननोपपन्नं
सज्यं न शेकुस्तरसाऽपि कर्तुम् ॥ ४०

ते विक्रमन्तस्स्फुरता दृढेन
निष्पिष्टमाना धनुषा नरेन्द्राः ।
विवेष्टमाना धरणीतलस्था
दृश्यन्ति तत्र प्रतिभग्नदर्पाः ॥ ४१

हाहाकृतं तद्धनुषा दृढेन
विस्रस्तनानाभरणाम्बरस्रजः ।
कृष्णानिमित्तं च निवृत्तभावं
राज्ञां तदा मण्डलमात्तमासीत् ॥ ४२

एवं तेषु निवृत्तेषु क्षत्रियेषु समन्ततः ।
चेदीनामधिपो वीरो बलवानन्तकोपमः ॥ ४३

दमघोषात्मजो वीरश् शिशुपालो महाद्युतिः ।
तमप्यारोप्यमाणं तु माषमात्रेऽभ्यताडयत् ॥ ४४

ताडितस्स धनुष्कोट्या पपातोर्व्यां वियन्मुखः ।
संरम्भात् क्रोशमात्रे तु राजानोऽन्ये भयातुराः ॥ ४५

---

1. क-ख-ग—कृतविक्रमं ततः; अ—नृपविक्रमं ततः

ततो राजा जरासन्धो महावीर्यो महाबलः ।
कम्बुग्रीवः पृथुव्यंसो मत्तवारणविक्रमः ॥ ४६

मत्तवारणताम्राक्षो मत्तवारणवेगवान् ।
धनुषोऽभ्याशमागत्य तस्थौ गिरिरिवाचलः ॥ ४७

धनुरारोप्यमाणं तु सर्षमात्रेऽभ्यताडयत् ॥ ४७॥

धनुषा विध्यमानस्तु बाहुभ्यामगमन्महीम् ।
तत उत्थाय राजा स स्वराष्ट्राण्यभिजग्मिवान् ॥ ४८॥

ततश्शल्यो महावीर्यो मद्रराजो महाबलः ।
तमथारोप्यमाणं तु मुद्गमात्रेऽभ्यताडयत् ॥ ४९॥

स पपात महीं रङ्गाद् अर्धयोजनदूरतः ।
तथैवागात् स्वकं राज्यं पश्चादनवलोकयन् ॥ ५०॥

ततो दुर्योधनो राजा धार्तराष्ट्रः परन्तपः ।
मानी दृढास्त्रसंपन्नस् सर्वैश्च नृपलक्षणैः ॥ ५१॥

उत्थितस्सहसा तत्र भ्रातृमध्ये महाबलः ।
विलोक्य द्रौपदीं हृष्टो धनुषोऽभ्याशमागमत् ॥ ५२॥

स बभौ धनुरादाय शक्रश्चापधरो यथा ॥ ५३

आरोप्यमाणं तद्राजा धनुषा बलिना तदा ।
उत्तानशय्यमपतद् अङ्गुल्यन्तरताडितः ॥ ५४

स ययौ ताडितस्तेन व्रीडन्निव नराधिपः ॥ ५४॥

ततो वैकर्तनः कर्णो वृषा वै सूतनन्दनः ।
धनुरभ्याशमागम्य तोलयामास तद्धनुः ॥ ५५॥

तं चाप्यारोप्यमाणं तु केशमात्रेऽभ्यताडयत् ॥ ५६

[1]त्रैलोक्यविजयी कर्णस् सत्वे त्रैलोक्यविश्रुतः ।
धनुषा सोऽपि निर्धूत इति सर्वे भयाकुलाः ॥ ५७

एवं कर्णे विनिर्धूते धनुषाऽन्ये नृपोत्तम ।
चक्षुर्भिरपि नापश्यन् विनम्रमुखपङ्कजाः ॥ ५८

दृष्ट्वा कर्णं विनिर्धूतं लोकवीरा नृपोत्तमाः ।
निराशा धनुषोद्धारे द्रौपदीसङ्गमेऽपि च ॥ ५९

तस्मिंस्तु संभ्रान्तजने समाजे
निक्षिप्तशस्त्रेषु जनाधिपेषु ।
[2]कुन्तीसुतो जिष्णुरियेष कर्तुं
सज्यं धनुस्तत्सशरं च वीरः ॥ ६०

[3]ततो वरिष्ठस्सुरदानवानाम्
उदारधीर्वृष्णिकुलप्रवीरः ।

---

1. अ-ख-च—कोशेषु इत आरभ्य त्रयः श्लोकाः न सन्ति
2. च—तत्कार्मुकं जिष्णुरथाददार
हृयेष वीरस्सशरं च कर्तुम् ।
3. क-ख-ग-च—कोशेषु श्लोकद्वयं नास्ति ।

जहर्ष रामेण स पीड्य हस्तं
हस्तं गतां पाण्डुसुतस्य मत्वा ॥ ६१
न जज्ञुरन्ये नृपवीरमुख्याः
संछन्नरूपानथ पाण्डुपुत्रान् ।
विना हि भीष्मं च यदुप्रवीरौ
धौम्यं च धर्मं सह सोदरांश्च ॥ ६२

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्याम्
आदिपर्वणि द्व्यशीत्यधिकशततमोऽध्यायः ॥ १८२ ॥
॥ १२ ॥ स्वयंवरपर्वणि द्वितीयोऽध्यायः ॥ २ ॥
[अस्मिन्नध्याये ६२ श्लोकाः]

---

## ॥ त्र्यशीत्यधिकशततमोऽध्यायः ॥

---

धनुरारोपणार्थमुत्थितमर्जुनं प्रति ब्राह्मणानां शुभाशंसनम् ॥ १ ॥ अर्जुनेन धनुरारोपणपूर्वकं लक्ष्यवेधः ॥ २ ॥ द्रौपद्या अर्जुनकण्ठे मालाप्रक्षेपः ॥ ३ ॥ क्रोधाद्राजसु द्रुपदहननार्थमागतेषु राजसंमुखे भीमार्जुनयोस्सज्जीभूय स्थितयोस्सतोः कृष्णबलरामयोः संवादः ॥ ४ ॥

---

वैशम्पायनः—
[1]ततोऽवतीर्णे रङ्गस्य मध्यं पाण्डवमध्यमम् ।
उदक्रोशन्विप्रमुख्या विधुन्वन्तोऽजिनानि च ॥ १

---

1. क-ख-ज—यदा निवृत्ता राजानो धनुषस्सज्यकर्मणि ।
अथोदतिष्ठद्विप्राणां मध्याज्जिष्णुरुदारधीः ॥
[अधिकः पाठः]

दृष्ट्वा संप्रस्थितं पार्थम् इन्द्रकेतुसमप्रभम् ।
केचिदासन् विमनसः केचिदासन् मुदाऽन्विताः ॥ २
आहुः परस्परं केचिन्निपुणा बुद्धिचिन्तकाः ॥ २॥
यत्कर्णशल्यप्रमुखैः पार्थिवैर्लोकविश्रुतैः ।
नानतं बलवद्भिर्हि धनुर्वेदपरायणैः ॥ ३॥
तत्कथं त्वकृतास्त्रेण प्राणतो दुर्बलीयसा ।
द्विजमात्रेण शक्यं हि सज्यं कर्तुं धनुर्द्विजाः ॥ ४॥
सज्यं चेत् कृतवानेष विद्धं लक्ष्यं कथं भवेत् ॥ ५
अपहास्या भविष्यन्ति ब्राह्मणास्सर्वराजसु ।
कर्मण्यस्मिन्नसंसिद्धे चापलादपरीक्षिते ॥ ६
यद्येष हर्षाद्दर्पाद्वा यदि वा ब्रह्मचापलात् ।
प्रस्थितो धनुरायन्तुं वार्यतां साधु मा गमत् ॥ ७
नापहास्या भविष्यामो न च लाघवमास्थिताः ।
न च विद्वेष्यतां लोके गमिष्यामो महीक्षिताम् ॥ ८
[1]केचिदाहुर्युवा श्रीमान् नागराजवरोपमः ।
पीनस्कन्धोरुबाहुश्च धैर्येण हिमवानिव ॥ ९
संभाव्यं तस्य कर्मेदम् उत्साहाच्चानुमीयते ॥ ९॥
शक्तिरस्य महोत्साहा न ह्यशक्तस्स्वयं व्रजेत् ॥ १०

1. क-ग—केचिदाहुर्जयोऽस्माकं जयो नास्ति पराजयः ।
पराजयो जयो वा स्यात् कुर्यात् सज्यं धनुर्द्विजाः ॥
च—केचिदाहुर्जयेऽस्माकं लज्जा नास्ति पराजये । [अधिकः पाठः]

न च तद्विद्यते किञ्चित् कर्म लोकेषु यद्भवेत् ।
ब्राह्मणानामसाध्यं वा [1]धृष्णुस्स्थास्नुश्चरिष्णु वा ॥ ११

अब्भक्षा वायुभक्षाश्च फलाहारा दृढव्रताः ।
दुर्बला हि बलीयांसो विप्रा हि ब्रह्मतेजसा ॥ १२

ब्राह्मणो नावमन्तव्यस् सदसद्वा समाचरन् ।
सुखं दुःखं महद्दुःखं कर्म यत्समुपागमत् ॥ १३

धनुर्वेदे च वेदे च योगेषु विविधेषु च ।
न तं पश्यामि मेदिन्यां ब्राह्मणोऽभ्यधिको भवेत् ॥ १४

मन्त्रयोगबलेनापि महताऽऽत्मबलेन वा ।
जृम्भयेयुरमुं लोकम् अथवा द्विजसत्तमाः ॥ १५

एवं तेषां विलपतां विप्राणां विविधा गिरः ।
अर्जुनो धनुषोऽभ्याशे तस्थौ गिरिरिवाचलः ॥ १६

[2]अर्जुनः पाण्डवश्रेष्ठो धृष्टद्युम्नमथाब्रवीत् ॥ १६॥
एतद्धनुर्ब्राह्मणानां सज्यं कर्तुमलं नु किम् ॥ १७

तस्य तद्वचनं श्रुत्वा धृष्टद्युम्नोऽब्रवीद्वचः ॥ १७॥

ब्राह्मणो वाऽथ राजन्यो वैश्यो वा शूद्र एव वा ।
एतेषां यो धनुश्श्रेष्ठं सज्यं कुर्याद्द्विजोत्तम ॥ १८॥
तस्मै प्रदेया भगिनी सत्यमुक्तं मया वचः ॥ १९

तस्य तद्वचनं श्रुत्वा प्रययौ ब्राह्मणैर्वृतः ।
ततः पश्चान्महातेजाः पाण्डवो रणदुर्जयः ॥ २०

---

1. ख—स्थावरेषु चरेषु च
2. अ-ख—कोशयोः इत आरभ्य चत्वारः श्लोका न दृश्यन्ते ।

स तद्धनुः परिक्रम्य प्रदक्षिणमथाकरोत् ।
प्रणम्य शिरसा हृष्टो जगृहे च परन्तपः ॥ २१

सज्यं च चक्रे निमिषान्तरेण
शरांश्च जग्राह दशार्धसङ्ख्यान् ।
विव्याध लक्ष्यं निपपात तच्च
छिद्रेण भूमौ सहसाऽतिविद्धम् ॥ २२

ततोऽन्तरिक्षे च बभूव नादस्
समाजमध्ये च महान्निनादः ।
पुष्पाणि दिव्यानि ववर्ष देवः
पार्थस्य मूर्ध्नि द्विषतां निहन्तुः ॥ २३

चेलानि विव्यधुश्चात्र ब्राह्मणाश्च सहस्रशः ।
ननन्दुर्ननृतुश्चात्र धून्वन्तो व्यजनानि च ॥ २४

[1]न्यपतंश्चात्र नभसस् समन्तात् पुष्पवृष्टयः ।
शङ्खानि चैव तूर्याणि वादकाश्चाभ्यवादयन् ॥ २५

सूतमागधसङ्घाश्चाप्यस्तुवंस्तत्र सुस्वराः ॥ २५॥

तस्मिंस्तु शब्दे महति प्रवृद्धे
युधिष्ठिरो धर्मभृतां वरिष्ठः ।

1. क-ख—नृत्यन्तोऽभिमुखा राज्ञां दर्शयन्तो द्विजावलिम् ।
क्ष्वेळन्तश्च हसन्तश्च विप्रुषिपङ्क्तजटाधराः ॥ [अधिकः पाठः]

आवासमेवाभिजगाम शीघ्रं
सार्धं यमाभ्यां पुरुषोत्तमाभ्याम् ॥ २६॥

विद्धं च लक्ष्यं प्रसमीक्ष्य कृष्णा
पार्थं च शक्रप्रतिमं निरीक्ष्य ।
स्वभ्यस्तरूपाऽपि नवेव नित्यं
विनाऽपि हासं हसतीव कन्या ॥ २७॥

मदादृतेऽपि स्खलतीव भावैर्
वाचा विना व्याहरतीव दृष्ट्या ।
आदाय शुक्लं वरमाल्यदाम
जगाम कुन्तीसुतमुत्स्मयन्ती ॥ २८॥

[1]समेत्य तस्योपरि सोत्ससर्ज
समागतानां पुरतो नृपाणाम् ।
विन्यस्य मालां विनयेन तस्थौ
विहाय राज्ञस्सहसा नृपात्मजा ॥ २९॥

शचीव देवेन्द्रमथाग्निदेवं
स्वाहेव लक्ष्मीश्च यथा मुकुन्दम् ।
उषेव सूर्यं मदनं रतीव
महेश्वरं पर्वतराजपुत्री ॥ ३०॥

---

1 क.-ग-ब-गत्वा तु पश्चात् प्रसमीक्ष्य कृष्णा पार्थस्य वक्षस्यभिशङ्कमाना ।
क्षिप्त्वा तु तत्पार्थिवसङ्घमध्ये वराय वव्रे द्विजवीरमध्ये ॥

[1]रामं यथा मैथिलराजपुत्री
भैमी यथा राजवरं नलं हि ॥ ३१

तं दृष्ट्वा नृपतिः प्रीतो बभूवारिनिषूदनम् ।
सह सैन्येन पार्थस्य साहाय्यार्थमियेष सः* ॥ ३२

वैशम्पायनः—

तस्मै दित्सति कन्यां तु ब्राह्मणाय महात्मने ।
कोप आसीन्महीपानाम् आलोक्यान्योन्यमन्तिकात् ॥ ३३

अस्मानयमतिक्रम्य तृणीकृत्य च सङ्गतान् ।
दातुमिच्छति विप्राय द्रौपदीं योषितां वराम् ॥ ३४

अवज्ञायेह पार्षतः कार्ये केन महात्मनाम् । ३४॥
ते हन्मैनं दुरात्मानं योऽयमस्मान्न मन्यते ॥ ३५

न चार्हत्येष सत्कारं न हि वृद्धो मतो गुणैः ॥ ३५॥
[2]हन्मैनं सह पुत्रेण दुराचारं नृपद्विषम् ॥ ३६

अयं हि सर्वानाहूय सत्कृत्य च नराधिपान् ।
गुणवद्भोजयित्वा तु ततः पश्चाद्विनिन्दति ॥ ३७

---

1. क-ख-ग-घ—ङ तामुपादाय विजित्य रङ्गे
द्विजातिभिस्तैरभिपूज्यमानः ।
रङ्गाद्विराक्रामदचिन्त्यकर्मा
पत्न्या तया चाप्यनुगम्यमानः ॥ [अधिकःपाठः]

* अ-क-ख-ग—कोशेष्वत्रैवाध्यायसमाप्तिर्दृश्यते ॥

2. क-ग—हन्म्येनं

अस्मिन् राजसमावाये देवानामिव सन्नये ।
किमयं सदृशं कंचिन्नृपतिं नैव दृष्टवान् ॥ ३८
न च विप्रेष्वधीकारो विद्यते वरणं प्रति ।
स्वयंवरः क्षत्रियाणाम् इतीयं प्रथिता श्रुतिः ॥ ३९
अथवा यदि कन्येयं नेह किञ्चिद्बुभूषति ।
तिलशः प्रविभज्यैनां याम राष्ट्राणि पार्थिवाः ॥ ४०
ब्राह्मणो यदि वा बाल्याल्लोभाद्वा कृतवानिदम् ।
विप्रियं पार्थिवेन्द्राणां नैष वध्यः कथञ्चन ॥ ४१
ब्राह्मणार्थं हि नो राज्यं जीवितं च वसूनि च ।
पुत्रपौत्रं च यच्चान्यद् अस्माकं विद्यते धनम् ॥ ४२
[1]अवमानवशाद्रोषात् स्वधर्मस्य च रक्षणात् ।
स्वयंवराणां चान्योन्यं मा भूदेवंविधा गतिः ॥ ४३
इत्युक्त्वा राजशार्दूला रुष्टाः परिघबाहवः ।
द्रुपदं संजिघृक्षन्तस् सायुधास्समुपाद्रवन् ॥ ४४
तान् गृहीतशरान् पापान् क्रुद्धानापततो भृशम् ।
द्रुपदो वीक्ष्य संत्रासाद् ब्राह्मणाञ्छरणं गतः ॥ ४५
न भयान्नापि कार्पण्यान्न प्राणपरिरक्षणात् ।
जगाम द्रुपदो विप्रान् क्षेमार्थी संप्रपद्यते ॥ ४६
वेगेनापततस्तांस्तु प्रभिन्नानिव वारणान् ।

1 घ—अवमानभयाद्रोषात्

पाण्डुपुत्रौ महावीर्यौ प्रतीयतुररिन्दमौ ॥ ४७

ततस्समानेदुरुदायुधास्ते
महीक्षितो बद्धतलाङ्गुलित्राः ।
जिघांसमानाः कुरुराजपुत्रा-
वमर्षयन्तोऽर्जुनभीमसेनौ ॥ ४८

ततस्तु भीमोऽद्भुतवीर्यकर्मा
महाबलो वज्रसमानवेगः ।
उत्पाट्य दोर्भ्यां द्रुममेकवीरो
निष्पत्रयामास यथा गजेन्द्रः ॥ ४९

तं वृक्षमादाय रिपुप्रमाथी
दण्डीव दण्डं पितृराज उग्रम् ।
तस्थौ समीपे पुरुषर्षभस्य
पार्थस्य पार्थः पृथुदीर्घबाहुः ॥ ५०

तदन्तरे धर्मरतोऽपि गत्वा
विज्ञाय कुन्तीं कुशलीं क्षणेन ।
आगम्य तस्थौ सह सोदराभ्यां
पुरुषर्षभाभ्यां पुरुषप्रवीरः ॥ ५१

तदाऽब्रवीज्जिष्णुरुदारकर्मा
मा सिंहनादं कुरु पूर्वजेह ।

मा घोरतां दर्शय शत्रुमध्ये
साधारणं योधय तावदार्ये ॥ ५२

तत्प्रेक्ष्य कर्मातिमनुष्यबुद्धिर्-
जिष्णुस्स हि भ्रातुरचिन्त्यकर्मा।
दामोदरो भ्रातरमुग्रवीर्ये
हलायुधं वाक्यमिदं बभाषे ॥ ५३

वासुदेवः—

य एष सिंहर्षभदृप्तगामी
महद्धनुः कर्षति तालमात्रम् ।
एषोऽर्जुनो नात्र विचार्यमस्ति
यद्यस्मि संकर्षण वासुदेवः ॥ ५४

य एष वृक्षं तरसाऽवरुध्य
राज्ञां निकारे सहसा निरुद्धः ।
वृकोदरो नान्य इहैतदद्य
कर्तुं समर्थो भुवि मर्त्यधर्मः ॥ ५५

योऽसौ पुरस्तात् कमलायताक्षः
कुकर्महा सिंहगतिर्नृवीरः ।
धीरप्रचण्डोज्ज्वलचारुघोणो
विनिस्सृतस्सोऽच्युत धर्मराजः ॥ ५६

यौ तौ कुमाराविव कार्तिकेयौ

द्वावाश्विनेयाविति मे वितर्कः ।

मुक्ता हि तस्माज्जतुवेश्मदाहा-

न्मया श्रुताः पाण्डुसुताः पृथा च ॥ ५७

वैशम्पायनः—

[1]यथा नृपाः पाण्डवमाजिमध्ये

तं प्राब्रवीच्चक्रधरो हलायुधम् ।

बलं विजानन् पुरुषोत्तमस्तदा

न कार्यमार्येण च संभ्रमस्त्वया ॥ ५८

भीमानुजो योधयितुं समर्थ

एको हि पार्थस्ससुरासुरान् बहून् ॥ ५८॥

अलं विजेतुं किमु मानुषान्नृपान्

साहाय्यमस्मान् यदि सव्यसाची ।

स वाञ्छति स्म प्रयताम वीर

पराभवः पाण्डुसुते न चास्ति ॥ ५९॥

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्याम्
आदिपर्वणि त्र्यशीत्यधिकशततमोऽध्यायः ॥ १८३ ॥
॥ १२ ॥ स्वयंवरपर्वणि तृतीयोऽध्यायः ॥ ३ ॥
[ अस्मिन्नध्याये ५९॥ श्लोकाः ]

---

1. क-ग-तमब्रवीत्तोयदनिर्मलाभो हलायुधोऽनन्तरजं प्रतीतः ।
प्रीतोऽस्मि दिष्ट्या च पितुः स्वसा नः पृथा विमुक्ता सह कौरवाग्र्यैः॥
[अधिकः पाठः]

## ॥ चतुरशीत्यधिकशततमोऽध्यायः ॥

अर्जुनेन कर्णपराजयः ॥ १ ॥ भीमेन कर्णपराजयः ॥ २ ॥ युधिष्ठिरादिभिर्दुर्योधनादिपराजयः ॥ ३ ॥ पुनर्युद्धाय कृतनिश्चयानां राज्ञां श्रीकृष्णवाक्येन युद्धोद्योगाद्विरम्य स्वस्वालयगमनम् ॥ ४ ॥ द्रौपद्या सह भीमार्जुनयोः कुलालगृहप्रवेशः ॥ ५ ॥

वैशम्पायनः—

अजिनान्यवधुन्वन्तः करकांश्च द्विजर्षभाः ।
ऊचुस्ते भीर्न कर्तव्या वयं योत्स्यामहे रिपून् ॥ १

तानेवं वदतो विप्रान् अर्जुनः प्रहसन्निव ।
उवाच प्रेक्षका भूत्वा यूयं तिष्ठत पार्श्वतः ॥ २

अहमेनानजिह्माग्रैश् शतशो विकिरञ्छरैः ।
वारयिष्यामि संक्रुद्धान् मन्त्रैराशीविषानिव ॥ ३

इत्युक्त्वा धनुरादाय शुल्कावाप्तं महारथः ।
भ्राता भीमेन सहितस् तस्थौ गिरिरिवाचलः ॥ ४

ततः कर्णमुखान् क्रुद्धान् क्षत्रियांस्तांश्च पार्थिवान् ।
आसेदतुरभौ पार्थौ गजौ प्रतिगजानिव ॥ ५

ऊचुश्च वाचं पुरुषास् ते राजानो युयुत्सवः ।
आहवेषु द्विजस्यापि वधो दृष्टो युयुत्सतः ॥ ६

ततो वैकर्तनः कर्णो जगामार्जुनमोजसा ।

युद्धार्थी वाशिताहेतोर् गजः प्रतिगजं यथा ॥ ७
भीमसेनं ययौ शल्यो मद्राणामीश्वरो बली ॥ ७॥
दुर्योधनो धर्मराजं शकुनिं नकुलो ययौ ॥ ८
दुश्शासनस्सहदेवं देवरूपप्रहारिणम् ।
अगच्छज्जयतां श्रेष्ठं भस्मच्छन्नमिवानलम् ॥ ९
न कश्चिदश्वं न गजं रथं वाप्यारुरोह वै ॥ ९॥
पदातयस्सर्वएव प्रत्ययुध्यन्त ते परान् ॥ १०
तत्र कर्णोऽगमत् पार्थम् अर्जुनं गूढचारिणम् ॥ १०॥
[1]दुर्योधनादयस्सर्वे ब्राह्मणैस्सह सङ्गताः ।
मृदुपूर्वमयत्नेन प्रत्ययुध्यंस्तदाऽऽहवे ॥ ११॥
ततोऽर्जुनः प्रत्यविध्यत् तापयंस्तं त्रिभिश्शरैः ।
कर्णं वैकर्तनं श्रीमान् विकृष्य बलवद्धनुः ॥ १२॥
बलेन सुव्यवच्छिन्नैर् अवार्यं तमवारयत् ॥ १३
तेषां शराणां वेगेन शितानां तिग्मतेजसाम् ।
[2]विमुह्यमानो राधेयो यत्नात्तमनुधावति ॥ १४
तावुभावप्यनिर्देश्यौ लाघवाज्जयतां वरौ ।
अयुध्येतां सुसंक्रुद्धावन्योन्यं विजयैषिणौ ॥ १५
कृते प्रतिकृतं पश्य पश्य बाहुबलं च मे ।

1. अ-कोशे इदमर्धं नास्ति ।
2. ब—संभ्रान्तवत्तदा कर्णो यत्नतः प्रत्ययोधयत् ।　　[अधिकः पाठः]

इति शूरार्थवचनैर् अभाषेतां परस्परम् ॥ १६

ततोऽर्जुनस्य भुजयोर् वीर्यमप्रतिमं भुवि ।
ज्ञात्वा वैकर्तनः कर्णस् संरब्धस्समयोधयत् ॥ १७

अर्जुनेन प्रयुक्तांस्तान् बाणान् वेगवतस्तथा ।
प्रतिहत्य ननादोच्चैस् सैन्यास्समभिपूजयन् ॥ १८

कर्णः—

तुष्यामि ते विप्रमुख्य भुजवीर्यस्य संयुगे ।
अविषादस्य चैवास्य शस्त्रास्त्र[1]विनयस्य च ॥ १९

किं त्वं साक्षाद्धनुर्वेदो रामो वा विप्रसत्तम ।
अथ त्वं साक्षाद्धरिहयस् साक्षाद्वा विष्णुरच्युतः ॥ २०

आत्मप्रच्छादनार्थं वै बाहुवीर्यमुपाश्रितः ।
विप्ररूपं विधायेदं ततो[2]मां प्रतियुध्यसे ॥ २१

न हि मामाहवे क्रुद्धम् अन्यस्साक्षाच्छचीपतेः ।
[3]पुमान् योधयितुं शक्तः पाण्डवाद्वा किरीटिनः ॥ २२

अहं कर्णो द्विजश्रेष्ठ सर्वशस्त्रभृतां वरः ।
ब्राह्मे वाप्युत्तमास्त्रे च निष्ठितो गुरुशासनात् ॥ २३

त्वामासाद्य महाबाहो बलं मे प्रतिहन्यते ।
दग्धा जतुगृहे सर्वे पाण्डवास्सार्जुनास्तदा ॥ २४

---

1 क-ग-घ—विज; ख- नयनस्य 2. अ—ऽस्त्रान् प्रत्यबुध्यसे ।
3. क-घ—कस्त्वं वदार्जुनो विप्र पिनाकी स्वयमेव वा । [अधिकः पाठः]

वैशम्पायनः—

इत्युवाचार्जुनमिदं प्रत्याहन्तुमशक्नुवन् ॥ २४॥

[1]तमेवंवादिनं पार्थः प्रत्यभाषत वीर्यवान् ॥ २५

अर्जुनः—

नास्मि कर्ण धनर्वेदो नास्मि रामः प्रतापवान् ।
नाहं विष्णुर्न शक्रोऽहं कश्चिदन्यो बलान्वितः ॥ २६

ब्राह्मणोऽस्मि युधां श्रेष्ठस् सर्वशस्त्रभृतां वरः ।
[2]ब्राह्मे पाके च वेदे च निष्ठितो गुरुशासनात् ॥ २७

न त्वा संयोजये विप्रो न मे जीवन् विमोक्ष्यसे ।
निर्जितोऽस्मीति वा ब्रूहि ततो व्रज यथासुखम् ॥ २८

वैशम्पायनः—

एवमुक्त्वा तु कर्णस्य धनुर्ज्यामथ सोऽच्छिनत् ।
ततः कर्णविनाशाय सन्दधे शरमर्जुनः ॥ २९

[3]जितोऽस्मीत्यब्रवीत् कर्णस् संजहार ततोऽर्जुनः ॥ २९॥

---

1. क-ग-च— न्यस्तहस्तो धनुष्कोट्यां मन्दस्मितमुखाम्बुजः ।
[अधिकः पाठः]

2. क-ख-ग-च—स्थितोऽस्म्यद्य रणे जेतुं त्वं तु वीराचलो भव ।
[अधिकः पाठः]

3. क-ख-ग—ततोऽन्यद्धनुरादाय संयोद्धुं सन्दधे शरम् ।
धनुस्तदपि कौन्तेयश् चिच्छेद सशरं रुषा ॥
पुनः पुनश्चाददानश् चिच्छेद स पुनः पुनः ।
अच्छिनद्धनुषा पार्थश् शतं कर्णस्य संयुगे ॥

युद्धायोत्पततौ तत्र राजन् शल्यवृकोदरौ ।
बलिनौ युगपन्मत्तौ स्पर्धया च बलेन च ॥ ३०॥
अन्योन्यमाह्वयन्तौ तु मत्ताविव महागजौ ।
मुष्टिभिर्जानुभिश्चैव निघ्नन्तावितरेतरम् ॥ ३१ ॥
मुहूर्तं तावथान्योन्यं बाहुभ्यामपकर्षताम् ॥ ३२
ततो भीमस्समुत्क्षिप्य बाहुभ्यां शल्यमाहवे ।
नावधीद्बलिनां श्रेष्ठो जहास ब्राह्मणस्तदा ॥ ३३

---

पूर्वतोऽनुवृत्तम्—

छित्वा धनूंषि कर्णस्य कर्णं मर्मस्वताडयत् ।
स च्छिन्नधन्वा बहुशश् छिन्नेषुधिनिषङ्गवान् ॥
पार्थबाणैस्स तुन्नाङ्गः पलायनमथाकरोत् ।
पुनरायान्मुहूर्तेन गृहीत्वा सशरं धनुः ॥
ववर्ष शरवर्षेण पार्थं वैकर्तनस्तदा ।
व्यधमद्बाणजालेन सर्वाङ्गं फल्गुनस्य च ।
हस्तावापं च संछिद्य विननाद महास्वनम् ।
कौन्तेयोऽपि भृशं क्रुद्धो भृशं कार्मुकमाहवे ॥
छित्वाऽस्य शरजालानि धनुः कवचमेव च ।
अर्दयित्वा भृशं बाणैर् द्रावयामास पाण्डवः ॥
मत्वा सर्वान् बाणघातान् द्विजस्येव शचीपतेः ।
इन्द्रोऽयं विप्ररूपेण विष्णुर्वा शङ्करोऽपि वा ॥
रामो दाशरथिर्वाऽपि रामो वा जमदग्निजः ।
युध्यत्यस्मानिति ज्ञात्वा कर्णो यायाद्रणाद्बहिः ॥
ब्राह्मं तेजस्तथाऽजय्यं मन्यमानो महारथः ।
न जय्यो ब्राह्मणं संख्ये युधा क्षत्रकुलोद्भवः ।
इति मत्वा द्रुतं कर्णश् शिबिराय जगाम ह ॥

[अधिकः पाठः]

[1]ततो राजसमूहस्य संक्रुद्धो वृक्षमारुजत् ॥ ३३॥
ततस्तु भीमं संज्ञाभिर् वारयामास धर्मराट् ॥ ३४
आकारज्ञस्ततो भ्रातुः पाण्डवोऽपि न्यवर्तत ॥ ३४॥
धर्मराजश्च कौरव्य दुर्योधनममर्षिणम् ।
सुमहच्चापमादाय द्रुपदस्य निवेशने ॥ ३५॥
धनुषी यमयोर्दत्वा योधयामास पाण्डवः ॥ ३६
ततस्तु पाण्डवश्रेष्ठो राजा तत्र महायशाः ।
ब्रह्मरूपप्रतिच्छन्नो राजानं समयोधयत् ॥ ३७
भीतो दुर्योधन इति वारयामास च त्रिभिः ।
जितमात्रे जिते त्वस्मिन् कः कामस्स्यान्महत्कृतम् ॥ ३८
[2]भुजयोरन्तरेऽविध्यद् बाणेनानतपर्वणा ।
दुर्योधनममित्रघ्नं धर्मराजो युधिष्ठिरः ॥ ३९

---

1. क-ख-ग—परिरभ्योत्क्षिप्य बाहुभ्यां मध्ये भारतसत्तम ।
घ—बभञ्ज तरसा शल्यं मध्ये शीघ्रं महाबलः ।
तत्राश्चर्यं भीमसेनश्च् चकार पुरुषर्षभ ।
यच्छल्यं पतितं भूमौ नाहनद्बलिनं बली ॥
[अधिकः पाठः]

2. क-ग-घ—आयोधयद्रणे राजन् पश्यतां च महीभृताम् ॥
दुर्योधनो धर्मसुतं तौ यमावप्ययोधयत् ।
कर्णे पराजिते यत्र मया तत्र कथं भवेत् ।
चिन्तयन्तमिति ज्ञात्वा राजा विप्राकृतिस्तदा ॥
[अधिकः पाठः]

ततो दुर्योधनः क्रुद्धो दण्डाहत इवोरगः ।
प्रत्यविध्यत राजानं यत्नं परममास्थितः ॥ ४०

छित्त्वा राजा धनुर्ज्यां तु धार्तराष्ट्रस्य संयुगे ।
नाराचेन सुतीक्ष्णेन कायावरणभेदिना ॥ ४१

हृदि विद्ध्वाथ भूयोऽस्य बाह्वोरुरसि चार्पयत् ॥ ४१॥

अभ्यवर्षच्छरौघैस्तं स हित्वा प्राद्रवद्रणात् ॥ ४२

दुश्शासनस्तु संक्रुद्धस् सहदेवेन सङ्गतः ॥ ४२॥

युद्ध्वा च सुचिरं कालं धनुषा स महारथः ।
उत्सृज्य च धनुस्सङ्ख्ये बाहुभ्यामेव कौरव ॥ ४३॥

पाण्डवं त्वभिदुद्राव सोऽसिं जग्राह चर्म च ॥ ४४

विकर्णचित्रसेनाभ्यां निगृहीतश्च कौरवः ॥ ४४॥

दुस्सहो नकुलाच्चापि व्यपकृष्टश्च कौरवैः ।
निवर्तन्तां भवन्तो वै न नो विप्रेषु विग्रहः ॥ ४५॥

न च मे केवलं विप्रा न चैषां मानुषं बलम् ।
द्वौ यत्र ब्राह्मणौ क्रूरौ वाय्वग्निसदृशौ बले ॥ ४६॥

ये वा के वा नमस्तेभ्यो गच्छामस्स्वपुरं वयम् ॥ ४७

एवं संभाष्य ते वीरा विनिवर्तन्त कौरवाः ॥ ४७॥

जहसुर्ब्राह्मणास्तत्र समेता राजमण्डले ॥ ४८

ते प्रयातास्ततस्तत्र क्षत्रिया रणमूर्धनि ॥ ४८॥

ब्राह्मणाश्च जयं प्राप्य कन्यामादाय निर्ययुः ॥ ४९
तत्राश्चर्यं भीमसेनश् चकार भरतर्षभ ।
यच्छल्यं पतितं भूमौ नाहनद्बलिनं बली ॥ ५०
पतिते भीमसेनेन शल्ये कर्णे च निर्जिते ।
दुर्योधने चापगते तथा दुश्शासने रणात् ॥ ५१
शङ्कितास्सर्वराजानः परिवव्रुर्द्विजोत्तमान् ॥ ५१॥
ऊचुश्च सहितास्तत्र साध्विह ब्राह्मणर्षभाः ।
[1]विज्ञायन्तामिमे सम्यक् क्विजन्मानस्तथैव च ॥ ५२॥
को हि राधासुतं कर्णं शक्तो वारयितुं रणे ।
[2]तथैव मद्रराजानं शल्यं बलवतां वरम् ॥ ५३॥
बलदेवादृते वीरात् पाण्डवाच्च वृकोदरात् ।
क्रियतामपहारोऽस्माद् युद्धाद्ब्राह्मणसंकुलात् ॥ ५४॥
अथैनानुपलभ्येह पुनर्योत्स्यामहे वयम् ॥ ५५

तत्कर्म भीमस्य समीक्ष्य कृष्णः
कुन्तीसुतौ तौ परिशङ्कमानः ।
निवारयामास महीपतींस्तान्
धर्मेण लब्धेत्यनुनीय सर्वान् ॥ ५६

---

1. क-ख-ग—विज्ञायेतां क्वजन्मानौ क्वनिवासौ तथैव च ।

2. क-ग-घ—अन्यत्र रामाद् द्रोणाद्वा कृपाद्वापि शरद्वतः ॥
कृष्णाद्वा देवकीपुत्रात् फल्गुनाद्वा परन्तपात् ।
को वा दुर्योधनं शक्तः प्रतिवारयितुं रणे ॥ [अधिकः पाठः]

एवं ते सन्निरुद्धास्तु युद्धायुद्धविशारदाः ।
यथावासं ययुस्सर्वे विस्मिता राजसत्तम ॥ ५७
वृत्तो ब्राह्मोत्तरो रङ्गः पाञ्चाली ब्राह्मणैर्वृता ।
इति ब्रुवन्तः प्रययुर् ये तत्रासन् समागताः ॥ ५८
ब्राह्मणैश्च प्रतिच्छन्नौ रौरवाजिनवासिभिः ।
कृच्छ्रेण जग्मतुस्तत्र भीमसेनधनञ्जयौ ॥ ५९
विमुक्तौ जनसंबाधात् छत्रुभिः परिविक्षतौ ।
कृष्णयाऽनुगतौ तत्र नृवीरौ हि विचेरतुः ॥ ६०
तेषां माता बहुविधं विनाशं पर्यचिन्तयत् ॥ ६०॥
अनागच्छत्सु पुत्रेषु भैक्षकालेऽतिगच्छति ।
धार्तराष्ट्रैर्हृता नूनं विज्ञाय कुरुपुङ्गवाः ॥ ६१॥
मायान्वितैर्वा रक्षोभिस् सुघोरैर्दृढवैरिभिः ।
विपरीतं मतं जातं व्यासस्यापि महात्मनः ॥ ६२॥
इत्येवं चिन्तयामास सुतस्नेहान्विता पृथा ॥ ६३
ततो भुक्तजनप्राये घनैस्सूर्य इवावृतः ।
ब्राह्मणैः प्राविशत्तत्र जिष्णुर्धर्मपुरस्कृतः ॥ ६४

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्याम्
आदिपर्वणि चतुरशीत्यधिकशततमोऽध्यायः ॥ १८४ ॥
॥ १२ ॥ स्वयंवरपर्वणि चतुर्थोऽध्यायः ॥ ४ ॥

[अस्मिन्नध्याये ६४ श्लोकाः ]

---

## ।। पञ्चाशीत्यधिकशततमोऽध्यायः ।।

भीमार्जुनाभ्यां द्रौपद्याः भिक्षेत्यावेदने कुन्त्या पञ्चानां सह भोजनानुज्ञा ॥ १ ॥ पश्चात् द्रौपदीदर्शनेन चिन्तान्वितायां कुन्त्यां युधिष्ठिरार्जुनयोस्संवादः ॥ २ ॥ द्वैपायनवचस्स्मरणेन सर्वेषां द्रौपदी भार्येति युधिष्ठिरनिश्चयः ॥ ३ ॥ जनमेजयेन कृष्णस्य कार्मुकानारोपणे कारणप्रश्ने पाण्डवार्थमिति वैशम्पायनस्योत्तरम् ॥४॥ कुलालशालां प्रति श्रीकृष्णस्यागमनम् । ५ ॥

वैशम्पायनः—

गत्वा ततो भार्गवपर्णशालां
पार्थौ पृथां प्रेक्ष्य महानुभावौ ।
तां याज्ञसेनीं परमप्रतीतौ
भिक्षेत्यथावेदयतां नराग्र्यौ ॥ १

[1]कुटीगता सा त्वनवेक्ष्य पुत्रौ
प्रोवाच भुङ्क्तेति समेत्य सर्वे ।
पश्चात्तु कुन्ती प्रसमीक्ष्य कन्यां
कष्टं मया भाषितमित्युवाच ॥ २

साऽधर्मभीता हि विलज्जमानां
तां याज्ञसेनीं परमप्रतीताम् ।

1. क-ग—प्रागेव संप्रविष्टेषु भवनं भ्रातृषु त्रिषु ।
अम्ब भिक्षेयमानीतेत्याहतुर्भीमफल्गुनौ ॥ [अधिकः पाठः]

पाणौ गृहीत्वोपजगाम कुन्ती
युधिष्ठिरं वाक्यमुवाच चेदम् ॥ ३

कुन्ती—

इयं च कन्या द्रुपदस्य राज्ञस्-
तवानुजाभ्यां मयि सन्निसृष्टा ।
यथान्वितं पुत्र मयाऽपि चोक्तं
समेत्य भुञ्जीध्वमिति प्रमादात् ॥ ४

मया कथं नानृतमुक्तमद्य
भवेत् कुरूणामृषभ ब्रवीहि ।
पञ्चालराजस्य सुतामधर्मो
न चोपवर्तेत न भूतपूर्वः ॥ ५

वैशम्पायनः—

ततो मुहूर्तं त्वनुचिन्त्य राजा
युधिष्ठिरो भ्रातरमुत्तमौजाः ।
कुन्तीं समाश्वास्य कुरुप्रवीरो
धनञ्जयं वाक्यमिदं बभाषे ॥ ६

युधिष्ठिरः—

त्वया जिता पाण्डव याज्ञसेनी
[1]त्वयैव तोषिष्यति राजपुत्री ।

---

1. ख—त्वया च शोभिष्यति शोभमाना ।

प्रज्वाल्यतां हूयतां चैव वह्निर्
　　गृहाण पाणिं विधिवत्त्वमस्याः ॥ ७

अर्जुनः—

मा मां नरेन्द्र त्वमधर्मभाजं
　　कृथा न धर्मोऽयमीप्सितोऽन्यैः ।
भवान्निवेश्यः प्रथमं ततोऽयं
　　भीमो महाबाहुरचिन्त्यकर्मा ॥ ८

अहं ततो नकुलोऽनन्तरं मे
　　माद्रीसुतस्सहदेवो जघन्यः ।
वृकोदरोऽहं च यमौ च राज-
　　न्नियं च कन्या भवतश्च सर्वे ॥ ९

एवं गते यत् करणीयमत्र
　　धर्म्यं यशस्यं कुरु तद्विचिन्त्य ।
पाञ्चालराजस्य हि यत् प्रियं स्यात्
　　तद्ब्रूहि सर्वे स्म वशे स्थितास्ते ॥ १०

वैशम्पायनः—

दृष्ट्वा ते तत्र तिष्ठन्तीं सर्वे कृष्णां यशस्विनीम् ।
संप्रेक्ष्यान्योन्यमासीना हृदयैस्तामधारयन् ॥ ११

तेषां च द्रौपदीं दृष्ट्वा सर्वेषाममितौजसाम् ।
संप्रमथ्येन्द्रियग्रामं प्रादुरासीन्मनोभवः ॥ १२

काम्यं हि रूपं पाञ्चाल्या विधात्रा विहितं स्वयम् ।
बभूवाधिकमन्याभ्यस् सर्वभूतमनोहरम् ॥ १३

ते मन्यमानाः कौन्तेयास् सर्वभूतमनोहराम् ।
चक्रमुस्सत्त्वसंपन्ना विधात्रा च प्रचोदिताः ॥ १४

तेषामाकारतत्त्वज्ञः कुन्तीपुत्रो युधिष्ठिरः ।
द्वैपायनवचः कृत्स्नं सस्मार मनुजर्षभः ॥ १५

अब्रवीत् सहितान् भ्रातॄन् मिथो भेदभयान्नृपः ।
सर्वेषां द्रौपदी भार्या सामान्यं नो भविष्यति ॥ १६

प्रत्यगृह्णंस्ततो वाणीं भ्रातुर्ज्येष्ठस्य पाण्डवाः ।
अन्योन्यं चानुपश्यन्तो धर्मार्थे काममीप्सितम्* ॥ १७

जनमेजयः—

सताऽपि शक्तेन च केशवेन
सज्यं धनुस्तन्न कृतं किमर्थम् ।
विद्धं च लक्ष्यं न च कस्य हेतोर्-
आचक्ष्व तन्मे द्विपदां वरिष्ठ ॥ १८

वैशम्पायनः—

शक्तेन कृष्णेन च कार्मुकं त-
मारोपितं ज्ञातुकामेन पार्थान् ।

* अ-ख-कोशयोः अत्रैवाध्यायसमाप्तिर्दृश्यते ।

परिश्रवादेव बभूव लोके
　　जीवन्ति पार्था इति निश्चयोऽस्य ॥ १९

अन्यानशक्तान्नृपतीन् समीक्ष्य
　　स्वयंवरे कार्मुकेणोत्तमेन ।
धनञ्जयस्तु धनुरेकवीरस्
　　सज्यं करोतीत्यभिवीक्ष्य कृष्णः ॥ २०

इति स्वयं वासुदेवो विचिन्त्य
　　पार्थान् विचिन्वन् विविधैरुपायैः ।
न तद्धनुस्सज्यमियेष कर्तुं
　　कृष्णस्य वै प्राणसमो हि पार्थः* ॥ २१

भ्रातुर्वचस्तत् प्रसमीक्ष्य सर्वे
　　ज्येष्ठस्य पाण्डोस्तनयास्तदानीम् ।
तमेवार्थं ध्यायमाना मनोभिर्
　　आसांचक्रुरथ तत्रामितौजसः ॥ २२

वृष्णिप्रवीरः कुरुपुङ्गवांस्तान्
　　आशंसमानस्सहरौहिणेयः ।
जगाम तां भार्गवकर्मशालां
　　यत्रासते ते पुरुषप्रवीराः ॥ २३

* क-ग-कोशयोः अत्रैवाध्यायसमाप्तिर्दृश्यते

तत्रोपविष्टं पृथुदीर्घबाहुं
ददर्श कृष्णस्सहरौहिणेयः ।
अजातशत्रुं परिवार्य तांश्च
उपोपविष्टाञ्ज्वलनप्रकाशान् ॥ २४

तांश्चाऽब्रवीद्वासुदेवोऽभिगम्य
कुन्तीसुतान् धर्मभृतां वरिष्ठान् ।
कृष्णोऽहमस्मीति निपीड्य पादौ
युधिष्ठिरस्याजमीढस्य तस्थौ ॥ २५

तथैव तस्याप्यनु रौहिणेयस्
ते चापि हृष्टाः कुरवोऽभ्यनन्दन् ।
पितृष्वसुश्चैव यदुप्रवीरा-
वगृह्णीतां भारतमुख्य पादौ ॥ २६

अजातशत्रुस्तु कुरुप्रवीरः
पप्रच्छ कृष्णं कुशलं निवेद्य ।
कथं वयं वासुदेव त्वयेह
गूढा वसन्तो विदितास्स्म सर्वे ॥ २७

तमब्रवीद्वासुदेवः प्रहस्य
गूढोऽप्यग्निर्ज्ञायत एव राजन् ।

तं विक्रमं पाण्डवेयानतीत्य
कोऽन्यः कर्ता विद्यते मानुषेषु ॥ २८

दिष्ट्या तस्मात् पावकाच्चापि मुक्ता
यूयं सर्वे पाण्डवाश्शत्रुसाहाः ।
दिष्ट्या पापो धृतराष्ट्रस्य पुत्रस्
सामात्यो वै न सकामोऽभविष्यत् ॥ २९

[1]भद्रं वोऽस्तु निहितं यद्गुहायां
विवृद्धं वै ज्वलनमिवेध्यमानम् ।
मा वो विदुः पार्थिवाः केचनेह
यास्यावो वां शिबिरायैव तावत् ॥ ३०

सोऽनुज्ञातः पाण्डवेनाव्ययश्रीः
प्रायाच्छीघ्रं बलदेवेन सार्धम् ।
तत्रैवासन् पाण्डवाश्चाजघन्या
मात्रा सार्धं कृष्णया चापि वीराः ॥ ३१

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्याम्
आदिपर्वणि पञ्चाशीत्यधिकशततमोऽध्यायः ॥ १८५ ॥
॥ १२ ॥ स्वयंवरपर्वणि पञ्चमोऽध्यायः ॥ ५ ॥
[अस्मिन्नध्याये ३१ श्लोकाः]

1. क-ग-घ—दिष्ट्या कृष्णा वीर्यमाश्रित्य लब्धा
दिष्ट्या भूयश्शाश्वदेवं कृतार्थाः ॥ [अधिकः पाठः]

## ॥ षडशीत्यधिकशततमोऽध्यायः ॥

पाण्डवावासे धृष्टद्युम्नस्य निलीयावस्थानम् ॥ १ ॥ भीमाद्यानीतस्य भैक्षस्य कुन्त्याज्ञया द्रौपद्या परिवेषणम् ॥ २ ॥ सर्वं पाण्डववृत्तान्तं ज्ञात्वा धृष्टद्युम्नस्य प्रतिनिवर्तनम् ॥ ३ ॥

वैशम्पायनः—

धृष्टद्युम्नस्तु पाञ्चाल्याः पृष्ठतः कुरुनन्दनौ ।
अन्वगच्छत्तदा यान्तौ भार्गवस्य निवेशनम् ॥ १

सोऽज्ञायमानः पुरुषान् अवधार्य समन्ततः ।
स्वयमारान्निविष्टोऽभूद् भार्गवस्य निवेशनात् ॥ २

जिज्ञासमानस्तु तदा सन्दिदेश नृपात्मजः ।
पुरुषान् द्रौपदीहेतोर् जानीध्वं के त्विमे द्विजाः ॥ ३

सायं च भीमस्तु रिपुप्रमाथी
जिष्णुर्यमौ चापि महानुभावौ ।
भैक्षं चरित्वा तु युधिष्ठिराय
निवेदयाञ्चक्रुरदीनसत्वाः ॥ ४

ततस्तु कुन्ती द्रुपदात्मजां ताम्
उवाच काले वचनं वदान्या ।
भक्ताग्र्यमादाय कुरुष्व भद्रे
बलिं च विप्राय च देहि भिक्षाम् ॥ ५

ये चान्नमिच्छन्ति हि देहि तेभ्यः
परिश्रिता ये परितो मनुष्याः ।
ततश्च शेषं प्रविभज्य शीघ्रम्
अर्धं चतुर्धा मम चात्मनश्च ॥ ६

अर्धं तु भीमाय च देहि भद्रे
य एष सिंहर्षभतुल्यरूपः ।
श्यामो युवा संहननोपपन्न
एषो हि वीरो बहुभुक् सदैव ॥ ७

सा हृष्टरूपैव च राजपुत्री
तस्या वचस्साध्वविशङ्कमाना ।
यथा तयोक्तं वचनं चकार
ते चापि सर्वेऽभ्यवजह्रुरन्नम् ॥ ८

कुशैस्तु भूमौ शयनं चकार
माद्रीसुतस्सहदेवस्तरस्वी ।
अथात्मनीनान्यजिनानि सर्वे
संस्तीर्य वीरास्सुषुपुर्धरण्याम् ॥ ९

अगस्त्यकान्तामभितो दिशं तु
शिरांसि तेषां कुरुसत्तमानाम् ।
कुन्ती पुरस्तात्तु बभूव तेषां
कृष्णा तिरश्चैव बभूव पत्नी ॥ १०

अशेत भूमौ सह पाण्डुपुत्रैः
पादोपधानेव कृता कुशेषु ।
न तत्र तस्या मन आप दुःखं
न चावमेने कुरुपुङ्गवांस्तान् ॥ ११
ते तत्र शूराः कथयांबभूवुः
कथा विचित्राः पृतनाधिकाराः ।
अस्त्राणि दिव्यानि रथांश्च नागान्
तथा गदाश्चापि परश्वथांश्च ॥ १२
तेषां कथास्ताः परिकीर्त्यमानाः
पाञ्चालराजस्य सुतस्तदानीम् ।
शुश्राव कृष्णां च तथाऽभिपन्नां
ते चापि सर्वे ददृशुर्मनुष्याः ॥ १३
धृष्टद्युम्नो राजपुत्रस्तु सर्वं
वृत्तं तेषां कथितं चैव रात्रौ ।
सर्वं राज्ञे द्रुपदायाखिलेन
निवेदयिष्यंस्त्वरितो जगाम ॥ १४
पाञ्चालराजस्तु विषण्णरूपस्-
[1]तान् पाण्डवानप्रतिविन्दमानः ।
धृष्टद्युम्नं पर्यपृच्छन्महात्मा
क्व सा गता केन हृता च कृष्णा ॥ १५

1. ब—सदा स्मरन् द्रौपदी किं कृतेति ।

कच्चिन्न शूद्रेण न हीनजेन
　वैश्येन वा करणेनोपपन्ना ।
कच्चित् पदं मूर्ध्नि न मे विषक्तं
　कच्चिच्च बाला पतिता न श्मशाने ॥ १६

कच्चित् सुवर्णप्रतिमो मनुष्य
　उद्रिक्तवर्णोऽप्युत वेह कच्चित् ।
कच्चिन्न वामो मम मूर्ध्नि पादः
　कृष्णाभिमर्शेन कृतोऽद्य पुत्र ॥ १७

कच्चिच्छयिष्ये परमप्रतीतस्
　तां युज्य पार्थेन नरर्षभेण ।
वदस्व तत्त्वेन महानुभाव
　कोऽसौ विजेता दुहितुर्ममाद्य ॥ १८

वैचित्रवीर्यस्य तु कच्चिदद्य
　कुरुप्रवीरस्य चरन्ति पुत्राः ।
[1]कच्चिच्च पार्थेन यवीयसाऽद्य
　धनुर्गृहीतं निहतं च लक्ष्यम् ॥ १९

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्याम्
आदिपर्वणि षडशीत्यधिकशततमोऽध्यायः ॥ १८६ ॥
॥ १२ ॥ स्वयंवरपर्वणि षष्ठोऽध्यायः ॥ ६ ॥

[स्वयंवरपर्व समाप्तम्]

[अस्मिन्नध्याये १९ श्लोकाः]

---

1. क-ग-घ — कच्चित्तु मे यज्ञफलेन पुत्र
　भाग्येन तस्याश्च कुलं च वामे ॥　[अधिकः पाठः]

## ॥ सप्ताशीत्यधिकशततमोऽध्यायः ॥

(अथ वैवाहिकपर्व)

धृष्टद्युम्नवार्तां श्रुतवता द्रुपदेन तत्त्वविवित्सया पाण्डवान् प्रति पुरोहितप्रेषणम् ॥ १ ॥ कुन्त्या सह पाण्डवानां द्रुपदगृहगमनम् ॥ २ ॥ द्रुपदेन परीक्षणार्थं अनेकविधवस्तूपहरणम् ॥ ३ ॥ द्रौपद्या सह कुन्त्या अन्तःपुरप्रवेशः ॥ ४ ॥ पाण्डवानां भोजनानन्तरं साङ्ग्रामिकवस्तुपूर्णप्रदेशे प्रवेशः ॥ ५ ॥

वैशम्पायनः—

ततस्तथोक्तः परिहृष्टरूपः
पित्रे शशंसाथ नरेन्द्रपुत्रः ।
धृष्टद्युम्नस्सोमकानां प्रबर्हो
वृत्तं यथा येन हृता च कृष्णा ॥ १

धृष्टद्युम्नः—

योऽसौ युवा स्वायतलोहिताक्षः
कृष्णाजिनी रूपमतीव बिभ्रत् ।
यः कार्मुकाग्र्यं कृतवानधिज्यं
लक्ष्यं च तत् पातितवान् पृथिव्याम् ॥ २

आसज्जमानश्च गतस्तरस्वी
द्विजातिभिस्तैरभिपूज्यमानः ।

विक्रम्य वज्रीव दितेस्सुतेषु
सर्वैश्च देवैर्ऋषिभिश्च दृष्टः ॥ ३
श्यामो युवा वारण[1]मन्दगामी
कृत्वा महत् कर्म सुदुष्करं तत् ।
कृष्णाऽपि कृष्णाजिनिनं जगाम
नागं यथा नागवधूः प्रहृष्टा ॥ ४
यस्सूतपुत्रेण चकार युद्धं
शक्रेऽर्जुनं तं त्रिदशेशवीर्यम् ।
अमृष्यमाणेषु नराधिपेषु
क्रुद्धेषु तं तत्र समापतत्सु ॥ ५
ततो वटुः पार्थिवसङ्घमध्ये
प्रवृद्धमारुज्य महीप्ररोहम् ।
प्राकालयत्तत्र स पार्थिवान् रणे
भीमोऽन्तकः प्राणभृतो यथैव ॥ ६
तौ पार्थिवानां मिषतां नरेन्द्र
कृष्णामुपादाय गतौ नराग्र्यौ ।
[2]विभ्राजमानाविव चन्द्रसूर्यौ
बाह्यां पुराद्भार्गवकर्मशालाम् ॥ ७

1. क-ख-ग-घ—मत्त
2. क-ग—विक्षोभ्य विद्राव्य च पार्थिवांस्तान्
स्वतेजसा दुष्प्रतिवीक्ष्यरूपौ ॥ [अधिकः पाठः]

तत्रोपविष्टाऽर्चिरिवानलस्य
तेषां जनित्रीति मम प्रतर्कः ।
तथाविधैरेव नरप्रवीरै-
रुपोपविष्टा त्रिभिरग्निकल्पैः ॥ ८

तस्यास्ततस्तावभिवाद्य पादा-
वुपोपविष्टौ नरलोकवीरौ ।
स्थितौ च तत्रैव निवेद्य कृष्णां
भिक्षाप्रचाराय गता नराग्र्याः ॥ ९

तेषां तु भैक्ष्यं प्रतिगृह्य कृष्णा
कृत्वा बलिं ब्राह्मणानर्चयित्वा ।
तां चैव वृद्धां परिवेष्य तांश्च
नरप्रवीरान् स्वयमप्यभुङ्क्त ॥ १०

सुप्तास्तु ते पार्थिवास्सर्व एव
कृष्णा च तेषां चरणोपधानम् ।
आसीत् पृथिव्यां शयनं च तेषां
दर्भाजिनाग्र्यास्तरणोपपन्नम् ॥ ११

ते नर्दमाना इव कालमेघाः
कथा विचित्राः कथयांबभूवुः ।
न वैश्यशूद्रौपयिकीः कथास्ता
न च द्विजार्हाः कथयन्ति वीराः ॥ १२

निस्संशयं क्षत्रियपुङ्गवास्ते
　यथा हि युद्धं कथयन्ति राजन् ।
आशा हि नो व्यक्तमियं समृद्धा
　मुक्तान् हि पार्थाञ्शृणुमोऽग्निदाहात् ॥ १३

यथा हि लक्ष्यं निहतं धनुश्च
　सज्यं कृतं तेन तथा प्रगृह्य ।
यथा हि जल्पन्ति परस्परं ते
　छन्नं वसन्तो विचरन्ति पार्थाः । १४

वैशम्पायनः—

ततस्स राजा द्रुपदः प्रहृष्टः
　पुरोहितं प्रेषयामास तत्र ।
विद्याम युष्मानिति भाषमाणो
　महात्मनः पाण्डुसुतांश्च कच्चित् ॥ १५

गृहीतवाक्यो नृपतेः पुरोधा
　गत्वा प्रशंसामभिधाय तेषाम् ।
वाक्यं यथावन्नृपतेस्समग्रम्
　उवाच तेभ्यस्समनुक्रमेण ॥ १६

पुरोधाः—

विज्ञातुमिच्छत्यवनीश्वरो वः
　पाञ्चालराजो द्रुपदो वरार्हान् ।

लक्ष्यस्य वेद्धारमिमं हि दृष्ट्वा
हर्षस्य नान्तं परिपश्यते सः ॥ १७

आचक्षध्वं जातिकुलानुपूर्वे
शिरस्सु पादान् द्विषतां कुरुध्वम् ।
प्रह्लादयध्वं हृदयं ममेदं
पाञ्चालराजस्य सहात्मजस्य ॥ १८

पाण्डुर्हि राजा द्रुपदस्य राज्ञः
प्रियस्सखा चात्मसमो बभूव ।
तस्यैष कामो दुहिता ममेयं
स्नुषा यदि स्यादिति कौरवस्य ॥ १९

अयं च कामो द्रुपदस्य राज्ञो
हृदि स्थितो नित्यमनिन्दिताङ्गाः ।
यदर्जुनो मे पृथुदीर्घबाहुर्
धर्मेण विन्देत सुतां ममेति ॥ २०

वैशम्पायनः—

तथोक्तवाक्यं तु पुरोहितं तं
स्थितं विधिज्ञं समुदीक्ष्य राजा ।
समीपस्थं भीममिदं शशास
प्रदीयतां पाद्यमर्घ्यं तथाऽस्मै ॥ २१

मान्यः पुरोधा द्रुपदस्य राज्ञस्
तस्मै प्रयोज्याऽभ्यधिका च पूजा ॥ २१॥
भीमस्ततस्तत् कृतवान् नरेन्द्र
तां चैव पूजां प्रतिगृह्य तत्र ।
सुखोपविष्टं तु पुरोहितं तं
युधिष्ठिरो ब्राह्मणमित्युवाच ॥ २२॥

युधिष्ठिरः—
पाञ्चालराजेन सुता निसृष्टा
स्वधर्मदृष्टेन यथा निकामम् ।
प्रदिष्टशुल्का द्रुपदेन राज्ञा
सा तेन वीरेण तथा गृहीता ॥ २३॥
न तत्र वर्णेषु कृता विवक्षा
न चापि [1]शीले न कुले न गोत्रैः ।
कृतेन सज्येन हि कार्मुकेण
विद्धेन लक्ष्येण च सन्निकृष्टा ॥ २४॥
सेयं तथाऽनेन महात्मनेह
कृष्णा जिता पार्थिवसङ्घमध्ये ।
नैवं गते सौमकिरद्य राजा
सन्तापमर्हत्यसुखेन कर्तुम् ॥ २५॥

1. अ-ख-ग-घ—शिल्पे

कामश्च योऽसौ द्रुपदस्य राज्ञस्
स चापि संपत्स्यति पार्थिवस्य ।
नाप्राप्तरूपस्य नरेन्द्रकन्याम्
इमामहं ब्राह्मण साधु मन्ये ॥ २६॥

न तद्धनुर्मन्दबलेन शक्यं
मौर्व्या समायोजयितुं तथा हि ।
न चाकृतास्त्रेण न हीनजेन
लक्ष्यं तथा पातयितुं च शक्यम् ॥ २७॥

तस्मान्न तापं दुहितुर्निमित्तं
पाञ्चालराजोऽर्हति कर्तुमद्य ।
न चापि तत्पातनमन्यथेह
कर्तुं विषह्यं भुवि मानवेन ॥ २८॥

वैशम्पायनः—

एवं ब्रुवत्येव युधिष्ठिरे तु
पाञ्चालराजस्य समीपतोऽन्यः ।
तत्राजगमाशु नरो द्वितीयो
निवेदयिष्यन्निह सिद्धमन्नम्* ॥ २९॥

दूतः—

अन्यार्थमन्नं द्रुपदेन राज्ञा
विवाहहेतोरुपसंस्कृतं च ।

---

* अ-क-ख-ग—कोशेषु अत्रैवाध्यायसमाप्तिर्दृश्यते ।

तदाप्नुवध्वं कृतसर्वकार्याः
कृष्णा तु तत्रैतु चिरं न कार्यम् ॥ ३०॥
इमे रथाः काञ्चनपद्मचित्रास्
सदश्वयुक्ता वसुधाधिपार्हाः ।
एतान् समारुह्य [1]समेत सर्वे
पाञ्चालराजस्य निवेशनं तत् ॥ ३१॥

वैशम्पायनः—

ततः प्रयाताः कुरुपुङ्गवास्ते
पुरोहितं तं प्रथमं प्रयाप्य ।
आस्थाय यानानि महान्ति तानि
कुन्ती च कृष्णा च सह प्रयाते ॥ ३२॥
स वै तथोक्तस्तु युधिष्ठिरेण
पाञ्चालराजस्य पुरोहिताग्र्यः ।
सर्वं यथोक्तं कुरुनन्दनेन
निवेदयामास नृपाय गत्वा ॥ ३३॥
श्रुत्वा तु वाक्यानि पुरोहितस्य
यान्युक्तवान् भारत धर्मराजः ।
जिज्ञासयैवाथ कुरूत्तमानां
द्रव्याण्यनेकान्युपसञ्जहार ॥ ३४॥

---

1. ब—परीत

फलानि माल्यान्यथ संस्कृतानि
चर्माणि वर्माणि तथाऽऽसनानि ।
गाश्चैव राजन्नथ चैव रज्जू-
रत्नानि धान्यानि कृषेर्निमित्तम् ॥ ३५॥

अन्येषु शिल्पेष्वपि यान्यपि स्युस्
सर्वाणि कृत्यान्यखिलेन तत्र ।
क्रीडानिमित्तान्यपि यानि तानि
सर्वाणि तत्रोपजहार राजा ॥ ३६॥

अस्त्राणि शस्त्राणि च भानुमन्ति
खड्गा महान्तोऽथ रथाश्च चित्राः ।
धनूंषि चोग्राणि शराश्च मुख्याश्
शक्त्यृष्टयः काञ्चनभूषिताश्च ॥ ३७॥

प्रासान् भुसुण्डीश्च परश्वथांश्च
सांग्रामिकांश्चैव तथाऽपि चान्यान् ।
शय्यासनान्युत्तमसंस्कृतानि
तथैव राजन् विविधानि तत्र ॥ ३८॥

कुन्ती तु कृष्णां परिगृह्य साध्वीम्
अन्तःपुरं द्रुपदस्याविवेश ।
राजस्त्रियः कौरवराजपुत्रीं
प्रत्यर्चयाञ्चक्रुरदीनसत्वाम् ॥ ३९॥

तान् सिंहविक्रान्तगतीनुदीक्ष्य
महर्षभाक्षानजिनोत्तरीयान् ।
व्यूढान्तरांसान् भुजगेन्द्रभोग-
प्रलम्बबाहून् पुरुषप्रवीरान् ॥ ४०॥

राजा च राज्ञस्सचिवाश्च सर्वे
पुत्राश्च राज्ञस्सुहृदस्तथैव ।
प्रेष्याश्च सर्वे निखिलेन राजन्
हर्षं समापेतुरतीव तत्र ॥ ४१॥

ते तत्र वीराः परमासनेषु
सपादपीठेष्वविशङ्कमानाः ।
यथानुपूर्व्याद्विविशुर्नराग्र्यास्
तथा महार्हेषु न विस्मयन्तः ॥ ४२॥

उच्चावचं पार्थिवभोजनीयं
पात्रेषु जाम्बूनदराजतेषु ।
दासाश्च दास्यश्च सुमृष्टवेषाः
भोज्यं परं चाभ्युपजह्रुरन्नम् ॥ ४३॥

ते तत्र भुक्त्वा पुरुषप्रवीरा
यथा सुकामं सुभृशं प्रतीताः ।
उत्क्रम्य सर्वाणि वसूनि तत्र
सांग्रामिकाण्याविविशुर्नृवीराः ॥ ४४॥

तल्लक्षयित्वा द्रुपदस्य पुत्रा
राजा च सर्वे सह मन्त्रिमुख्याः ।
सम्मन्त्रयामासुरतीव हृष्टाः
कुन्तीसुतान् पार्थिवपुत्रपौत्रान् ॥ ४५॥

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्याम्
आदिपर्वणि सप्ताशीत्यधिकशततमोऽध्यायः ॥ १८७ ॥
॥ १३ ॥ वैवाहिकपर्वणि प्रथमोऽध्यायः ॥ १ ॥
[अस्मिन्नध्याये ४५॥ श्लोकाः ।]

---

## ॥ अष्टाशीत्यधिकशततमोऽध्यायः ॥

द्रुपदप्रश्नानन्तरं युधिष्ठिरेण स्वेषां पाण्डवत्वकथनम् ॥ १ ॥ द्रौपद्याः पञ्चपत्नीत्वे द्रुपदस्य विवादः ॥२॥ व्यासागमनम् ॥३॥ एकस्याः बहुभार्यात्वे शङ्कमानान् द्रुपदादीन् प्रति व्यासेन स्वस्वाभिप्रायकथनानुज्ञा ॥४॥ द्रुपदादिभिः स्वस्वमते कथिते व्यासेनास्य विवाहस्य धर्म्यत्वकथनम् ॥५॥

---

वैशम्पायनः—

तत आहूय पाञ्चालो राजपुत्रं युधिष्ठिरम् ।
परिग्रहेण ब्राह्मेण परिगृह्य महाद्युतिः ॥ १
पर्यपृच्छददीनात्मा कुन्तीपुत्रं युधिष्ठिरम् ॥ १॥

द्रुपदः—

कथं जानीम भवतः क्षत्रियान् ब्राह्मणानुत ।

वैश्यान् वा गुणसम्पन्नान् उत वा शूद्रयोनिजान् ॥ २॥

मायामास्थाय वा सिद्धांश् चरतस्सर्वतोदिशम् ।
कृष्णाहेतोरनुप्राप्तान् दिवस्संदर्शनार्थिनः ॥ ३॥

ब्रवीतु नो भवान् सत्यं सन्देहो ह्यस्ति नो महान् ॥ ४

अपि नस्संशयस्यान्ते मनस्तुष्टिरिहाविशेत् ।
अपि नो भागधेयानि शुभानि स्युः परन्तप ॥ ५

[1]कामयेयं ब्रूहि सत्यं सत्यं राजसु शोभते ।
इष्टापूर्तेन च तथा वक्तव्यं नानृतं भवेत् ॥ ६

श्रुत्वा ह्यमरसङ्काश तव वाक्यमरिन्दम ।
ध्रुवं विवाहकरणम् आस्थास्यामि विधानतः ॥ ७

युधिष्ठिरः—

मा राजन् विमना भूस्त्वं पाञ्चाल प्रीतिरस्तु ते ।
ईप्सितस्ते ध्रुवः कामस् संवृत्तोऽयमसंशयम् ॥ ८

वयं हि क्षत्रिया राजन् पाण्डोः पुत्रा महात्मनः ।
ज्येष्ठं मां विद्धि कौन्तेयं भीमसेनार्जुनाविमौ ॥ ९

याभ्यां तव सुता राजन्निर्जिता राजसंसदि ॥ ९॥
यमौ तौ तत्र राजेन्द्र यत्र कृष्णा प्रतिष्ठिता ॥ १०
व्येतु ते मानसं दुःखं क्षत्रियास्स्मो नराधिप ॥ १०॥

---

1. क-ख-ग—कामयानस्य ब्रूहि त्वं; घ—कामये ब्रूहि सत्यं ते

पद्मिनीव सुतेयं ते ह्रदादन्यह्रदं गता ॥ ११

इति तथ्यं महाराज सर्वमेतद्ब्रवीमि ते ।
भवान् हि गुरुरस्माकं परमं च परायणम् ॥ १२

वैशम्पायनः—

ततस्स द्रुपदो राजा हर्षव्याकुललोचनः ।
प्रतिवक्तुं न शक्तोऽभूद् धर्मसूनुं तदाऽनघम् ॥ १३

यत्नेन तु स तं हर्षं सन्निगृह्य परन्तपः ।
अनुरूपं ततो राजा प्रत्युवाच युधिष्ठिरम् ॥ १४

[1]पर्यपृच्छददीनात्मा यथा ते प्रद्रुताः पुरा ।
तथाऽसौ सर्वमाचष्ट आनुपूर्व्येण पाण्डवः ॥ १५

तच्छ्रुत्वा द्रुपदो राजा कुन्तीपुत्रस्य भाषितम् ।
विगर्हयामास तदा धृतराष्ट्रं नरेश्वरम् ॥ १६

आश्वासयामास तदा कुन्तीपुत्रं युधिष्ठिरम् ।
प्रतिजज्ञे स राज्याय द्रुपदो वदतां वरः ॥ १७

ततः कुन्ती च कृष्णा च भीमसेनार्जुनावपि ।
यमौ च राज्ञा संदिष्टा विविशुर्भवनं महत् ॥ १८

तत्र ते न्यवसन् राजन् यज्ञसेनेन पूजिताः ।
पर्याश्वस्तांस्तदा राजा सह पुत्रैरुवाच तान् ॥ १९

1. ख—पर्यपृच्छत दीनात्मा

द्रुपदः—

गृह्णातु विधिवत् पाणिम् अद्यैव कुरुनन्दनः ।

पुण्येऽहनि महाबाहुर् अर्जुनः कुरुतां क्षणम् ॥ २०

वैशम्पायनः—

ततस्तमब्रवीद्राजा धर्मपुत्रो युधिष्ठिरः ॥ २०॥

ममापि दारसंबन्धः कार्यस्तावद्विशांपते ।

तस्मात् पूर्वं मया कार्यं तद्भवाननुमन्यताम् ॥ २१॥

द्रुपदः—

भवान् वा विधिवत् पाणिं गृह्णातु दुहितुर्मम ।

यस्य वा मन्यसे वीर तस्य कृष्णामुपादिश ॥ २२॥

युधिष्ठिरः—

सर्वेषां द्रौपदी राजन् महिषी नो भविष्यति ।

एवं हि व्याहृतं पूर्वं मम मात्रा विशांपते ॥ २३॥

अहं चाप्यनिविष्टो वै भीमसेनश्च पाण्डवः ।

पार्थेन विजिता चैषा रत्नभूता च ते सुता ॥ २४॥

एष नस्समयो राजन् रत्नस्य सह भोजनम् ।

न चैनं हातुमिच्छामस् समयं राजसत्तम ॥ २५॥

अक्रमेण निवेशे च धर्मलोपो महान् भवेत ॥ २६

[1]सर्वेषां धर्मतः कृष्णा महिषी नो भविष्यति ।
आनुपूर्व्येण गृह्णन्तु सर्वेऽग्नौ ज्वलिते करम् ॥ २७

द्रुपदः—
एकस्य बह्व्यो विहिता महिष्यः कुरुनन्दन ।
नैकस्या बहवः पुंसो विधीयन्ते कदाचन ॥ २८
सोऽयं न लोके वेदे वा जातु धर्मः प्रशस्यते ॥ २८॥
लोकवेदविरुद्धं च नाधर्मं धार्मिकश्शुचिः ।
कर्तुमर्हसि कौन्तेय कस्मात्ते बुद्धिरीदृशी ॥ २९॥

युधिष्ठिरः—
[2]सूक्ष्मो धर्मो महाराज नास्य विद्मो गतिं वयम् ।
पूर्वेषामानुपूर्व्येण यातं वर्त्मानुयामहे ॥ ३०॥
न मे वागनृतं प्राह नाधर्मे धीयते मतिः ।
एवं चैव वदत्यम्बा ममापि च मनोगतम् ॥ ३१॥
आश्रमेषु विनिर्दिष्टाद् व्यासादेतन्मया श्रुतम् ।
[3]धर्म एष ध्रुवो राजन् चरैनमविचारयन् ॥ ३२॥
अत्र ते संशयो मा भूत् कथमित्यवनीश्वर ॥ ३३

द्रुपदः—
त्वं च कुन्ती च कौन्तेय धृष्टद्युम्नश्च मे सुतः ।

---

1. अ-कोशे—निर्जिता चैव पार्थेन रत्नभूता च ते सुता। [अधिकः पाठः]
2. अ-कोशे—लोकधर्मविरुद्धोऽयं धर्मो धर्मभृतां वर। [अधिकः पाठः]
3. अ-क-ख-ग—कोशेषु—धर्मवित्त्वाद्ध्रुवो राजन् विचार्यैव करोम्यहम्॥
मा च तत्र विशङ्का भूत् ह्यधर्मे मतिर्मम ॥

कथयन्त्विह कर्तव्यं श्वः काल्ये करवामहे ॥ ३४

वैशम्पायनः—

ते समेत्य ततस्सर्वे कथयन्ति स्म भारत ।
अथ द्वैपायनो राजन्नाजगाम [1]विचिन्तितः* ॥ ३५

वैशम्पायनः—

ततस्ते पाण्डवास्सर्वे पाञ्चाल्यश्च महारथः ।
प्रत्युत्थाय महात्मानं कृष्णं दृष्ट्वाऽभ्यपूजयन् ॥ ३६
प्रतिनन्द्य स तान् सर्वान् पृष्ट्वा च कुशलं ततः ।
आसने काञ्चने शुभ्रे निषसाद महामुनिः ॥ ३७
अनुज्ञातास्तु ते सर्वे कृष्णेनामिततेजसा ।
आसनेषु महार्हेषु निषेदुर्द्विपदां वराः ॥ ३८
ततो मुहूर्तं मधुरां वाचमुच्चार्य पार्षतः ।
पप्रच्छ तं महात्मानं द्रौपद्यर्थे महामुनिम् ॥ ३९

द्रुपदः—

कथमेका बहूनां स्यान्न च स्याद्धर्मसंकरः ।
एतन्नो भगवान् सर्वं प्रब्रवीतु यथातथम् ॥ ४०

व्यासः—

अस्मिन् धर्मे विप्रलब्धे लोकवेदविरोधिते ।
यस्य यस्य मतं यद्यच्छ्रोतुमिच्छामि तस्य तत् ॥ ४१

---

1. ख-विचिन्त्य तत्। घ—यदृच्छया।
* अ-क-ख-ग—कोशेषु अत्रैवाध्यायसमाप्तिर्दृश्यते।

द्रुपदः—

अधर्मोऽयं मम मतो विरुद्धो लोकवेदयोः ।
न ह्येका विद्यते पत्नी बहूनां द्विजसत्तम ॥ ४२

न चाप्याचरितः पूर्वैर् अयं धर्मो महात्मभिः ।
न चाधर्मोऽप्यनेकस्थश् चरितव्यस्सनातनः ॥ ४३

अतो नाहं करोम्येनं व्यवसायं सुतां प्रति ।
धर्मसन्देहसन्दिग्धं प्रतिभातीह मामिदम् ॥ ४४

धृष्टद्युम्नः—

यवीयसः कथं भार्यां ज्येष्ठो भ्राता द्विजर्षभ ।
ब्रह्मन् समभिवर्तेत सद्वृत्तस्संस्तपोधन ॥ ४५

न तु धर्मस्य सूक्ष्मत्वाद् गतिं वेद्मि कथञ्चन ।
अधर्मो धर्म इति वा व्यवसायो न शक्यते ॥ ४६

कर्तुमस्मद्विधैर्ब्रह्मन्नतो न व्यवसाम्यहम् ।
पञ्चानां महिषी कृष्णा भवत्विति कथञ्चन ॥ ४७

युधिष्ठिरः—

न मे वागनृतं प्राह नाधर्मे धीयते मतिः ।
वर्तते च मनो मेऽत्र नैषोऽधर्मः कथञ्चन ॥ ४८

श्रूयते हि पुराणेषु जटिलो नाम गौतमः ।
तस्य पुत्री महाप्राज्ञा गौतमस्य यशस्विनी ॥ ४९

ऋषीनध्यासितवती सप्त धर्मभृतां वरान् ॥ ४९॥

तथा वै मृगशावाक्षी तपोभिर्भावितात् मुनीन् ।
दशाभजदृषीन् भ्रातॄन् एकनाम्नः प्रचेतसः ॥ ५०॥
गुरोश्च वचनं प्राहुर् धर्म्यं धर्मभृतां वरम् ।
गुरूणां चैव सर्वेषां जनित्री परमो गुरुः ॥ ५१॥
सा चाप्युक्तवती वाचं भैक्षवद्भुज्यतामिति ॥ ५२
तस्मादेतदहं मन्ये परं धर्मं द्विजोत्तम ॥ ५२॥

कुन्ती—
एवमेतद्यथाऽऽहायं धर्मचारी युधिष्ठिरः ।
[1]भुज्यतां भ्रातृभिस्सार्धम् इत्यर्जुनमचोदयम् ॥ ५३॥
अनृतान्मे भयं तीव्रं मुच्येऽहमनृतात् कथम् ॥ ५४

व्यासः—
अनृतान्मोक्ष्यसे भद्रे धर्मश्चैष सनातनः ।
ननु वक्ष्यामि सर्वेषां पाञ्चाल शृणु मे वचः ॥ ५५
यथाऽयं विहितो धर्मो यतश्चायं सनातनः ।
यथा चाप्याह कौन्तेयस् तथा धर्मो न संशयः ॥ ५६

वैशम्पायनः—
तत उत्थाय भगवान् व्यासो द्वैपायनः प्रभुः ।
करे गृहीत्वा राजानं राजवेश्म समाविशत् ॥ ५७
पाण्डवास्त्वथ कुन्ती च धृष्टद्युम्नश्च पार्षतः ।
मिथः कथाभिस्ते सर्वे प्रतीक्षन्ते स्म तावुभौ ॥ ५८

1. अ-ख-च—कोशेषु-इदमर्धं नास्ति ।

ततो द्वैपायनस्तस्मै नरेन्द्राय विशाम्पते ।
आचख्यौ तद्यथा धर्मो बहूनामेकपत्निता ॥ ५९
यथा देवा ददुश्चैव राजपुत्र्याः पुरा वरम् ।
धर्माद्यास्तपसा तुष्टाः पञ्चपत्नीत्वमीश्वराः ॥ ६०

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्याम्
आदिपर्वणि अष्टाशीत्यधिकशततमोऽध्यायः ॥ १८८ ॥
॥ १३ ॥ वैवाहिकपर्वणि द्वितीयोऽध्यायः ॥ २ ॥
[अस्मिन्नध्याये ६० श्लोकाः]

## एकोननवत्यधिकशततमोऽध्यायः ॥

इन्द्रसेनापरनाम्न्या नालायन्या उपाख्यानारम्भः—नालायन्या स्थविरस्य पत्युर्मौद्गल्यस्य आराधनम् ॥ १ ॥ तुष्टेन तेन नालायनीप्रार्थनयाऽऽत्मनः पञ्चरूपस्वीकारेण तस्यां रमणम् ॥ २ ॥ नालायनी तव दुहिता जातेति द्रुपदं प्रति व्यासस्योक्तिः ॥ ३॥ नालायन्या रुद्रात् पञ्चपत्नीत्ववरप्राप्तिः ॥ ४ ॥

व्यासः—
मा भूद्राजंस्तव तापो मनस्थः
पञ्चानां भार्या दुहिता ममेति ।
मातुरेषा पार्थिव प्रार्थिता स्यात्
पञ्चानां भार्या [1]दुहिता ममेति ॥ १
याजोपयाजौ धर्मघृणी तपोभ्यां
तौ चक्रतुः पञ्चपतित्वमस्याः ।

1. अ-ब—महिषी तवे ।

[1]सा धर्मतः पाण्डुसुतैरवाप्ता
भार्या कृष्णा मोदतां वै कुलं ते ॥ २

लोके नान्यो नाथवांस्त्वद्विशिष्टस्
सर्वारीणामप्रधृष्योऽसि राजन् ।
भूयस्तु मे शृण्विदं त्वं विशोको
यथागमं पञ्चपतित्वमस्याः ॥ ३

एषा नालायनी पूर्वं मौद्गल्यं स्थविरं पतिम् ।
आराधयामास तदा कुष्ठिनं तमनिन्दिता ॥ ४
त्वगस्थिभूतं कटुकं लोलमीर्ष्युं सुकोपनम् ।
सुगन्धेतरगन्धाढ्यं वलीपलितधारिणम् ॥ ५
स्थविरं विकृताकारं शीर्यमाणनखत्वचम् ।
उच्छिष्टमुपभुञ्जाना पर्युपास्ते महाव्रता ॥ ६
ततः कदाचिदङ्गुष्ठो भुञ्जानस्य व्यशीर्यत ।
अन्नादुद्धृत्य तच्चान्नम् उपभुङ्क्तेऽविशङ्किता ॥ ७
तेन तस्याः प्रसन्नेन कामव्याहारिणा तदा ।
वरं वृणीष्वेत्यसकृद् उक्तो वव्रे वरं तदा ॥ ८

मौद्गल्यः—
नास्मि वृद्धो न कटुको नेर्ष्युर्नैवातिकोपनः ।

1. अ-ख—कोशयोरयं सार्धश्लोको नास्ति

न च दुर्गन्धवदनो न कृशो न च लोलुपः ॥ ९

कथं त्वां रमयामीह कथं त्वां वासयाम्यहम् ।
वद कल्याणि भद्रं ते यथा त्वं मनसेच्छसि ॥ १०

व्यासः—

सा तमक्लिष्टकर्माणं वरदं सर्वकामदम् ।
भर्तारमनवद्याङ्गी प्रसन्नं प्रत्युवाच ह ॥ ११

नाळायनी—

[1]पञ्चधा मां विभक्तात्मा भगवँल्लोकविश्रुत ।
रमय त्वमचिन्त्यात्मन् पुनश्चैकत्वमास्थितः ॥ १२

व्यासः—

तां तथेत्यब्रवीद्धीमान् ब्रह्मर्षिर्वै महातपाः ।
स पञ्चधावपुर्भूत्वा रमयामास सर्वशः ॥ १३
नाळायनीं सुकेशान्तां मौद्गल्यश्चारुहासिनीम् ॥ १३॥
आश्रमेष्वाधिकं चापि पूज्यमानो महर्षिभिः ।
विचचार यथाकामं कामरूपवपुः पुनः ॥ १४॥
यदा ययौ दिवं चापि तत्र देवर्षिभिस्सह ।
स्वधामृतरसाहारस् सुरलोके चचार ह ॥ १५॥
पूज्यमानस्तथा शच्या शक्रस्य भवनेष्वपि ।
महेन्द्रसेनया सार्धं पर्यटन् दिवि रंहसः ॥ १६॥

---

1. क-ग-ब—पञ्चबाणातिविद्धाऽहं मन्मथस्य महामते। [अधिकः पाठः]

सूर्यस्य च रथं दिव्यम् आरुह्य भगवान् प्रभुः ।
पर्युपेत्य पुनर्मेरुं मेरौ वासमरोचयत् ॥ २७॥
आकाशगङ्गामाप्लुत्य तया सह तपोनिधिः ।
अंशुजालेषु चन्द्रस्य उवास च यथाऽनिलः ॥ २८॥
गिरिरूपं यथा दध्रे स महर्षिस्तदा पुनः ।
तत्प्रभावेन सा तस्य मध्ये जज्ञे महानदी ॥ २९॥
[1]यदा पुष्पाकुलस्सालस् संजज्ञे भगवानृषिः ।
[2]लतात्वमथ संपेदे तमेवाभ्यनुवेष्टती ॥ ३०॥
पुपोष च वपुर्यत्तद् रूपं तस्यानुगं पुनः ।
सा पुपोष समं भर्तुस् स्कन्धेनापि चचार ह ॥ ३१॥
ततस्तस्य च तस्याश्च तुल्या प्रीतिरवर्धत ॥ ३२
तथा सा भगवंस्तस्याः प्रसादादृषिसत्तमः ।
विजज्ञुषी च सा तत्र तपोयोगेन भामिनी ॥ ३३
स च तां तपसा देवीं रमयामास योगतः ॥ ३३॥
एकपत्नी पुनर्भूत्वा सदैवाग्रे यशस्विनी ।
अरुन्धतीव सीतेव बभूवातिपतिव्रता ॥ ३४॥
दमयन्त्याश्च मातुस्सा विशेषमधिकं ययौ ॥ ३५

1. घ—यदाऽसौ कल्पवृक्षस्य आश्रिताखिलसिद्धिदः ।
2. घ—तदा स्यात् कल्पकलता तस्योपरि समावृता ।

एतत्तथ्यं महाराज मा ते भूद्बुद्धिरन्यथा ॥ ३५॥
एषा नालायनी जज्ञे दैवयोगेन केन चित् ।
राजंस्तवात्मजा कृष्णा वेद्यां तेजस्विनी शुभा ॥ ३६॥
तस्मिंस्तस्या मनस्सक्तं न चचाल कदाचन ॥ ३७
तथा प्रणिहितो ह्यात्मा तस्यास्तस्मिन् द्विजोत्तमे ॥ ३७॥

द्रुपदः—

ब्रूहि तत् कारणं येन ब्रह्मञ्जाता तपस्विनी ।
सुता ममाध्वरे कृष्णा सर्ववेदविदां वर* ॥ ३८॥

व्यासः—

शृणु राजन् यथा ह्यस्या दत्तो रुद्रेण वै पुरा ।
यदर्थं चैव संभूता तव यज्ञे यशस्विनी ॥ ३९॥
अहं ते कथयिष्यामि कृष्णायाः पौर्वदैहिकम् ॥ ४०
इन्द्रसेनेति विख्याता पुरा नालायनी शुभा ।
मौद्गल्यं पतिमासाद्य चचार विगतज्वरा ॥ ४१
मौद्गल्यस्य महर्षेश्च रममाणस्य वै तया ।
संवत्सरगणा राजन् व्यतीयुः क्षणवत्तदा ॥ ४२
ततः कदाचिद्धर्मात्मा तन्तुकामो व्यरज्यत ।
अन्विच्छन् परमं ब्रह्म त्यागधर्मपरोऽभवत् ॥ ४३

---

* अ-क-ख-ग—कोशेषु अत्रैवाध्यायसमाप्तिर्दृश्यते ।

उत्ससर्ज स तां विप्रस् सा तदा चापतद्भुवि ।
[1]मौद्गल्यो राजशार्दूल तपोभिर्भावितस्सदा ॥ ४४

नाळायनी—

प्रसीद भगवन् मह्यं न मामुत्स्रष्टुमर्हसि ।
अवितृप्ताऽस्मि ब्रह्मर्षे कामानां मम कामद ॥ ४५

[2] ऋषिः—

यस्मात्त्वं मयि निश्शङ्का ह्यवक्तव्यं प्रभाषसे ।
आचरन्ती तपोविघ्नं तस्माच्छृणु वचो मम ॥ ४६
भविष्यसि नृलोकेऽस्मिन् राजपुत्री यशस्विनी ।
पाञ्चालराजस्य सुता द्रुपदस्य महात्मनः ॥ ४७
भवितारस्ततस्तत्र पतयः पञ्च विश्रुताः ।
तैस्सार्धं मधुराकारैश् चिरं रतिमवाप्स्यसि ॥ ४८

व्यासः—

सैवं शप्ता तु विमना वनं प्रायाद्यशस्विनी ।
भोगैरतृप्ता देवेशं तपसाऽऽराधयत्तदा ॥ ४९
निराशीर्मारुताहारा निराहारा तथैव च ।
अनुवर्तमाना त्वादित्यं तथा पञ्चतपा भवत् ॥ ५०

---

1. क-ग-च—मौद्गल्यं राजशार्दूल तपोभिर्भावितं सदा ।
कामभोगातुराऽभ्येत्य वचनं चेदमब्रवीत् । [अधिकः पाठः]
2. क-ग-च—मारो मां बाधतेऽत्यर्थम् अनुगृह्णातु मां भवान् ।
तर्पयस्व ममाक्षाणि गुह्यं मां बाधतेऽनिशम् ॥
[अधिकः पाठः]

तीव्रेण तपसा तस्यास् तुष्टः पशुपतिस्स्वयम् ।
वरं प्रादात्तदा रुद्रस् सर्वलोकेश्वरः प्रभुः ॥ ५१

महेश्वरः—

भविष्यति परं जन्म मनुष्येषु वराङ्गने ।
भविष्यन्ति च ते भद्रे पतयः पञ्च सुव्रताः ॥ ५२

महेन्द्रवपुषस्सर्वे महेन्द्रसमविक्रमाः ।
तत्रस्था च महत्कर्म सुराणां त्वं करिष्यासि ॥ ५३

नालायनी—

एकः खलु मया भर्ता वृतः पञ्च त्विमे कथम् ।
भविष्यन्ति ममैकस्याः पतयस्तद्ब्रवीहि मे ॥ ५४

महेश्वरः—

पञ्चकृत्वस्त्वया ह्युक्तः पतिं देहीत्यहं पुनः ।
पञ्च ते पतयो भद्रे भविष्यन्ति सुखावहाः ॥ ५५

नालायनी—

धर्म एकः पतिस्स्त्रीणां पूर्वमेव प्रकल्पितः ।
बहुपत्नीकता पुंसां धर्मश्च पितृभिः कृतः ॥ ५६

स्त्रीधर्मः पूर्वमेवायं निर्मितो मुनिभिः पुरा ।
सहधर्मचरी भर्तुर् एका एकस्य चोच्यते ॥ ५७

एको हि भर्ता नारीणां कौमार इति लौकिकः ।
आपत्सु च नियोगेन सन्तानार्थे परस्स्मृतः ॥ ५८

गच्छेत या तृतीयं तु तस्या निष्कृतिरुच्यते ॥ ५८॥
चतुर्थे पतिता धर्मात् पञ्चमे वर्धकी भवेत् ॥ ५९

एवं गते धर्मपथे न वृणे बहुपुंस्कताम् ॥ ५९॥
अलोकाचरितात्तस्मात् कथं मुच्येय सङ्करात् ॥ ६०

महेश्वरः—

अनावृताः पुरा नार्यो [1]ह्यासञ्शुध्यन्ति चार्तवे ॥ ६०॥
सकृदुक्तं त्वया नैतन्नाधर्मस्ते भविष्यति ॥ ६१

नाळायनी—

यदि मे पतयः पञ्च रतिमिच्छामि तैर्मिथः ।
कौमारं च भवेत् सर्वैस् सङ्गमे सङ्गमे च मे ॥ ६२

पतिशुश्रूषया चैव सिद्धिः प्राप्ता मया पुरा ।
भोगेच्छा च मया प्राप्ता स च भोगश्च मे भवेत् ॥ ६३

महेश्वरः—

रतिश्च भद्रे सिद्धिश्च न भजेते परस्परम् ॥ ६३॥
[2]अभोगा लप्स्यसे सिद्धिं योगेन च महत्त्वताम् ॥ ६४

अन्यदेहान्तरे च त्वं रूपभाग्यगुणान्विता ।
पञ्चभिः प्राप्य कौमारं महाभागा भविष्यसि ॥ ६५

गच्छ गङ्गाजलद्वारं नरं पश्यसि यं शुभे ।

---

1. क-ग—मासे शुध्यन्ति
2. घ—दुर्भगा लप्स्यसे सिद्धिं भोगेन बहुमान्यताम् ।

तमानय ममाभ्याशं सुरराजं शुचिस्मिते ॥ ६६

व्यासः—

इत्युक्त्वा विश्वरूपेण रुद्रं कृत्वा प्रदक्षिणम् ।
जगाम गङ्गामुद्दिश्य पुण्यां त्रिपथगां नदीम् ॥ ६७

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्याम्
आदिपर्वणि एकोननवत्यधिकशततमोऽध्यायः ॥ १८९ ॥
॥ १३ ॥ वैवाहिकपर्वणि तृतीयोऽध्यायः ॥ ३ ॥
[अस्मिन्नध्याये ६७ श्लोकाः]

---

## ॥ नवत्यधिकशततमोऽध्यायः ॥

पञ्चेन्द्रोपाख्यानप्रारम्भः ॥ १ ॥ बलरामकेशवद्रौपद्यादीनामुत्पत्तिकथा ॥ २ ॥ व्यासदत्तदिव्यदृष्टेर्द्रुपदस्य पाण्डवद्रौपदीपूर्वरूपदर्शनं ॥ ३ ॥ द्रौपद्या अव्यवहितपूर्वजन्मवृत्तान्तकथनम् ॥ ४ ॥

---

व्यासः—

पुरा वै नैमिशारण्ये देवास्सत्रमुपासते । ॥
तत्र वैवस्वतो राजन् शामित्रमकरोत्तदा ॥ १

ततो यमो दीक्षितस्तत्र राजन्
नामारयत् किञ्चिदपि प्रजाभ्यः ।
ततः प्रजास्ता बहुला बभूवुः
कालातिपातान्मरणात् प्रहीणाः ॥ २

ततश्च शक्रो वरुणः कुबेरस्
साध्याश्च रुद्रा वसवश्चाश्विनौ च ।
प्रणेतारं भुवनस्य प्रजापतिं
समाजग्मुस्तत्र देवास्तथाऽन्ये ॥ ३

ततोऽब्रुवँल्लोकगुरुं समेता
भयं नस्तीव्रं मानुषाणां प्रवृद्ध्या ।
तस्माद्भयादुद्विजन्तस्सुखेप्सवः
प्रयाम सर्वे शरणं भवन्तम् ॥ ४

ब्रह्मा—

किं वो भयं मानुषेभ्यो यूयं सर्वे यदाऽमराः ।
न वो मर्त्यसकाशाद्वै भयं भवति कर्हिचित् ॥ ५

देवाः—

मर्त्या ह्यमर्त्यास्संवृत्ता न विशेषोऽस्ति कश्चन ।
अविशेषादुद्विजन्तो विशेषार्थमिहागताः ॥ ६

ब्रह्मा—

वैवस्वतो व्यापृतस्सत्रहेतोस्
तेन त्विमे न म्रियन्ते मनुष्याः ।
तस्मिन्नेकाग्रे कृतसर्वकार्ये
तत एषां भवितैवान्तकालः ॥ ७

वैवस्वतस्येह तनुर्हि भूत्वा
वीर्येण युष्माकमुत प्रवृद्धा ।

सैषामन्तो भविता ह्यन्तकाले
नियच्छध्वं मोहममित्रसाहाः ॥ ८

व्यासः—

ततस्तु ते पूर्वजदेववाक्यं
श्रुत्वा जग्मुर्यत्र देवा यजन्ते ।
समासीनास्ते समेता महाबला
भागीरथ्यां ददृशुः पुण्डरीकम् ॥ ९

दृष्ट्वा च तद्विस्मितास्ते बभूवुस्
तेषामिन्द्रस्तत्र शूरो जगाम ।
सोऽपश्यद्योषामथ पावकप्रभां
यत्र देवी गङ्गा सततं प्रभूता ॥ १०

सा तत्र योषा रुदती जलार्थिनी
गङ्गां देवीं व्यवगाह्य व्यतिष्ठत् ।
तस्याश्रुबिन्दुः पतितो जले वै
तत्पद्ममासीदथ तत्र काञ्चनम् ॥ ११

तदद्भुतं प्रेक्ष्य वज्री तदानीम्
अपृच्छत्तां योषितमन्तिकाद्वै ।
का त्वं कुतो रोदिषि कस्य हेतोर्
वाक्यं तथ्यं कामयेऽहं ब्रवीहि ॥ १२

स्त्री-

त्वं वेत्स्यसे मामिह याऽस्मि शक्र
यदर्थं चाहं रोदिमि मन्दभाग्या ।
आगच्छ राजन् पुरतो गमिष्ये
द्रष्टाऽसि तद्रोदिमि यत्कृतेऽहम् ॥ १३

व्यासः—

तां गच्छन्तीमन्वगच्छत्तदानीं
सोऽपश्यदारात्तरुणं दर्शनीयम् ।
सिद्धासनस्थं युवतीसहायं
क्रीडन्तमक्षैर्गिरिराजमूर्ध्नि ॥ १४

तमब्रवीद्देवराजो ममेदं
त्वं विद्धि विश्वं भुवनं वशे स्थितम्
ईशोऽहमस्मीति समन्युरब्रवीद्
दृष्ट्वा तमक्षैस्सुभृशं प्रमत्तम् ॥ १५

क्रुद्धं स शक्रं प्रसमीक्ष्य देवो
जहास शक्रं च शनैरुदीक्ष्य ।
संस्तम्भितोऽभूदथ देवराजस्
तेनेक्षितस्स्थाणुरिवावतस्थे ॥ १६

यदा तु पर्याप्तिरिहाक्षक्रीडया
तदा देवीं रुदतीं तामुवाच ।

आनीयतामेष यतोऽहमारा-
श्चैनं दर्पः पुनरप्याविशेत ॥ १७

तदा शक्रस्स्पृष्टमात्रस्तया तु
स्रस्तैरङ्गैः पतितोऽभूद्धरण्याम् ।
तमब्रवीद्भगवानुग्रतेजा
नैवं पुनश्शक्र कृथाः कथञ्चित् ॥ १८

निवर्तयैनं च महाद्रिराजं
बलं च वीर्यं च तवाप्रमेयम् ।
विवृत्य चैवाविश मध्यमस्य
यत्रासते त्वद्विधास्सूर्यभासः ॥ १९

स तद्विवृत्य शिखरं महागिरेस्
तुल्यद्युतींस्तांश्चतुरो ददर्श ।
स तानभिप्रेक्ष्य बभूव दुःखितः
कथं नाहं भविता वै यथेमे ॥ २०

ततो देवो गिरिशो वज्रपाणिं
विवृत्य नेत्रे रुषितोऽभ्युवाच ।
दरीमेतां प्रविश त्वं शतक्रतो
यन्मां बाल्यादवमंस्थाः पुरस्तात् ॥ २१

उक्तस्त्वेवं विभुना देवराजः
प्रावेपमानो भयदेवाभिषङ्गात् ।

त्रस्तैरङ्गैरानिलेनेव नुन्नम्
अश्वत्थपत्रं गिरिराजमूर्ध्नि ॥ २२

स प्राञ्जलिर्वै विनतेनाननेन
प्रवेपमानस्सहसैवमुक्तः ।
उवाच देवं बहुरूपमुग्रं
दृष्ट्वा शेषं भगवंस्त्वं प्रसीद ॥ २३

तमब्रवीदुग्रधन्वा प्रहस्य
नैवंविधाश्शेषमवाप्नुवन्ति ।
एतेऽप्येवं भवितारः पुरस्तात्
तस्मादेते दरीमेनां प्रविष्टाः ॥ २४

एषा भार्या भविता वो न संशयो
योनिं सर्वे मानुषीं संविशध्वम् ।
तत्र यूयं कर्म कृत्वाऽविषह्यं
[1]भूभारस्य निधनं प्रापयित्वा ॥ २५

शस्त्रैर्दिव्यैर्मानुषान् योधयित्वा
शूरान् सर्वानाहवे तान् विजित्य ।
आगन्तारः पुनरेवेन्द्रलोकं
स्वकर्मणा पूज्यमाना महार्हम् ॥ २६

1. क-ग—बहूनां राज्ञां निधनं; घ—बहूनम्यान्

सर्वं मया भाषितमेतदेवं
कर्तव्यमन्यद्विविधार्थवच्च ॥ २६॥

पूर्वेन्द्राः—

गमिष्यामो मानुषं देवलोकाद्
दुरावारो विहितो यत्र मोक्षः ।
देवास्त्वस्मानादधीरञ्जनन्यां
धर्मो वायुर्मघवानाश्विनौ च ॥ २७॥

व्यासः—

एतच्छ्रुत्वा वज्रपाणिर्वचस्तु
देवश्रेष्ठः पुनरेवेदमाह ।
वीर्येणाहं पुरुषं कार्यहेतोर्
दद्यामेषां पञ्चमं मत्प्रसूतम् ॥ २८॥

तेषां कामं भगवानुग्रकर्मा
प्रादादिष्टं सन्निसर्गाद्यथोक्तम् ।
तां चाप्येषां योषितं लोककान्तां
श्रियं भार्यां व्यदधान्मानुषेषु ॥ २९॥

तैरेव सार्धं तु ततस्स देवो
जगाम नारायणमप्रमेयम् ।
स चापि तद्व्यदधात् सर्वमेव
ततस्सर्वे संबभूवुर्धरण्याम् ॥ ३०॥

नरं तु देवं विबुधप्रधानम्
इन्द्राज्जिष्णुं पञ्चमं कल्पयित्वा ।
स चापि केशौ हरिरुद्बबर्ह
शुक्लमेकमपरं चापि कृष्णम् ॥ ३१॥

तौ चापि केशौ विशतां यदूनां
कुले स्त्रियौ देवकीं रोहिणीं च ।
तयोश्श्वेतो बलदेवो बभूव
कृष्णो द्वितीयः केशवस्संबभूव ॥ ३२॥

ये ते पूर्वं शक्ररूपा निरुद्धास्
तस्यां दर्यां पर्वतस्योत्तमस्य ।
इहैव ते पाण्डवा वीर्यवन्तश्
शक्रस्यांशः पाण्डवस्सव्यसाची ॥ ३३॥

एवमेते पाण्डवास्संबभूवुर्
ये ते राजन् पूर्वमिन्द्रा बभूवुः ।
लक्ष्मीश्चैषां पूर्वमेवोपदिष्टा
भार्या चैषा द्रौपदी दिव्यरूपा ॥ ३४॥

कथं हि स्त्री कर्मणोऽन्ते महीतलात्
समुत्तिष्ठेदन्यतो दैवयोगात् ।
यस्या रूपं सोमसूर्यप्रकाशं
गन्धश्च यस्याः क्रोशमात्रात् प्रवाति ॥ ३५॥

इदं चान्यत् प्रीतिपूर्वं नरेन्द्र
दददामि ते दिव्यमत्यद्भुतं च ।
दिव्यं चक्षुः पश्य कुन्तीसुतांस्त्वं
पुण्यैर्दिव्यैः पूर्वदेहैरुपेतान् ॥ ३६॥

वैशम्पायनः—

ततो व्यासः परमोदारकर्मा
शुचिर्विप्रस्तपसा तस्य राज्ञः ।
चक्षुर्दिव्यं प्रददौ तेन सर्वान्
राजाऽपश्यत् पूर्वदेहैरुपेतान् ॥ ३७॥

ततो दिव्यान् हेमकिरीटमालिनः
शक्रप्रख्यान् पावकादित्यवर्णान् ।
बद्धापीडांश्चारुरूपांश्च यूनो
व्यूढोरस्कान् सालमात्रान् ददर्श ॥ ३८॥

दिव्यैर्वस्त्रैररजोभिस्सुवर्णैर्
माल्यैश्चाग्र्यैश्शोभमानानतीव ।
साक्षात्त्र्यक्षान् वासवान् वाऽथ दिव्यान्
आदित्यान् वा सर्वगुणोपपन्नान् ॥ ३९॥

पूर्वेन्द्रांस्तानेवमीक्ष्याभिरूपान्
प्रीतो राजा द्रुपदो विस्मितश्च ।

दिव्यां मालां तामवाप्याप्रमेयाम्
तां चैवाग्र्यां श्रियामिव रूपिणीं च ॥ ४०॥
योग्यां तेषां रूपतेजोयशोभिः
पत्नीमिष्टां दृष्टवान् पार्थिवेन्द्रः ॥ ४१
स तां दृष्ट्वा महदाश्चर्यरूपां
जग्राह पादौ सत्यवत्यास्सुतस्य ।
नैताच्चित्रं परमर्षे त्वयीति
प्रसन्नचेतास्स उवाच चैनम् ॥ ४२

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्याम्
आदिपर्वणि नवत्यधिकशततमोऽध्यायः ॥ १९० ॥
॥ १३ ॥ वैवाहिकपर्वणि चतुर्थोऽध्यायः ॥ ४ ॥
[अस्मिन्नध्याये ४२ श्लोकाः]

---

## ॥ एकनवत्यधिकशततमोऽध्यायः ॥

व्यासेन द्रौपद्या देवतांशत्वनिरूपणम् ॥ १ ॥ पाण्डवस्वरूपनिदर्शनम् ॥ २ ॥ युधिष्ठिरादीनां क्रमेण द्रौपद्याः पाणिग्रहणम् ॥ ३ ॥

---

व्यासः—

इदमन्यत् पुरावृत्तं तन्निबोध च भूमिप ।
कीर्त्यमानं नृपर्षीणां पूर्वेषां दारकर्मणि ॥ १

नितन्तुर्नाम राजर्षिर् बभूव भुवि विश्रुतः ॥ १॥
तस्य पुत्रा महेष्वासा बभूवुः पञ्च भूमिपाः ॥ २
साल्वेयश्शूरसेनश्च श्रुतसेनश्च वीर्यवान् ।
तिन्दुसारोऽद्रिसारश्च क्षत्रियाः क्रतुयाजिनः ॥ ३
नातिचक्रमुरन्योन्यम् अन्योन्यस्य प्रियंवदाः ॥ ३॥
एतान्नैतन्तवान् पञ्च शैब्या चात्र स्वयंवरे ।
अवाप तान् पतीन् वीरान् भौमाश्वी मनुजाधिप ॥ ४॥
वीणेयं मधुरारावा गान्धारस्वरमूर्छिता ।
उत्तमा सर्वनारीणां भौमाश्वी ह्यभवत्तदा ॥ ५॥
यस्या नैतन्तवाः पञ्च पतयः क्षत्रियर्षभाः ।
बभूवुः पृथिवीपालास् सर्वैस्समुदिता गुणैः ॥ ६॥
तेषामेकाऽभवद्भार्या राज्ञामौशीनरी शुभा ॥ ७
भौमाश्वी नाम भद्रं ते तथा रूपगुणान्विता ॥ ७॥
पञ्चभ्यः पञ्चधा पञ्च दायादान् सा व्यजायत ॥ ८
तेभ्यो नैतन्तवेभ्यस्तु राजशार्दूल वै तदा ।
पृथगाख्याऽभवत्तेषां भ्रातॄणां पञ्चधा भुवि ॥ ९
यथावत् कीर्त्यमानांस्तान् शृणु मे राजसत्तम ॥ ९॥
साल्वेयाश्शूरसेनाश्च श्रुतसेनाश्च पार्थिवाः ।
तिन्दुसाराद्रिसाराश्च वंशा एषां नृपोत्तम ॥ १०॥

एवमेकाऽभवद्भार्या भौमाश्वी भुवि विश्रुता* ॥ ११

व्यासः—

आसीत्तपोवने काचिद् ऋषेः कन्या महात्मनः ।

नाध्यगच्छत् पतिं सा तु कन्या रूपवती सती ॥ १२

तोषयामास तपसा सा तु देवं महेश्वरम् ॥ १२॥

तपसा चेश्वरस्तुष्टो वृणीथाः काममीप्सितम् ॥ १३

अथेश्वरमुवाचेदम् आत्मनो यद्धितं वचः ।

पतिं सर्वगुणोपेतम् इच्छामीति पुनः पुनः ॥ १४

एवमुक्तस्तदा देव इदं वचनमब्रवीत् ।

पञ्च ते पतयश्श्रेष्ठा †(भविष्यन्तीति शङ्करः ॥ १५

सा प्रसादयती देवम् इदं भूयोऽभ्यभाषत ।

एकं पतिं गुणोपेतं त्वत्तोऽर्हामीति शङ्कर ॥ १६

तां देवदेवः प्रीतात्मा पुनः प्राह शुभं वचः ॥) १६॥

पञ्चकृत्वस्त्वया प्रोक्तः पतिं देहीत्यहं शुभे ।

देहमन्यं गतायास्ते यथोक्तं वै भविष्यति ॥ १७॥

सैव नालायनी भूत्वा रूपेणाप्रतिमा भुवि ।

मौद्गल्यं पतिमासाद्य शिवाद्वरमवाप्य च ॥ १८॥

द्रुपदैषा ततो जज्ञे सुता ते देवरूपिणी ।

पञ्चानां विहिता कृष्णा पुरा पार्षत्यनिन्दिता ॥ १९॥

---

* अ-क-ख-ग-कोशेषु अत्रैवाध्यायसमाप्तिर्दृश्यते ।

† (———) असत्पादोनश्लोकद्वयम् अ-क-ख-ग-व-कोशेषु नास्ति ।

स्वर्गाच्छ्रीः पाण्डवार्थाय समुत्पन्ना तपोवने ।
सैतत् तप्त्वा तपो घोरं दुहितृत्वं गता तव । २०॥

[1]सैषा देवी रुचिरा देवजुष्टा
पञ्चानामेका स्वकृतेनैव कर्मणा ।

---

1. क-ग-घ—शृणु गुह्यं महीपाल वदतस्सावधानतः ।
संश्रुत्य वचो मह्यं ततः पश्यसि पाण्डवान् ॥ १
हत्वा वृत्रं सुरपतिस् त्वाष्ट्रं स्वर्गात् सह च्युतः ।
ब्रह्महत्यामवाप्याथ धर्मादिरहितस्तदा ॥ २
ऐन्द्रो धर्मो यममगाद् बलं वायुमथाविशत् ।
वीर्यं वरं ज्ञानरूपे नासत्यावभिजग्मतुः ॥ ३
ह्रीश्च लक्ष्मीश्च कीर्तिश्च सन्नतिर्मतिरेव च ।
एता विनिर्गता इन्द्राद् वाग्देवीं तास्समाश्रिताः ॥ ४
पूर्वेन्द्रवरदानाच्च महेशस्याज्ञया नृप ।
धर्मादीन् पाण्डवान् विद्धि ह्रियाद्या द्रौपदीं तथा ॥ ५
तदिमे पाण्डवा राजन्निन्द्र एको न संशयः ।
एकैव द्रौपदी राजन् पौलोमी ते न संशयः ॥ ६
शृणु गुह्यतमं चान्यद् रहस्यं देवनिर्मितम् ।
यच्छ्रुत्वा संशयस्तेऽद्य शतधा विफलिष्यति ॥ ७
सद्योजातमुखादीनि मुखानि च महेशितुः ।
पाण्डवाः पञ्च यानि स्युः पार्वती द्रौपदी त्वियम् ॥ ८
इदमन्यद्रहस्यं ते देवगुह्यं सनातनम् ।
भवतः प्रत्ययार्थं च निस्संशयकरं महत् ॥ ९
चत्वारश्च भुजा विष्णोश्शङ्खचक्रादिलाञ्छिताः ।
धर्मराजश्च भीमश्च यमौ च नृपसत्तम ॥ १०
अर्जुनस्तु स्वयं विष्णुः पाञ्चाली कमला सती ।
चतस्रो मूर्तयो विष्णोः स्वयं विष्णुश्च सिन्धुजा ॥ ११
चतुरः पाण्डवाञ्जिष्णुं कृष्णां विद्धि महीं वर ।
चतुर्मूर्तिश्चतुर्व्यूहो वासुदेवादिभिस्सह ॥ १२

सृष्टा पूर्वं देवपत्नी स्वयंभुवा
श्रुत्वा राजन् द्रुपदेष्टं कुरुष्व* ॥ २१॥

द्रुपदः—
श्रुत्वैवैवं वचनं ते महर्षे
मया पूर्वं विदितं वर्जनीयम् ।
न हि शक्यं विहितस्यापयातुं
तदेवेदमुपपन्नं विधानम् ॥ २२॥
दिष्टस्य ग्रन्थिरनिवर्तनीयस्
स्वकर्मणा विहितं तेन किञ्चित् ।
कृतं निमित्तं हि वरैकहेतोस्
तदेवेदमुपपन्नं बहूनाम् ॥ २३॥
यथैव कृष्णोक्तवती पुरस्ता-
न्नैकान् पतीन् मे भगवान् ददातु ।
स चाप्येतद्वरमित्यब्रवीत्तदा
देवो हि वेद परमं यदत्र ॥ २४॥

---

पूर्वतोऽनुवृत्तम्—
अवतीर्णो महीं विष्णुः पाञ्चाली कमला स्वयम् ।
पञ्चायतनसंज्ञं च पञ्चमूर्तिस्सदाशिवः ॥ १३
निवृत्त्यादिकलाः पञ्च पाञ्चालीं विद्धि भूमिप ।
तस्मात्ते संशयो मा भूत् पाण्डवेभ्यः प्रदीयताम् ॥ १४
कृष्णा तव सुता राजन् पञ्चभिः पूर्वसंभवा ।
पञ्चाग्नयः पाण्डवास्स्युः स्वाहा कृष्णा प्रकीर्तिता ॥ १५
[अधिकः पाठः]

* अ-क-ख-ग—कोशेषु अत्रैवाध्यायसमाप्तिर्दृश्यते ।

यदि त्वयं विहितश्शङ्करेण
धर्मोऽधर्मो वा नात्र ममापराधः ।
गृह्णन्त्विमे पाण्डवाः पाणिमस्या
यथाजोषं विहितैषां हि कृष्णा ॥ २५॥

वैशम्पायनः—

तत आजग्मतुस्तत्र तौ कृष्णद्रुपदावुभौ ।
कुन्ती सपुत्रा यत्रास्ते धृष्टद्युम्नश्च पार्षतः ॥ २६॥
ततो द्वैपायनः कृष्णो युधिष्ठिरमथाब्रवीत् ॥ २७

व्यासः—

अद्य पुण्यमहश्चन्द्रो रोहिण्या च समेष्यति ।
क्रमेण पुरुषव्याघ्र पाणिं गृह्णन्तु पाण्डवाः ॥ २८
द्रौपद्या धर्मतस्सर्वे दृष्टमेतत् पुराऽनघ ॥ २८॥

वैशम्पायनः—

ततो राजा यज्ञसेनस्सपुत्रो
जन्यार्थयुक्तं बहु तत्तदाऽग्र्यम् ।
सम्भावयामास सुतां च कृष्णाम्
आप्लाव्य रत्नैर्बहुभिर्विभूष्य ॥ २९॥
ततस्सर्वे सुहृदस्तत्र तस्य
समाजग्मुस्साचिवा मन्त्रिणश्च ।

द्रष्टुं विवाहं परमप्रतीता
    द्विजाश्च पौराश्च यथाप्रधानाः ॥ ३०॥
ततस्य वेश्मार्थिजनोपशोभितं
    विकीर्णपद्मोत्पलशोभिताङ्गिकम् ।
बभूव रत्नौघविचित्रमाबभौ
    दिवं यथा निर्मलतारकाचितम् ॥ ३१॥
ततस्तु ते कौरवराजपुत्रा
    विभूषिताः कुण्डलिनस्सुवेषाः ।
महार्हवस्त्रा वरचन्दनोक्षिताः
    कृताभिषेका कृतकौतुकक्रियाः ॥ ३२॥
पुरोहितेनाग्निसमेन तेजसा
    सहैव धौम्येन तथा यथाविधि ।
क्रमेण सर्वे विविशुश्च तत्सदो
    महर्षभा गोष्ठमिवाभिनन्दिनः ॥ ३३॥
ततस्समाधाय स वेदपारगो
    जुहाव मन्त्रैर्ज्वलितं हुताशनम् ।
युधिष्ठिरं चाप्युपनीय मन्त्रवि-
    न्नियोजयामास सहैव कृष्णया ॥ ३४॥
प्रदक्षिणं तौ परिगृह्य पाणिना
    समानयामास स वेदपारगः ।

विप्रांस्तु संतर्प्य युधिष्ठिरोऽन्नैर्
गोभिश्च रत्नैर्विविधैश्च पूर्वम् ॥ ३५॥
जग्राह पाणिं नरदेव जायया
धौम्येन मन्त्रैर्विधिवद्धुतेऽग्नौ ।
ततोऽन्तरिक्षात् कुसुमानि पेतुर्
ववौ च वायुस्सुमनोज्ञगन्धः ॥ ३६॥
ततोऽभ्यनुज्ञाय तमाजिशोभनं
पुरोहितो राजगृहाद्विनिर्ययौ ।
क्रमेण चानेन नराधिपात्मजा
वरस्त्रियास्ते जगृहुः करं तदा ॥ ३७॥
अहन्यहन्युत्तमरूपधारिणो
महारथाः कौरववंशवर्धनाः ।
इदं च तत्राद्भुतरूपमुत्तमं
दधार कृष्णा वपुषाऽतिमानुषम् ॥ ३८॥
महानुभावा किल सा सुमध्यमा
बभूव कन्येव गते गतेऽहनि ।
कृते विवाहे द्रुपदो धनं ददौ
महारथेभ्यो बहुरूपमुत्तमम् ॥ ३९॥
शतं रथानां वरहेमभूषितं
चतुर्युजां हेमविचित्रमालिनाम् ।

शतं गजानामपि पद्मजानां
तथा गिरीणामिव हेमशृङ्गिणाम् ॥ ४०॥

शतं दशाश्वान् मणिहेमभूषणान्
मनोजवान् द्वादशवार्षिकान् यथा ।
तथैव दासीशतमग्र्ययौवनं
महार्हवेषाभरणाम्बरस्रजम् ॥ ४१॥

हैमानि शय्यासनभाजनानि
द्रव्याणि चान्यानि महासनानि ।
पृथक्पृथक्चैव दशायुतानि
धनं ददौ सौमकिरग्निसाक्षिकम् ॥ ४२॥

तथैव वस्त्राणि विभूषणानि
प्रभावयुक्तानि महाधनानि ॥ ४३

कृते विवाहे च ततस्तु पाण्डवाः
प्रभूतरत्नामुपलभ्य तां श्रियम् ।
विजह्रुरिन्द्रप्रतिमा महाबलाः
पुरे तु पाञ्चालनृपस्य तस्य ह ॥ ४४

सर्वेऽपि तुल्यन्नृप पाण्डवेयास्
तस्याश्शुभैश्शीलसमाधिवृत्तैः ।

सा चाप्येषा याज्ञसेनी तदानीं
विवर्धयामास मुदं स्वसुव्रतैः ॥ ४५

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्याम्
आदिपर्वणि एकनवत्यधिकशततमोऽध्यायः ॥ १९१ ॥
॥ १३ ॥ वैवाहिकपर्वणि पञ्चमोऽध्यायः ॥ ५ ॥
[अस्मिन्नध्याये ४५ श्लोकाः]

---

## ॥ द्विनवत्यधिकशततमोऽध्यायः ॥

---

द्रौपदीं प्रति कुन्त्या आशीर्वादः ॥ १ ॥ श्रीकृष्णप्रेषितालंकारादीनां पाण्डवैः स्वीकारः ॥ २ ॥

---

वैशम्पायनः—

एवं विवाहं कृत्वा ते वीरा द्रुपदवेश्मनि ।
ऊषुस्सर्वे यथा पुण्यं कृतवन्तोऽन्तरिक्षगाः ॥ १

पाण्डवैस्सह संयोगं गतस्य द्रुपदस्य तु ।
न बभूव भयं किंचिद् देवेभ्योऽपि कथञ्चन ॥ २

कुन्तीमासाद्य ता नार्यो द्रुपदस्य महात्मनः ।
पादौ ववन्दिरे हृष्टाश् शिरोभिर्नाम कीर्तयन् ॥ ३

द्रौपदी क्षौमसंवीता कृतकौतुकमङ्गला ।
अभिवाद्य तदा श्वश्रूं तस्थौ प्रह्वा कृताञ्जलिः ॥ ४

रूपयौवनसंपन्नां शीलाचारसमन्विताम् ।
द्रौपदीमवदत् प्रेम्णा पृथाऽऽशीर्वचनं स्नुषाम् ॥ ५

कुन्ती—

यथेन्द्राणी हरिहये स्वाहा चैव विभावसौ ।
रोहिणी च यथा सोमे दमयन्ती यथा नले ॥ ६

यथा वैश्रवणे भद्रा वसिष्ठे चाप्यरुन्धती ।
[1]यथा नारायणे लक्ष्मीस् तथा त्वं भव भर्तृषु ॥ ७

जीवसूर्वीरसूर्भद्रे बहुपुत्रसमन्विता ।
सुभगा भोगसंपन्ना यज्ञपत्नी भवानघे ॥ ८

अतिथीनागतान् साधून् वृद्धान् बालांस्तथा गुरून् ।
पूजयन्त्या यथान्यायं शश्वद्गच्छन्तु ते समाः ॥ ९

कुरुजाङ्गलमुख्येषु राष्ट्रेषु नगरेषु च ।
अनु त्वमभिषिच्यस्व नृपतीन् धर्मवत्सलान् ॥ १०

पतिभिर्निर्जितामुर्वीं विक्रमेण महाबलैः ॥
कुरु ब्राह्मणसात् सर्वाम् अश्वमेधे महाक्रतौ ॥ ११

पृथिव्यां यानि रत्नानि गुणवन्ति गुणान्विते ।

---

1. क-ग-ब—लोपामुद्रा यथाऽगस्त्ये यथा रामे च जानकी ।
यथा नारायणे लक्ष्मीर् वाग्देवी चतुरानने ॥
गिरिजा गिरिशे यद्वद् उषा भानौ यथा स्थिरा ।
स्थिरा च वल्लभा च त्वं सुप्रीता भव भर्तृषु ॥
[अधिकः पाठः]

तान्याप्नुहि त्वं कल्याणि सुखिनी शरदां शतम् ॥ १२
यथा च त्वाऽभिनन्दामि वध्वद्य क्षौमसंवृताम् ।
तथा भूयोऽपि नन्दिष्ये सूतान् पुत्रान् गुणान्वितान् ॥ १३

वैशम्पायनः —

[1]प्राहिणोद्वासुदेवश्च पाण्डवेभ्यो रिपुञ्जयः ।
मुक्तावैडूर्यचित्राणि हैमान्याभरणानि च ॥ १४
वासांसि च महार्हाणि नानादेश्यानि माधवः ।
कम्बलाजिनरत्नानि स्पर्शवन्ति शुभानि च ॥ १५
शयनासनयानानि विविधानि महान्ति च ।
वैडूर्यरत्नचित्राणि शतशो भाजनानि च ॥ १६
रूपयौवनदाक्षिण्यैर् उपेताश्च स्वलङ्कृताः ।
[2]प्रेष्यास्सम्प्रददौ कृष्णो नानादेश्यास्सहस्रशः ॥ १७
गजान् विनीतान् भद्रांश्च सदश्वांश्च स्वलङ्कृतान् ।

---

1. घ—गत्वाऽथ यादवश्रेष्ठः पुरीं द्वारवतीं हरिः । [अधिकः पाठः]
2. क-ग-घ—राकाशशाङ्कवदनाः पद्मिनीजातिसंभवाः ।
पद्मगन्धाः पद्मवक्त्राः पद्मपत्रनिभेक्षणाः ॥
मुक्तायुक्तसुवर्णाश्च सहबिम्बुललाटिकाः ।
पीवरस्तनभारार्ताश्च शङ्खकण्ठ्यस्सुनासिकाः ॥
कृष्णदीर्घसुकेशिन्यो मुष्टिग्राह्यसुमध्यमाः ।
मृद्वङ्गरोमतिलका ह्यावर्तनिम्ननाभिकाः ।
विपुलश्रोणिफलका रम्भास्तम्भोरुयुग्मकाः ॥
[अधिकः पाठः]

रथांश्च दान्तान् सौवर्णान् शुभ्रैः पत्रैरलङ्कृतान् ॥ १८

कोटिशश्च सुवर्णानां तथैव कृतकं बहु ।

कृताकृतममेयात्मा प्राहिणोन्मधुसूदनः ॥ १९

तत्सर्वं प्रतिजग्राह धर्मराजो युधिष्ठिरः ।

अर्चयिष्यन् हृषीकेशं गोविन्दप्रियकाम्यया* ॥ २०

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्याम्
आदिपर्वणि द्विनवत्यधिकशततमोऽध्यायः ॥ १९२ ॥
॥ १३ ॥ वैवाहिकपर्वणि षष्ठोऽध्यायः ॥ ६ ॥
[अस्मिन्नध्याये २० श्लोकाः]
[वैवाहिकपर्व समाप्तम् ॥]

---

## ॥ त्रिनवत्यधिकशततमोऽध्यायः ॥

(अथ विदुरागमनपर्व)

चारद्वारा पाण्डवविवाहादिवृत्तान्तश्रवणेन अन्यैः राजभिः भीष्म-धृतराष्ट्रादीनां धिक्कारः ॥१॥ धार्तराष्ट्रैः पाण्डवान्प्रति मन्त्रालोचनम् ॥२॥ पाण्डवा हन्तव्या इति शकुनेरुक्तिः ॥ ३ ॥ पाण्डवानां हन्तुमशक्यत्वात् तैस्सह सन्धिः कर्तव्य इति सौमदत्तेरुक्तिः ॥ ४ ॥

---

वैशम्पायनः—

ततो राज्ञां चरैराप्तैश् चारस्समुपनीयते ।

पाण्डवैरुपसंपन्ना द्रौपदी बहुभिस्त्विति ॥ १

---

* भ—कोशे नात्राध्यायसमाप्तिर्दृश्यते ।

येन तद्धनुरानम्य लक्ष्यं विद्धं महात्मना ।
सोऽर्जुनो जयतां श्रेष्ठो महाबाहुर्धनुर्धरः ॥ २

यश्शल्यं मद्रराजानम् उत्क्षिप्य न्यहनद्बली ।
त्रासयंश्चापि सङ्क्रुद्धो वृक्षेण पुरुषान् रणे ॥ ३

न चास्य संभ्रमः कश्चिद् आसीत्तत्र महात्मनः ।
स भीमो भीमसन्नादश् शत्रुसैन्याङ्गमर्दनः ॥ ४

योऽसौ वीरतमोऽधावद् युद्धे दुर्योधनं तदा ।
स राजा पाण्डवश्रेष्ठश् श्रेष्ठवाग्बुद्धिवर्धनः ॥ ५

दुर्योधनस्यावरजैर् यौ युध्येतां प्रतीतवत् ।
तौ यमौ वृत्तसम्पन्नौ सम्पन्नबलविक्रमौ ॥ ६

चारैः प्रणिहितैर्लब्ध्वा राजानो विगतज्वराः ॥ ६॥

ब्रह्मरूपधरान् बुध्वा तत्र तानृषभेक्षणान् ।
पाण्डवान् मनुजेन्द्रास्ते समपद्यन्त विस्मिताः ॥ ७॥

सा सपुत्रा तदा कुन्ती दग्धा जतुगृहे श्रुता ।
सर्वभूमिपतीनां च राष्ट्राणां च यशस्विनी ॥ ८॥

पुनर्जातानिति स्मैतान् मन्यन्ते सर्वपार्थिवाः ॥ ९

व्यनिन्दंश्च तथा भीष्मं धृतराष्ट्रं च कौरवम् ।
कर्मणा सुनृशंसेन पुरोचनकृतेन वै ॥ १०

धार्मिकान् वृत्तसंपन्नान् मातुः प्रियहिते रतान् ।

यदा तानीदृशान् पार्थान् उत्सादयितुमिच्छति ॥ ११
ततस्स्वयंवरे वृत्ते धार्तराष्ट्रास्स्म भारत ।
मन्त्रयन्ते ततस्सर्वे कर्णसौबलदूषिताः ॥ १२

शकुनिः—

कश्चिच्छत्रुः कर्शनीयः पीडनीयस्तथाऽपरः ।
उत्सादनीयाः कौन्तेयास् सर्वे क्षत्रस्य मे मताः ॥ १३
एवं पराजितास्सर्वे यदि यूयं गमिष्यथ ।
अकृत्वा संविदं कां चित् तद्वत्तप्स्यन्त्यसंशयम् ॥ १४
अयं देशश्च कालश्च पाण्डवोद्धरणाय नः ।
न चेदेवं करिष्यध्वं लोके हास्या भविष्यथ ॥ १५
यमेते संश्रिता वस्तुं कामयन्ते च भूमिपम् ।
सोऽल्पवीर्यबलो राजा द्रुपदो वै मतो मम ॥ १६
यावदेतान्न जानन्ति जीवतो वृष्णिपुङ्गवाः ।
चैद्यश्च पुरुषव्याघ्रश् शिशुपालः प्रतापवान् ॥ १७
एकीभावं गता राज्ञा द्रुपदेन महात्मना ।
दुराधर्षतरा राजन् भविष्यन्ति न संशयः ॥ १८
यावदस्वरतां सर्वे प्राप्नुवन्ति नराधिपाः ।
तावदेव व्यवस्यामः पाण्डवानां वधं प्रति ॥ १९
मुक्ता जतुगृहाद्भीमाद् आशीविषमुखादिव ।

पुनर्यदीह मुच्यन्ते महन्नो भयमाविशेत् ॥ २०

तेषामिहोपयातानाम् एषां च पुरवासिनाम् ।
अन्तरे दुष्करं स्थातुं मेषयोर्महतोरिव ॥ २१

हलधृक्प्रगृहीतानि बलानि बलिनां स्वयं ।
यावन्नः कुरुसेनायां पतन्ति पतगा इव ॥ २२

तावत्सर्वाभिसारेण पुरमेतद्विनाश्यताम् ।
एतदत्र परं मन्ये प्राप्तकालं नरर्षभाः ॥ २३

वैशम्पायनः—

शकुनेर्वचनं श्रुत्वा भाषमाणस्य दुर्मतेः ।
सौमदत्तिरिदं वाक्यं जगाद परमं ततः ॥ २४

सौमदत्तिः—

प्रकृतीस्सप्त वै ज्ञात्वा आत्मनश्च परस्य च ।
तथा देशं च कालं च षड्विधांश्च नयेद्गुणान् ॥ २५

स्थानं वृद्धिं क्षयं चैव भूमिं मित्राणि विक्रमम् ।
समीक्ष्याथाभियुञ्जीत परं व्यसनपीडितम् ॥ २६

ततोऽहं पाण्डवान् मन्ये मित्रकोशसमन्वितान् ।
बलस्थान् विक्रमस्थांश्च स्वकृतैः प्रकृतिप्रियान् ॥ २७

वपुषा हि तु भूतानां नेत्राणि हृदयानि च ।
श्रोत्रं मधुरया वाचा रमयत्यर्जुनो नृणाम् ॥ २८

न तु केवलदैवेन प्रजा भावेन भेजिरे ॥ २८॥

यद्बभूव मनःकान्तं कर्मणा च चकार तत् ॥ २९

न ह्ययुक्तं न चासक्तं नानृतं न च विप्रियम् ।
भाषितं चारुभाषस्य जज्ञे पार्थस्य भारती ॥ ३०

तानेवं गुणसम्पन्नान् सम्पन्नान् राजलक्षणैः ।
न तान् पश्यामि ये शक्तास् समुच्छेत्तुं यथा बलात् ॥ ३१

प्रभावशक्तिर्विपुला मन्त्रशक्तिश्च पुष्कला ।
तथैवोत्साहशक्तिश्च पार्थेष्वभ्यधिका सदा ॥ ३२

मौलमित्रबलानां च कालज्ञो वै युधिष्ठिरः ॥ ३२॥

साम्ना दानेन भेदेन दण्डेनेति युधिष्ठिरः ।
अमित्रं यतते जेतुं न रोषेणेति मे मतिः ॥ ३३॥

परिक्रीय धनैश्शत्रून् मित्राणि च बलानि च ।
मूलं च सुदृढं कृत्वा हन्त्यरीन् पाण्डवस्तदा ॥ ३४॥

अशक्यान् पाण्डवान् मन्ये देवैरपि सवासवैः ।
येषामर्थे सदा युक्तौ कृष्णसंकर्षणावुभौ ॥ ३५॥

श्रेयश्च यदि मन्यध्वं मन्मतं यदि वो मतम् ।
संविदं पाण्डवैस्सार्धं कृत्वा याम यथागतम् ॥ ३६॥

गोपुराट्टालकैरुच्चैर् उपतल्पशतैरपि ।
गुप्तं पुरवरश्रेष्ठम् एतदद्भिश्च संवृतम् ॥ ३७॥

तृणधान्येन्धनरसैस् तथा यन्त्रायुधौषधैः ।

युक्तं बहुकवाटैश्च द्रव्यागारतुषादिकैः ॥ ३८॥

भीमोच्छ्रितमहाचक्रं बृहदट्टालसंवृतम् ।
दृढप्राकारनिर्यूहं शतघ्नीजालसंवृतम् ॥ ३९॥

ऐष्टको दारवो वप्रो मानुषश्चेति यस्स्मृतः ।
प्राकारकर्तृभिर्वीरैर् नृगर्भस्तत्र पूजितः ॥ ४०॥

तदेतन्नरगर्भेण पाण्डरेण विराजते ।
सालेनानेकतालेन सर्वतस्संवृतं पुरम् ॥ ४१॥

अनुरक्ताः प्रकृतयो द्रुपदस्य महात्मनः ।
दानमानार्चितास्सर्वे बाह्याश्चाभ्यन्तराश्च ये ॥ ४२॥

प्रतिरुद्धानिमाञ्ज्ञात्वा राजभिर्भीमविक्रमैः ।
उपयास्यन्ति दाशार्हास् समुद्योच्छ्रितायुधाः ॥ ४३॥

तस्मात् सन्धिं वयं कृत्वा धार्तराष्ट्रस्य पाण्डवैः ।
स्वराष्ट्रमेव गच्छामो यद्याप्तं वचनं मम ॥ ४४॥

एतन्मम मतं सर्वैः क्रियतां यदि रोचते ।
एतद्धि सुकृतं मन्ये क्षेमं चापि महीक्षिताम् । ४५॥

इति श्रीमहाभारते शतसाहस्रिकायां संहितायां वैयासिक्याम्
आदिपर्वणि त्रिनवत्यधिकशततमोऽध्यायः ॥ १९३ ॥
॥ १४ ॥ विदुरागमनपर्वणि प्रथमोऽध्यायः ॥ १ ॥
[अस्मिन्नध्याये ४५॥ श्लोकाः]

---

## ॥ चतुर्नवत्यधिकशततमोऽध्यायः ॥

पाण्डवा हन्तव्या एवेति कर्णस्योक्तिः ॥ १ ॥ पाञ्चालनगरं प्रति युद्धार्थं दुर्योधनादीनां गमनम् ॥ २ ॥ अर्जुनेन कर्णजयद्रथपुत्रयोर्वधः॥३॥ कर्णदुर्योधनादीनां पराजयः ॥ ४ ॥ पराजितानां तेषां हास्तिनपुरगमनम् ॥ ५ ॥ कृष्णबलरामयोः पाञ्चालपुरे वासः ॥ ६ ॥

वैशम्पायनः—

सौमदत्तेर्वचश्श्रुत्वा कर्णो वैकर्तनो वृषा ।
उवाच वचनं काले कालज्ञस्सर्वकर्मणाम् ॥ १

कर्णः—

नीतिपूर्वमिदं सर्वम् उक्तं वचनमर्थवत् ।
वचनं नाभ्यसूयामि श्रूयतां मद्वचस्स्थितिः ॥ २

द्वैधीभावो न गन्तव्यस् सर्वकर्मसु मानवैः ।
द्विधाभूतेन मनसा ह्यन्यत् कर्म न सिध्यति ॥ ३

संप्रयाणासनाभ्यां तु कर्शनेन तथैव च ।
नैतच्छक्यं पुरं हन्तुम् आक्रन्दोऽस्यामशोभनः ॥ ४

अवमर्दनकालोऽत्र मतश्चिन्तयतो मम ।
यावन्नो वृष्णयः पार्ष्णिं न गृह्णन्ति रणप्रियाः ॥ ५

प्रभवन्तो हृष्टतुष्टास् स्वबाहुबलशालिनः ।
प्राकारमवमृद्नन्तु परिघाः पूरयन्त्वपि ॥ ६

प्रस्रावयन्तु सलिलं क्रियतां विषमं समम् ।
तृणकाष्ठेन महता खातमस्य प्रपूर्यताम् ॥ ७

घुष्यतां राजसैन्येषु परेषां यो हनिष्यति ।
नागमश्वं पदातिं वा दानमानं स लप्स्यते ॥ ८

नागे दशसहस्राणि पञ्च चाश्वपदातिषु ।
रथे वै द्विगुणं नागाद् वसु दास्यन्ति पार्थिवाः ॥ ९

यश्च कामसुखे सक्तो बालश्च स्थविरश्च यः ।
अयुद्धमनसो ये च ते तु तिष्ठन्तु भीरवः ॥ १०

प्रदरश्च न दातव्यो न गन्तव्यमचोदितैः ।
यशो रक्षत भद्रं वो जेष्यामो वै वयं पुरम् ॥ ११

अनुलोमाश्च नो वातास् सर्वतो मृगपक्षिणः ।
अग्नयश्च विराजन्ते शस्त्राणि कवचानि च ॥ १२

वैशम्पायनः—

ततः कर्णवचश्श्रुत्वा धार्तराष्ट्रप्रियैषिणः ।
निर्ययुः पृथिवीपालाश् चालयन्तः परान् रणे ॥ १३

न हि तेषां मनस्सक्तिर् इन्द्रियार्थेषु सर्वशः ।
यथा पुनररिघ्नानां प्रसह्य युद्ध एव च ॥ १४

वैकर्तनपुरोवातस् सैन्धवोर्मिमहास्वनः ।
दुश्शासनमहामत्स्यो दुर्योधनमहाग्रहः ॥ १५

स राजसागरो भीमो भीमघोषप्रदर्शनः ।
अभिदुद्राव वेगेन पुरं तदपसव्यतः ॥ १६

तदनीकमनाधृष्यं शस्त्राग्निव्यालदीपितम् ।
[1]समुत्कुपितमाज्ञाय चुक्रुधुर्द्रुपदात्मजाः ॥ १७

ते मेघसमनिर्घोषैर् बलिनस्स्यन्दनोत्तमैः ।
निर्ययुर्नगरद्वारात् त्रासयन्तः परान् रणे ॥ १८

धृष्टद्युम्नश्शिखण्डी च सुमित्रः प्रियदर्शनः ।
चित्रकेतुस्सुकेतुश्च ध्वजसेनश्च वीर्यवान् ॥ १९

पुत्रा द्रुपदराजस्य बलवन्तो जयैषिणः ।
द्रुपदश्च महावीर्यः पाण्डरोष्णीषकेतनः ॥ २०

पाण्डरव्यजनच्छत्रः पाण्डरध्वजवाहनः ।
स पुत्रगणमध्यस्थश् शुशुभे राजसत्तमः ॥ २१
चन्द्रमा ज्योतिषां मध्ये पौर्णमास्यामिवोदितः ॥ २१॥

अथोद्धूतपताकाग्रम् अजिह्मगतिमव्ययम् ।
द्रुपदानीकमायान्तं कुरुसैन्यमभिद्रवत् ॥ २२॥

तयोरुभयतो जज्ञे भैरवस्तुमुलस्स्वनः ।
बलयोस्संप्रहरतोस् स्रवन्त्योस्सरितोरिव ॥ २३॥

---

1. क-ख—समुत्कूजितमाज्ञाय चुक्रुशुः
　　ग—समुत्कम्पितमाज्ञाय चुक्रुशुः

प्रकीर्णरथनागाश्वैस् तान्यनीकानि सर्वशः ।
ज्योतींषि विप्रकीर्णानि सर्वतः प्रचकाशिरे ॥ २४॥

उत्कृष्टभेरीनिनदे संप्रवृत्ते [1]महाहवे ।
अमर्षिता महात्मानः पाण्डवा निर्ययुस्ततः ॥ २५॥

रथांश्च मेघनिर्घोषान् युक्तान् परमवाजिभिः ।
धन्विनो ध्वजिनश्शुभ्रान् आस्थाय भरतर्षभाः ॥ २६॥

ततः पाण्डुसुतान् दृष्ट्वा रथस्थानात्तकार्मुकान् ।
नृपाणामभवत् कम्पो वेपथुर्हृदयेषु च ॥ २७॥

निर्यातेष्वथ पार्थेषु द्रौपदं तद्बलं रणे ।
आविशत् परमो हर्षः प्रमोदश्च जयं प्रति ॥ २८॥

स मुहूर्तं व्यतिकरस् सैन्यानामभवद्भृशम् ।
ततो द्वन्द्वमयुध्यन्त मृत्युं कृत्वा निवर्तनम् ॥ २९॥

जघ्नतुस्समरे तस्मिन् सुमित्रप्रियदर्शनौ ।
जयद्रथश्च कर्णश्च पश्यतस्सव्यसाचिनः ॥ ३०॥

अर्जुनः प्रेक्ष्य निहतौ सुमित्रप्रियदर्शनौ ।
जयद्रथसुतं तत्र जघान पितुरन्तिके ॥ ३१॥

वृषसेनाग्रजं सुबाहुं वै धनञ्जयः ।
कर्णपुत्रं महावीर्यं रथनीडादपाहरत् ॥ ३२॥

---

1. अ—दिवाकरे; स—महारवे

तौ सुतौ निहतौ दृष्ट्वा राजसिंहौ तरस्विनौ ।
नामृष्येतां महावीर्यौ प्रहारमिव सद्गजौ ॥ ३३॥

तौ जग्मतुरसम्भ्रान्तौ फल्गुनस्य रथं प्रति ।
प्रतिमुक्ततलत्राणौ त्रायमाणौ परस्परम् ॥ ३४॥

सन्निपातस्तयोरासीत् फल्गुनेन महामृधे ।
वृत्रशम्बरयोस्सङ्ख्ये वज्रिणेव महारणे ॥ ३५॥

त्रीनश्वाञ्जघ्नतुस्तत्र फल्गुनस्य नरर्षभौ ।
ततः किलिकिलाशब्दः कुरूणामभवत्तदा ॥ ३६॥

तान् हयान्निहतान् दृष्ट्वा भीमसेनः प्रतापवान् ।
निमेषान्तरमात्रेण रथमश्वैरयोजयत् । ३७॥

उपयातं रथं दृष्ट्वा दुर्योधनपुरस्सरौ ।
सौबलस्सौमदत्तिश्च समेयातां परन्तपौ ॥ ३८॥

तैः पञ्चभिरदीनात्मा भीमसेनो महाबलः ।
अयुध्यत बलैर्वीरैर् इन्द्रियार्थैरिवेश्वरः ॥ ३९॥

तैर्निरुद्धो न संत्रासं जगाम समितिञ्जयः ।
पञ्चभिर्द्विरदैर्मत्तैर् निरुद्ध इव केसरी ॥ ४०॥

तस्य ते युगपत् पञ्च पञ्चभिर्निशितैश्शरैः ।
सारथिं वाजिनश्चैव निन्युर्वैवस्वतक्षयम् ॥ ४१॥

हताश्वात् स्यन्दनश्रेष्ठाद् अवरुह्य महारथः ।

चचार विविधान् मार्गान् असिमुद्यम्य पाण्डवः ॥ ४२॥

अश्वस्कन्धेषु चक्रेषु [1]युगेष्वीषासु चैव ह ।

व्यचरत् पातयञ्शत्रून् सुपर्ण इव भोगिनः ॥ ४३॥

विधनुष्कं विकवचं विरथं च समीक्ष्य तम् ।

अभिपेतुर्नरव्याघ्रम् अर्जुनप्रमुखा रथाः ॥ ४४॥

धृष्टद्युम्नशिखण्डी च यमौ च युधि दुर्जयौ ॥ ४५

तस्मिन् [2]दाशरथे युद्धे प्रवृद्धे शरवृष्टिभिः ।

रथा ध्वजाः पताकाश्च सर्वमन्तरधीयत ॥ ४६

तत् प्रवृत्तं चिरं कालं युद्धं सममिवाभवत् ॥ ४६॥

रथेन तान् महाबाहुर् अर्जुनोऽभ्यपतत् पुनः ॥ ४७

तमापतन्तं दृष्ट्वैव महाबाहुर्धनुर्धरः ।

कर्णोऽस्त्रविदुषां श्रेष्ठो वारयामास सायकैः ॥ ४८

स तेनाभिहतः पार्थो वासविर्वज्रसन्निभान् ।

त्रीञ्शरान् सन्दधे क्रुद्धो व्यधात् कर्णस्य पाण्डवः ॥ ४९

तैश्शरैराहतं कर्णं ध्वजयष्टिमुपाश्रितम् ।

अपोवाह रथेनाशु सूतः परपुरञ्जयम् ॥ ५०

ततः पराजिते कर्णे धार्तराष्ट्रं महद्भयम् ।

---

1. क—युगेष्विष्वसनेषु च; ग—युगेष्विष्वासनेषु च

2. क-ग—अप्नरथे

विवेश समुद्रमांश्च पाण्डवान् प्रसमीक्ष्य च ॥ ५१
तत्प्रकम्पितमत्यर्थं दृष्ट्वा वै सौबलो बलम् ।
गिरा गम्भीरया वीरस् समाश्वासयतासकृत् ॥ ५२
धार्तराष्ट्रैस्ततस्सर्वैर् दुर्योधनपुरस्सरैः ।
धृतं तत्पुनरेवासीद् बलं पार्थप्रकम्पितम् ॥ ५३
ततो दुर्योधनं दृष्ट्वा भीमो भीमपराक्रमः ।
अक्रुध्यत्स महाबाहुर् अगारं जातुषं स्मरन् ॥ ५४
[1]ततस्संग्रामशिरसि ददर्श विपुलद्रुमम् ।
आयामभूतं तिष्ठन्तं स्कन्धपञ्चाशदुन्नतम् ॥ ५५
महास्कन्धं महोत्सेधं शक्रध्वजमिवोच्छ्रितम् ।
चित्रमाल्याम्बरधरं पताकाशतशोभितम् ॥ ५६
सालमुत्पाट्य पाणिभ्याम् उद्यम्य च रणे बली ।
अभिपेदे परान् सङ्ख्ये वज्रपाणिरिवासुरान् ॥ ५७
भीमसेनभयार्तानि फल्गुनाभिहतानि च ।
न शेकुस्तान्यनीकानि धार्तराष्ट्राण्निरीक्षितुम् ॥ ५८
तानि संभ्रान्तयोधानि श्रान्तवाजिगजानि च ।
दिशः प्राक्लयद्भीमो दिवीवाभ्राणि मारुतः ॥ ५९
तान् निवृत्तान् निरानन्दान् हतवारणवाजिनः ।

1. ब—पञ्चबाहुपरीणाहं पञ्चस्कन्धमिवासुरान् । [अधिकः पाठः]

नानुसस्रुर्न चाजघ्नुर् नोचुः किञ्चिच्च दारुणम् ॥ ६०

स्वमेव शिबिरं जग्मुः क्षत्रियाश्शरविक्षताः ॥ ६०॥

परेऽप्यभिययुर्हृष्टाः पुरं पौरसुखावहाः ॥ ६१

मुहूर्तमभवद्वैरं तेषां वै पाण्डवैस्सह ॥ ६१॥

यावत्तद्युद्धमभवन्महद्देवासुरोपमम् ।

तावदेवाभवच्छान्तं निवृत्ता वै महारथाः ॥ ६२॥

सुवृत्तं चक्रिरे सर्वे सुप्राप्तामब्रुवन् वधूम् ।

कृतार्थं द्रुपदं चोचुर् धृष्टद्युम्नं च पार्षतम् ॥ ६३॥

शकुनिस्सिन्धुराजश्च कर्णदुर्योधनावपि ।

तेषां तदभवद्दुःखं हृदि वाचा तु नाब्रुवन् ॥ ६४॥

ततः प्रयाता राजानस् सर्व एव यथागतम् ।

धार्तराष्ट्रा हि ते सर्वे गता नागपुरं तदा ॥ ६५॥

प्रागेव पुररोधात्तु पाण्डवैरश्वसादिनः ।

प्रेषिता गच्छतारिष्टान् अस्मानाख्यात शौरये ॥ ६६॥

ते स्वदीर्घेण कालेन गत्वा द्वारवतीं पुरीम् ।

ऊचुस्संकर्षणोपेन्द्रौ वचनं वचनक्षमौ ॥ ६७॥

कुशलं पाण्डवास्सर्वान् आहुस्स्मान्धकवृष्णयः ।

आत्मनश्चाक्षतानाहुर् विमुक्ताञ्जातुषाद् गृहात् ॥ ६८॥

समाजे द्रौपदीं स्माहुर् लब्धां राजीवलोचनाम् ।

आत्मनस्सदृशीं सर्वे शीलवृत्तसमाधिभिः ॥ ६९॥

तच्छ्रुत्वा वचनं कृष्णस् तानुवाचोत्तरं वचः ॥ ७०

सर्वमेतदहं जाने वधात्तस्य तु रक्षसः ॥ ७०॥

तत उद्योजयामास केशवश्चतुरङ्गिणीम् ।
सेना समुपयात्तूर्णं पाञ्चालनगरीं प्रति ॥ ७१॥

ततस्संकर्षणश्चैव केशवश्च महाबलः ।
यादवैस्सह सर्वैश्च पाण्डवानभिजग्मतुः ॥ ७२॥

पितृष्वसारं संपूज्य द्रुपदं च यथाविधि ।
द्रौपदीं भूषणैश्शुभ्रैर् भूषयित्वा महाधनैः ॥ ७३॥

न्यायवः पूजिता राज्ञा द्रुपदेन महात्मना ।
रेमिरे पाण्डवैस्सार्धं ते पाञ्चालपुरे तदा ॥ ७४॥

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्याम्
आदिपर्वणि चतुर्नवत्यधिकशततमोऽध्यायः ॥ १९४ ॥

॥ १४ ॥ विदुरागमनपर्वणि द्वितीयोऽध्यायः ॥ २ ॥

[अस्मिन्नध्याये ७४॥ श्लोकाः]

---

## ॥ पञ्चनवत्यधिकशततमोऽध्यायः ॥

विदुरात् ज्ञातपाण्डववृत्तान्तेन धृतराष्ट्रेण द्रौपद्यानयनार्थमाज्ञापनम् ॥ १ ॥ धृतराष्ट्रसमीपे कर्णदुर्योधनयोर्भाषणम् ॥ २ ॥ धृतराष्ट्रदुर्योधनसंवादः ॥ ३ ॥ दुर्योधनं प्रति कर्णेनोक्तं श्रुतवतो धृतराष्ट्रस्य भीष्मादिभिः सह मन्त्रणम् ॥ ४ ॥ भीष्मेण दुर्योधनादिसमीपे पाण्डवेभ्योऽर्धराज्यं दातव्यमिति स्वाभिप्रायकथनम् ॥ ५ ॥

वैशम्पायनः—

ततस्स्वयंवरे वृत्ते राजानस्सर्व एव ते ।
यथागतं विप्रजग्मुर् विदित्वा पाण्डवान् वृतान् ॥ १

अथ दुर्योधनो राजा विमना भ्रातृभिस्सह ।
अश्वत्थाम्ना मातुलेन कर्णेन च कृपेण च ॥ २

विनिवृत्तो वृतं दृष्ट्वा द्रौपद्या श्वेतवाहनम् । २॥
[1]अथ दुश्शासनं राजा मन्दं मन्दमिवाब्रवीत् ॥ ३

यद्यसौ ब्राह्मणो न स्यान्न च विन्देत द्रौपदीम् ।
न हि तं तत्त्वतो राजा वेद कश्चिद्धनञ्जयम् ॥ ४

धिगस्मत्पौरुषं पश्च यद्धरन्तीह पाण्डवाः ।
दैवमेव परं मन्ये पौरुषं तु निरर्थकम् ॥ ५

1. क-ग-ब—खिद्यच्छुष्यन्मुखो राजा दूयमानेन चेतसा।
[अधिकः पाठः]

[1]एवं संभाषमाणास्ते निन्दन्तश्च पुरोचनम् ।
[2]विविशुर्हास्तिनपुरं दीना विगतचेतसः ॥ ६
त्रस्ता विगतसङ्कल्पा दृष्ट्वा पार्थान् महौजसः ।
विमुक्तान् हव्यवाहाच्च संयुक्तान् द्रुपदेन च ॥ ७
धृष्टद्युम्नं च सञ्चिन्त्य तथैव च शिखण्डिनम् ।
द्रुपदस्यात्मजांश्चान्यान् सर्वयुद्धविशारदान् ॥ ८
[3]विदुरस्त्वथ ताञ्श्रुत्वा द्रौपद्या पाण्डवान् वृतान् ।
व्रीडितान् धार्तराष्ट्रांश्च भग्नदर्पानुपागतान् ॥ ९
ततः प्रीतमनाः क्षत्ता धृतराष्ट्रं विशाम्पते ।
उवाच कुरवो दिष्ट्या वर्धन्त इति विस्मितः ॥ १०

---

1. क-ग-घ—बध्वा चक्षूंषि नः पार्था राज्ञां च द्रुपदात्मजाम् ।
उद्वाह्य राज्ञां तैर्न्यस्तं पादं वामं पृथासुतैः ॥
विमुक्ताः कथमेतेन जतुवेश्महविर्भुजः ।
अस्माकं पौरुषं सत्वं बुद्धिश्चापि गता कुतः ॥
दैवमेव परं मन्ये पौरुषं तु निरर्थकम् ।
वयं हता मातुलाद्य विश्वस्य च पुरोचनम् ॥
अदग्ध्वा पाण्डवान् दग्ध्वा स्वयं दग्धो हुताशने ।
मत्तो मातुल मन्येऽहं पाण्डवा बुद्धिमत्तराः ।
तेषां नास्ति भयं मृत्योर् मुक्तानां जतुवेश्मनः ॥
[अधिकः पाठः]

2. क-ग-घ—पञ्चपुत्रान् किरातीं च विदुरं च महामतिम् ।
[अधिकः पाठः]

3. क-ग-घ—मुखानि धार्तराष्ट्राणां दृष्ट्वा क्षत्ता मुदाऽन्वितः ।
विकसद्वन्मुखाम्भोजः पद्मं दृष्ट्वेव भास्करम् ॥
[अधिकः पाठः]

[1]वैचित्रवीर्यस्तु तदा निशम्य विदुरस्य तत् ।
अब्रवीत् परमप्रीतो दिष्ट्या दिष्ट्येति कौरवः ॥ ११

मन्यते स वृतं पुत्रं ज्येष्ठं द्रुपदकन्यया ।
दुर्योधनमविज्ञानात् प्रज्ञाचक्षुर्नरेश्वरः ॥ १२

[2]अथ त्वाज्ञापयामास द्रौपद्या भूषणं बहु ।
आनीयतां वै कृष्णेति पुत्रं दुर्योधनं तदा ॥ १३

अथास्य पश्चाद्विदुर आचख्यौ पाण्डवान् वृतान् ।
[3]सर्वान् कुशलिनो राजन् पूजितान् द्रुपदेन च ॥ १४

एतच्छ्रुत्वा तु वचनं विदुरस्य नराधिपः ।
आकारच्छादनार्थं तु दिष्ट्या दिष्ट्येति चाब्रवीत् ॥ १५

---

1. क-ग-घ—सर्वापद्भ्यो विमुक्ताश्च विमुक्ता राजसङ्गरात् ।
कृष्णया संवृताश्चैव वीरलक्ष्म्या तथैव च ॥

वैशम्पायनः—
विदुरोक्तं वचश्श्रुत्वा सामान्यात् कौरवा इति ।
उल्ललास स हर्षेण सन्तोषभरितो नृपः ॥
प्रहर्षभरितो राजा स्तम्भीभूत इव क्षणम् ॥ [अधिकः पाठः]

2. क-ग-घ—पुत्राणां च तथा सर्वं विचित्राभरणाम्बरम् ।
[अधिकः पाठः]

3. क-ग-घ—पुत्राभिवृद्धिसन्तोषश्रवणानन्दनिर्भरम् ।
कौरवा इति सामान्यात्तु मन्येथास्तवात्मजान् ॥
वर्धिता इति मद्वाक्याद् वर्धिताः पाण्डुनन्दनाः ।
कृष्णया संवृताः पार्था विमुक्ता राजसङ्गरात् ॥
[अधिकः पाठः]

एवं विदुर भद्रं ते यदि जीवन्ति पाण्डवाः ।
[1]साध्वाचारा तथा कुन्ती सम्बन्धो द्रुपदेन च ॥ १६

बभूव परमश्लाघ्यो दिष्ट्या दिष्ट्येति चाब्रवीत् ॥ १६॥

धृतराष्ट्रः—

अन्ववाये वसोर्जातः [2]प्रकृष्टे मान्यके कुले ।
व्रतविद्यातपोवृद्धः पार्थिवानां धुरन्धरः ॥ १७॥

पुत्राश्चास्य तथा पौत्रास् सर्वे सुचरितव्रताः ।
तेषां संबन्धिनश्चान्ये बहवस्सुमहाबलाः ॥ १८॥

यथैव पाण्डोः पुत्रास्ते तथैवाभ्यधिकं मम ।
[3]सेयमभ्यधिकाऽन्येभ्यो वृत्तिर्विदुर मे मता ॥ १९॥

---

1. क-ग-घ—न ममा मे तनौ प्रीतिस् त्वद्वाक्यामृतसंभवा ।
आलिङ्गस्वेति मां क्षत्तः पुनः पुनरभाषत ॥
दुर्भावगोपनार्थाय बाहू विस्तार्य दूरतः ।
एह्येहि विदुर प्राज्ञ मामालिङ्गितुमर्हसि ॥
इत्युक्त्वाऽऽकृष्य विदुरं ज्ञात्वाऽन्तर्भावमात्मनः ।
आलिलिङ्ग दृढं दोर्भ्यां निरुच्छ्वासं दुरात्मवान् ॥
[अधिकः पाठः]

2. क-ग—प्रवरो मात्स्यके कुले । ख—प्रभवो मान्यके कुले ।
घ—प्रवरे

3. क-ग-घ—या प्रीतिः पाण्डुपुत्रेषु न साऽन्यत्र ममाभि भो ।
नित्योऽयं निश्चितः क्षत्तस् सत्यं सत्येन ते शपे ॥
[अधिकः पाठः]

[1]यत्ते कुशलिनो वीरा मित्रवन्तश्च मे सुताः ॥ २०

का हि द्रुपदमासाद्य मित्रं क्षत्तस्सबान्धवम् । *

न बुभूषेद्भवस्यार्थं गतश्रीरपि पार्थिवः ॥ २१

वैशम्पायनः—

तं तथा भाषमाणं तु विदुरः प्रत्यभाषत ।

विदुरः—

[2]नित्या भवतु ते बुद्धिर् एषा राजञ्छतं समाः ॥ २२

वैशम्पायनः—

इत्युक्त्वा प्रययौ राजन् विदुरस्स्वं निवेशनम् ॥ २२॥

ततो दुर्योधनश्चैव राधेयश्च विशाम्पते ।

धृतराष्ट्रस्य तच्छ्रुत्वा वचोऽब्रूतामिदं ततः ॥ २३॥

दुर्योधनः—

सन्निधौ विदुरस्य त्वां वक्तुं न नृप शक्नुमः ॥ २४

विविक्तमिति वक्ष्यावः किं तवेदं चिकीर्षितम् ॥ २४॥

सपत्नवृद्धिं यत्तात मन्यसे वृद्धिमात्मनः ।

---

1. क-ग-घ—मित्रवन्तोऽभवन् पुत्रा दुर्योधनमुखास्सदा ।
मया श्रुता यदा वह्नेर् दग्धाः पाण्डुसुता इति ॥ १
तदारभ्य दिवारात्रं न भोक्ष्ये न स्वपामि च ।
असहायाश्च मे पुत्रा लूनपक्षा इव द्विजाः ॥ २
तत्त्वतश्शृणु मे क्षत्तस् सुसहायास्सुता मम ।
अद्य मे स्थिरसाम्राज्यम् आचन्द्रार्कं ममाभवत् ॥ ३
[अधिकः पाठः]

2. क-ग-घ—बुद्धिरेषा महाराज रूढमूला च ते हृदि ।
कर्मणा मनसा वाचा स्थिरो भव जनेश्वर ॥[अधिकः पाठः]

अभिष्टौषि च यत् क्षत्तुस् समीपे द्विपदांवर ॥ २५॥

अन्यास्मिन्नृप कर्तव्ये त्वमन्यत् कुरुषेऽनघ ।
तेषां बलविघातो हि कर्तव्यस्तात नित्यशः ॥ २६॥

ते वयं प्राप्तकालस्य चिकित्सां मन्त्रयामहे ।
यथा नो न ग्रसेयुस्ते सपुत्रगणबान्धवान्* ॥ २७॥

वैशम्पायनः--

दुर्योधनेनैवमुक्तः कर्णेन च विशाम्पते ।
पुत्रं च सूतपुत्रं च धृतराष्ट्रोऽब्रवीदिदम् ॥ २८॥

धृतराष्ट्रः—

अहमप्येवमेवैतच् चिन्तयामि यथा युवाम् ।
विवृतं नाहमिच्छामि त्वाकारं विदुरं प्रति ॥ २९॥
अतस्तेषां गुणानेव कीर्तयामि विशेषतः ॥ ३०
न च बुध्येत विदुरो ममाभिप्रायमिङ्गितैः ॥ ३०॥
यच्च वै मन्यसे प्राप्तं तद्ब्रूहि त्वं सुयोधन ॥ ३१
राधेय मन्यसे त्वं च यत् प्राप्तं तद्ब्रवीहि मे ॥ ३१॥

दुर्योधनः—

प्रच्छन्नैः कुशलैर्विप्रैस् सुतुष्टैराप्तकारिभिः ।
कुन्तीपुत्रान् भेदयामो माद्रीपुत्रौ च पाण्डवौ ॥ ३२॥

---

* अ-क-ख-ग—कोशेषु अर्धवाक्यायसमाप्तिर्दृश्यते ।

अथवा द्रुपदो राजा महद्भिर्धनसञ्चयैः ।
पुत्राश्चास्य प्रलोभ्यन्ताम् अमात्याश्चैव सर्वशः ॥ ३३॥
परित्यजेयू राजानं कुन्तीपुत्रं युधिष्ठिरम् ।
अथ तत्रैव नैतेषां निवासं रोचयन्तु ते ॥ ३४॥
इहैषां दोषवद्वासं वर्णयन्तु पृथक्पृथक् ॥ ३५
ते भिद्यमानास्तत्रैव मनः कुर्वन्तु पाण्डवाः ॥ ३५॥
अथवा कुशलाः केचिद् उपायकुशलैर्नरैः ।
इतरेतरतः पार्थान् भेदयन्त्वनुरागतः ॥ ३६॥
व्युत्थापयन्तु तां कृष्णां बहुत्वात् सुकरं हि तत् । ३७
अथवा पाण्डवांस्तस्यां भेदयन्तु ततश्च ताम् ॥ ३७॥
भीमसेनस्य वा राजन्नुपायकुशलैर्नरैः ।
मृत्युर्विधीयतां छन्नैस् स हि तेषां बलाधिकः ॥ ३८॥
तस्मिंस्तु निहते राजन् हतोत्साहा हतौजसः ।
यतिष्यन्ते न राज्याय स हि तेषां व्यपाश्रयः ॥ ३९॥
अजेयो ह्यर्जुनस्सङ्ख्ये पृष्ठगोपे वृकोदरे ।
तमृते फल्गुनो युद्धे राधेयस्य न पादभाक् ॥ ४०॥
ते जानन्तो हि दौर्बल्यं भीमसेने हते सति ।
अस्मान् बलवतो मत्वा न शिष्यन्त्यबलीयसः ॥ ४१॥
इहागतेषु पार्थेषु निदेशवशवर्तिषु ।

प्रवर्तिष्यामहे राजन् यथाश्रद्धं यथासुखम् ॥ ४२॥

दर्पं विदधतां तेषां केचिदत्र मनस्विनः ।
द्रुपदस्यात्मजा राजंस् ते भिद्यन्तां ततः परैः ॥ ४३॥

अथवा दर्शनीयाभिः प्रमदाभिर्विलोभ्यताम् ।
एकैकः पाण्डुपुत्राणां ततः कृष्णा विरुध्यताम् ॥ ४४॥

प्रेष्यतां वाऽपि राजेन्द्र तेषामागमनाय हि ।
तेऽल्पोपहारैस्सन्धाय वध्यन्तामाप्तकारिभिः ॥ ४५॥

एतेषामप्युपायानां निर्दोषो यो मतस्तव ।
तस्य प्रयोगमातिष्ठ पुरा कालोऽतिवर्तते ॥ ४६॥

यावद्ध्यकृतविश्वासा द्रुपदे पार्थिवर्षभे ।
तावदेव हि शक्यास्ते न शक्यास्तु ततः परम् ॥ ४७॥

सैषा मम मती राजन् पाण्डवान् प्रति दृश्यते ।
साध्वी वा यदि वाऽसाध्वी किं वा राधेय मन्यसे* ॥ ४८॥

**कर्णः—**

दुर्योधन तव प्रज्ञा न सम्यगिति मे मतिः ।
न ह्युपायेन शक्यास्ते पाण्डवाः कुरुनन्दन ॥ ४९॥

पूर्वमेव हि ते सर्वैर् उपायैर्य[1]तितास्त्वया ।

---

* अ-क-ख-ग—कोशेषु अत्रैवाध्यायसमाप्तिर्दृश्यते ।

1. अ—यति

निगृहीतुं त्वया वीराश् शकिता न तु भारत ॥ ५०॥
इहैव वर्तमानास्ते समीपे तव पार्थिव ।
अजातपक्षाश्शिशवो न शक्यास्तव बाधितुम् ॥ ५१॥
जातपक्षा विदेशस्था विवृद्धास्सर्वे एव ते ।
नोपायसाध्याः कौन्तेया ममैषा मतिरच्युता ॥ ५२॥
न च ते व्यसनैश्शक्या योक्तुं दृष्टगुणा हि ते ।
शक्ताः खल्वीप्सवश्चैव पितृपैतामहं पदम् ॥ ५३॥
परस्परेभ्यो भेदश्च नाधातुं तेषु शक्यते ।
एकस्यां हि यथा पत्न्यां न भिद्यन्ते कथञ्चन ॥ ५४॥
न चापि कृष्णा शक्येत तेभ्यो भेदयितुं परैः ।
परिद्यूनान् वृतवती किमुताद्य प्रतापिनः ॥ ५५॥
ईप्सितश्च गुणस्त्रीणाम् एकस्यां बहुभर्तृता ।
तं च प्राप्तवती कृष्णा सा न भेदयितुं क्षमा ॥ ५६॥
आर्यवृत्तश्च पाञ्चालस् स च राजा धृतव्रतः ।
न सन्त्यक्ष्यति कौन्तेयान् राज्यदानैरपि ध्रुवम् ॥ ५७॥
तथाऽस्य पुत्रो गुणवान् अनुरक्तश्च पाण्डवान् ।
तस्मान्नोपायसाध्यांस्तान् अहं मन्ये कथञ्चन ॥ ५८॥
इदमद्य क्षमं कर्तुम् अस्माकं भरतर्षभ ॥ ५९
यावन्न कृतमूलाश्च पाण्डवेया विशाम्पते ।

तावत् प्रहरणीयास्ते रोचतां तत्र विक्रमः ॥ ६०
अस्मत्पक्षो महानश्च यावत् पाञ्चालको लघुः ।
तावत् प्रहरणं तेषां क्रियतामिति रोचये ॥ ६१
वाहनानि प्रभूतानि मित्राणि बहुलानि च ।
यावन्न तेषां गान्धारे तावदेवाशु विक्रम ॥ ६२
यावच्च राजा पाञ्चालो नोद्यमे कुरुते मनः ।
कुन्तीपुत्रैर्महावीर्यैस् तावदेवाशु विक्रम ॥ ६३
सदा च वैरी द्रुपदस् सततं निकृतस्त्वया ।
यावन्न वर्धते मित्रै रोचतां तत्र विक्रमः ॥ ६४
यावन्नायाति वार्ष्णेयः कर्षन् यादववाहिनीम् ।
राज्यार्थे पाण्डवेयानां तावदेवाशु विक्रम ॥ ६५
वसूनि विविधान् भोगान् राज्यमेव च केवलम् ।
नासाध्यमस्ति कृष्णस्य पाण्डवार्थे विशाम्पते ॥ ६६
विक्रमेण मही प्राप्ता भरतेन महात्मना ।
विक्रमेणैव लोकांस्त्रीन् जितवान् पाकशासनः ॥ ६७
विक्रमं च प्रशंसन्ति क्षत्रियस्य विशाम्पते ।
स्वको हि धर्मश्शूराणां विक्रमः पार्थिवर्षभ ॥ ६८
ते बलेन वयं राजन् महता चतुरङ्गिणा ।
प्रमथ्य द्रुपदं शीघ्रम् आनयामेह पाण्डवान् ॥ ६९

न हि साम्ना न भेदेन नच दानेन पाण्डवाः ।
शक्यास्साधयितुं तस्माद् विक्रमेणैव ताञ्जहि ॥ ७०
विक्रमेणैव जित्वेमाम् अखिलां भुङ्क्ष्व मेदिनीम् ।
नान्यमत्र प्रपश्यामि कार्योपायं जनाधिप ॥ ७१

वैशम्पायनः—
श्रुत्वा स राधेयवचो धृतराष्ट्रः प्रतापवान् ।
अभिपूज्य ततः पश्चाद् इदं वचनमब्रवीत् ॥ ७२

धृतराष्ट्रः—
उपपन्नं महाप्राज्ञे कृतास्त्रे सूतनन्दने ।
त्वयि विक्रमसंपन्नम् इदं वचनमीदृशम् ॥ ७३
भूय एव तु भीष्मश्च द्रोणो विदुर एव च ।
युवां च कुरुतं बुद्धिं भवेद्यावत् सुखोदयः ॥ ७४

वैशम्पायनः—
तत आनाय्य तान् सर्वान् मन्त्रिणस्सुमहायशाः ।
धृतराष्ट्रो महाराज मन्त्रयामास वै तदा* ॥ ७५

भीष्मः—
न रोचते विक्रमस्तु पाण्डुपुत्रैः कथञ्चन ।
यथैव धृतराष्ट्रो मे तथा पाण्डुरसंशयम् ॥ ७६
गान्धार्याश्च यथा पुत्रास्तथा कुन्तीसुता मताः ।
यथा च मम ते रक्ष्या धृतराष्ट्र तथा तव ॥ ७७
यथा च मम राज्ञश्च तथा दुर्योधनस्य ते ।

---

* अ-क-ख-ग—कोशेषु अत्रैवाध्यायसमाप्तिर्दृश्यते ।

तथा कुरूणां सर्वेषाम् अन्येषामपि पार्थिव ॥ ७८

एवं गते विग्रहं तैर्न रोचे
सन्धाय वीरैर्दीयतामद्य भूमिः ।
तेषामपीदं प्रपितामहानां
राज्यं पितुश्चैव कुरूत्तमानाम् ॥ ७९

दुर्योधन यथा राज्यं त्वमिदं तात पश्यसि ।
मम पैतृकमेवेति तथा तेषामपि प्रभो ॥ ८०
यदि राज्यं न ते प्राप्ताः पाण्डवेयास्तरस्विनः ।
कुत एतत्तवापीदं भारतस्यापि कस्य चित् ॥ ८१
अथ धर्मेण राज्यं त्वं प्राप्तवान् भरतर्षभ ।
तेऽपि राज्यमनुप्राप्ताः पूर्वमेव न संशयः ॥ ८२
मधुरेणैवमुक्त्वा तान् राज्यस्यार्धं प्रदीयताम् ।
एतद्धि पुरुषव्याघ्र हितं सर्वजनस्य नः ॥ ८३
अतोऽन्यथा चेत् क्रियते अहितं नो भविष्यति ।
तवाप्यधर्मस्सकलो भविष्यति न संशयः ॥ ८४
त्वय्यप्यकीर्तिर्विपुला भविष्यति न संशयः ।
कीर्तिरक्षणमातिष्ठेत् कीर्तिर्हि विमलं फलम् ॥ ८५
नष्टकीर्तेर्मनुष्यस्य जीवितं ह्यफलं स्मृतम् ॥ ८५॥
यावत्कीर्तिर्मनुष्यस्य लोके भवति भारत ।
तावज्जीवति गान्धारे नष्टकीर्तिस्तु नश्यति ॥ ८६॥

तदिदं समुपातिष्ठ धर्मं कुरुकुलोचितम् ।
अनुरूपं महाबाहो पूर्वेषामात्मनः कुरु ॥ ८७॥
दिष्ट्या चरन्ति ते वीरा दिष्ट्या जीवति सा पृथा ।
दिष्ट्या पुरोचनः पापो न सकामोऽत्ययं गतः ॥ ८८॥
तदाप्रभृति गान्धारे न शक्नोम्यभिवीक्षितुम् ।
[1]अदाह्यो यदा पार्थास् § त्वमग्नौ जतुवेश्मनि ॥ ८९॥
लोके प्राणभृतां किञ्चिच् छ्रुत्वा कुन्तीं तथागताम् ।
[2]दुःखं तु जायते राजन् भवान् सर्वस्य कारणम् ॥ ९०॥
न चापि दोषेण तथा लोको वेत्ति पुरोचनम् ।
यथा त्वां पुरुषव्याघ्र लोको दोषेण गच्छति ॥ ९१॥
तदिदं जीवितं तेषां तव किल्बिषनाशनम् ।
सम्मन्तव्यं महाराज पाण्डवानां च दर्शनम् ॥ ९२॥
न चापि तेषां वीराणां जयतां कुरुनन्दन ।
पित्र्योंशश्शक्य आदातुम् अपि वज्रभृता स्वयम् ॥ ९३॥
[3]ते हि धर्मे स्थितास्सर्वे सर्वे चैवैकचेतसः ।

---

1. अ-कोशे इदमर्धं न दृश्यते § क-ग-घ—सत्वतो
2. अ-कोशे इदमर्धमपि न दृश्यते ।
3. ब-वैशम्पायनः—
धृतराष्ट्रो महाराज मन्त्रयामास तैस्सह ।
भीष्मः—
न रोचते विग्रहो मे पाण्डुपुत्रैः कदा चन ।
यथैव धृतराष्ट्रो मे तथा पाण्डुर्न संशयः ।

अधर्मेण निरस्ताश्च तुल्ये राज्ये च धर्मतः ॥ ९४॥

यदि धर्मस्त्वया कार्यो यदि कार्यं प्रियं च मे ।
क्षेमं च यदि कर्तव्यं राज्यं तेभ्यः प्रयच्छताम् ॥ ९५॥

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्याम्
आदिपर्वणि पञ्चनवत्यधिकशततमोऽध्यायः ॥ १९५ ॥
॥ १४ ॥ विदुरागमनपर्वणि तृतीयोऽध्यायः ॥ ३ ॥
[अस्मिन्नध्याये ९५॥ श्लोकाः]

---

## ॥ षण्णवत्यधिकशततमोऽध्यायः ॥

पाण्डवाः संविभज्या इति द्रोणवचनम् ॥ १ ॥ तद्विरोधितया कर्णेन विनिन्द्यवृत्तान्तकथनम् ॥ २ ॥ मदुक्तं न क्रियते चेत् कुरवो विनङ्क्ष्यन्तीति द्रोणेनोक्तिः ॥ ३ ॥ भीष्मद्रोणाभ्यामुक्तमेवावश्यं करणीयं पाण्डवा जेतुं न शक्याः, दुर्योधनादीनां वचनं मा कार्षीरिति धृतराष्ट्रं प्रति विदुरस्योक्तिः ॥ ४ ॥

---

द्रोणः—

मन्त्राय समुपानीतैर् धृतराष्ट्र हितैर्नृप ।
धर्म्यं पथ्यं यशस्यं च वाच्यमित्यनुशुश्रुमः ॥ १

ममाप्येषा मतिस्तात या भीष्मस्य महात्मनः ।
संविभज्यास्तु कौन्तेया धर्म एष सनातनः ॥ २

प्रेष्यतां द्रुपदायाशु नरः कश्चित् प्रियंवदः ।
बहुलं रत्नमादाय तेषामर्थाय भारत ॥ ३

मिथः कृत्यं च तस्मै स आदाय बहु गच्छतु ॥ ३॥
वृद्धिं च परमां ब्रूयात् तत्संयोगोद्भवां तथा ॥ ४
सुप्रीयमाणं त्वां ब्रूयाद् राजन् दुर्योधनं तथा ।
असकृद्द्रुपदे चैव धृष्टद्युम्ने च भारत ॥ ५
उचितत्वं प्रियत्वं च योगस्यापि च वर्णयेत् ।
पुनः पुनश्च कौन्तेयान् माद्रीपुत्रौ च सान्त्वयेत् ॥ ६
हिरण्मयानि शुभ्राणि बहून्याभरणानि च ।
वचनात्तव राजेन्द्र द्रौपद्यास्सम्प्रयच्छतु ॥ ७
तथा द्रुपदपुत्राणां सर्वेषां भरतर्षभ ।
पाण्डवानां च सर्वेषां कुन्त्या युक्तानि यानि च ॥ ८
दत्त्वा तानि महार्हाणि पाण्डवान् सम्प्रहर्षय ॥ ८॥
एवं सान्त्वसमायुक्तं द्रुपदं पाण्डवैस्सह ।
उक्त्वा सोऽनन्तरं ब्रूयात् तेषामागमनं प्रति ॥ ९॥
अनुज्ञातेषु वीरेषु बलं गच्छतु शोभनम् ॥ १०
दुश्शासनो विकर्णश्च पाण्डवानानयत्विह ॥ १०॥
ततस्ते पार्थिवश्रेष्ठाः पूज्यमानास्सदा त्वया ।
प्रकृतीनामनुमते पदे स्थास्यन्ति पैतृके ॥ ११॥
एवं तव महाराज तेषु पुत्रेषु चैव हि ।
वृत्तमौपयिकं मन्ये भीष्मेण सह भारत ॥ १२॥

कर्णः—

योजितावर्थमानाभ्यां सर्वकार्येष्वनन्तरौ ।
न मन्त्रयेतां त्वच्छ्रेयः किमद्भुततरं ततः ॥ १३॥
दुष्टेन मनसा यो वै प्रच्छन्नेनान्तरात्मना ।
ब्रूयान्निश्श्रेयसं नैव कथं कुर्यात् सतां मतम् ॥ १४॥
न मित्राण्यर्थकृच्छ्रेपु श्रेयसे वेतराय वा ।
विधिपूर्वं हि सर्वस्य दुःखं वा यदि वा सुखम् ॥ १५॥
कृतप्रज्ञोऽकृतप्रज्ञो बालो वृद्धश्च मानवः ।
ससहायोऽसहायश्च सर्वं सर्वत्र विन्दति ॥ १६॥
श्रूयते हि पुरा कश्चिद् [1]विनिन्द इति श्रुतः ।
आसीद्राजगृहे राजा मागधानां महीपतिः ॥ १७॥
स हीनः करणैस्सर्वैर् उच्छ्वासपरमो नृपः ।
अमात्यसंस्थस्सर्वेषु कार्येष्वेवाभवत्तदा ॥ १८॥
तस्यामात्या बभूवुस्ते अन्योन्यसहितास्तदा ॥ १९
तस्यामात्यो महाकर्णिर् बभूवैकेश्वरः पुरा ।
स लब्धबलमात्मानं मन्यमानोऽवमन्यते ॥ २०
स राज्ञो वसुरत्नानि स्त्रियो भोज्यानि यानि च ।
आददे सर्वतो मूढ ऐश्वर्यं च स्वयं तदा ॥ २१

1. अ—अम्बरीष इति

तदादाय च लुब्धस्य लाभाल्लोभः प्रवर्तते ।
तथा हि सर्वमादाय राज्यमस्य जिहीर्षति ॥ २२

हीनस्य करणैस्सर्वैर् उच्छ्वासपरमस्य च ।
यतमानो न शक्नोति राज्यं कर्तुमिति श्रुतिः ॥ २३

किमन्यद्विहिता देव तस्य कापुरुषेन्द्रता ।
यदि ते विहितं राज्यं भविष्यति न संशयः ॥ २४

मिषतस्सर्वलोकस्य स्थास्यते त्वयि तद्ध्रुवम् ।
अतोऽन्यथा चेद्विहितं यतमानो न लप्स्यसे ॥ २५

एवं विद्वन्नुपादत्स्व मन्त्रिणां साध्वसाधुताम् ।
दुष्टानां चैव बोद्धव्यम् अदुष्टानां चैव भाषितम् ॥ २६

द्रोणः—

विद्म ते भावदोषेण यदर्थमिदमुच्यते ।
दुष्टः पाण्डवहेतोस्त्वं दोषं ख्यापयसे च नः ॥ २७

हितं तु परमं कर्ण ब्रवीमि कुरुवर्धनम् ।
अथ त्वं मन्यसे दुष्टं ब्रूहि यत् परमं हितम् ॥ २८

अतोऽन्यथा चेत् क्रियते यद्ब्रवीमि परं हितम् ।
कुरवोऽपि नशिष्यन्ति नचिरेणैव मे मतिः* ॥ २९

विदुरः—

राजन्निस्संशयं श्रेयो वाच्यस्त्वमसि बान्धवैः ।

---

* अ-क-ख-ग—कोशेषु अत्रैवाध्यायसमाप्तिर्दृश्यते ।

न त्वं शुश्रूषमाणो हि वाक्यं संप्रति भाषसि ॥ ३०

हितं हि तव तद्वाक्यम् उक्तवान् कुरुसत्तमः ।
भीष्मश्शान्तनवो राजा महावीर्यपराक्रमः ॥ ३१

तथा द्रोणेन बहुधा भाषितं हितमुत्तमम् ।
तच्च राधासुतः कर्णो मन्यते न हितं वचः ॥ ३२

चिन्तयंश्च न पश्यामि राजंस्तव सुहृत्तमम् ।
आभ्यां पुरुषसिंहाभ्यां यो वा स्यात् प्रज्ञयाऽधिकः ॥ ३३

इमौ हि वृद्धौ वयसा राजनीतिविशारदौ ।
समानौ त्वयि राजेन्द्र तेषु पाण्डुसुतेषु च ॥ ३४

धर्मे चानवमौ राजन् सत्यतायां च भारत ।
रामाद्दाशरथेश्चैव गयाच्चैव न संशयः ॥ ३५

न चोक्तवन्तावश्रेयः पुरस्तादपि किञ्चन ।
न चाप्यपकृतं किञ्चिद् अनयोर्लक्ष्यते त्वयि ॥ ३६

ताविमौ पुरुषव्याघ्रावनागसि नृप त्वयि ।
न मन्त्रयेतां त्वच्छ्रेयः कथं सत्यपराक्रमौ ॥ ३७

प्रज्ञावन्तौ नृपश्रेष्ठावस्मिँल्लोके नराधिप ।
त्वन्निमित्तमतो नेमौ किञ्चिज्जिह्मं वदिष्यतः ॥ ३८

इति मे नैष्ठिकी बुद्धिर् वर्तते कुरुनन्दन ।

न चार्थहेतोर्धर्मज्ञौ वक्ष्यतः पक्षसंश्रितम् ॥ ३९

एतद्धि परमं श्रेयो मेनाते तव भारत ॥ ३९॥

[1]अथ ते हृदये राजन् विशेषस्तेषु वर्तते ।
अन्तरस्थं विवृण्वानाश् श्रेयः कुर्युर्न ते ध्रुवम् ॥ ४०॥

एतदर्थं महात्मानाविमौ राजन् महाद्युती ।
नोचतुर्विवृतं किञ्चिन्न ह्येष तव निश्चयः ॥ ४१॥

तथाप्यशक्यतां तेषाम् आहतुः पुरुषर्षभौ ।
तत् तथा पुरुषव्याघ्र तव तद्भद्रमस्तु ते ॥ ४२॥

कथं हि पाण्डवश्श्रीमान सव्यसाची धनञ्जयः ।
शक्यो हि जेतुं सङ्ग्रामे राजन् मघवताऽपि हि ॥ ४३॥

भीमसेनो महाबाहुर् नागायुतबलो महान् ।
कथं स्म युधि शक्येत विजेतुममरैरपि ॥ ४४॥

तथैव कृतिनौ युद्धे यमौ यमसुताविव ।
कथं विषहितुं शक्यौ रणे जीवितुमिच्छता ॥ ४५॥

यस्मिन् धृतिरनुक्रोशः क्षमा सत्यं पराक्रमः ।
नित्यानि पाण्डवे ज्येष्ठे स जयी न कथं रणे ॥ ४६॥

1. क-ग-घ—दुर्योधनप्रभृतयः पुत्रा राजन् यथा तव ।
तथैव पाण्डवेयास्ते पुत्रा राजन् न संशयः ॥
तेषु चेदहितं किञ्चिन्मन्त्रयेयुरबुद्धयः ।
मन्त्रिणस्ते न ते श्रेयः प्रपश्यन्ति विशेषतः ॥
[अधिकः पाठः]

येषां पक्षधरो रामो येषां मन्त्री च केशवः ।
किं नु तैरजितं सङ्ख्ये येषां पक्षे च सात्यकिः ॥　४७॥
द्रुपदश्श्वशुरो येषां येषां स्यालाश्च पार्षताः ।
धृष्टद्युम्नमुखा वीरा भ्रातरो द्रुपदात्मजाः ॥　४८॥
चैद्यश्च येषां भ्राता च शिशुपालो महारथः ।
सोऽशक्यतां च विज्ञाय तेषां युद्धेन भारत ।　४९॥
दायाद्यतां च धर्मेण सम्यक् तेषु समाचर ॥　५०
इदं निर्दिष्टमयशः पुरोचनकृतं महत् ।
तेषामनुग्रहेणाद्य राजन् प्रक्षालयात्मनः ॥　५१
तेषामनुग्रहश्चायं सर्वेषां चैव नः कुले ।
जीविते परमं श्रेयः क्षत्रस्य च विवर्धनम् ॥　५२
द्रुपदोऽपि महान् राजा कृतवैरश्च नः पुरा ।
तस्य सङ्ग्रहणं श्रेयस् स्वपक्षस्य च वर्धनम् ॥　५३
बलवन्तश्च दाशार्हा बहवश्च विशाम्पते ।
यतः कृष्णस्ततस्ते स्युर् यतः कृष्णस्ततो जयः ॥　५४
यच्च सान्त्वेन शक्येत कार्यं साधयितुं नृप ।
को दैवशप्तस्तत् कर्तुं विग्रहेण समाचरेत् ॥　५५
श्रुत्वा च जीवतः पार्थान् पौरजानपदो जनः ।
बलवद्दर्शने हृष्टस् तेषां राजन् कुरु प्रियम् ॥　५६

दुर्योधनश्च कर्णश्च शकुनिश्चापि सौबलः ।
अधर्माश्चापि दुष्प्रज्ञा बाला मैषां वचः कृथाः ॥ ५७
उक्तमेतन्मया राजन् पुरा गुणवतस्तव ।
[1]दुर्योधनापराधेन प्रज्ञेयं तव नश्यति ॥ ५८

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्याम्
आदिपर्वणि षण्णवत्यधिकशततमोऽध्यायः ॥ १९६ ॥
॥ १४ ॥ विदुरागमनपर्वणि चतुर्थोऽध्यायः ॥ ४ ॥
[अस्मिन्नध्याये ५८ श्लोकाः]

---

1. क-ग-घ—अजय्याः पाण्डवा युद्धे हरेण हरिणाऽपि वा ।
त्रैलोक्येनापि भूपाल किमु तैः खलु मानवैः ॥ १
दैवानुकूलाः कौन्तेया दैवं तेषां परायणम् ।
प्रत्यक्षमेतत् सर्वेषां मुक्ता जतुगृहानलात् ॥ २
जित्वा गन्धर्वराजानं धौम्यं प्राप्य पुरोहितम् ।
पाञ्चालनगरं प्राप्य हत्वा लक्ष्यममानुषम् ॥ ३
अनर्घ्यं धनुरायम्य शिरोभिस्सह भूभृताम् ।
चैद्यमागधकर्णाद्यैः किं कृतं तत्र भूमिपैः ॥ ४
अरूढमूलाः पार्थाश्च दरिद्रा निर्धना इति ।
जेतुं शक्या न मन्येथा अजय्याः पाण्डवास्सुरैः ॥ ५
यावत्तिष्ठति लोकेऽस्मिन् कृष्णो यादववंशजः ।
मुरारिः केशिहन्ता च लीलामानुषविग्रहः ॥ ६
प्रणतार्तिहरो योगी केशवः क्लेशनाशनः ।
भक्तानुवत्सलो भक्तस् स्वान्तवेश्मगृही तथा ॥ ७
चतुस्सागरपर्यन्तां केवलं पृथिवीं न हि ।
धर्मात्मजो महाराज तावत् त्रैलोक्यमर्हति ॥ ८
अलं कर्णनया बुध्या नोत्साहय सुयोधनम् ।
शकुने गच्छ मा गाधं निरयं कौरवैस्सह ॥ ९
पाण्डवाश्च वयं सर्वे भूमिपालास्सबान्धवाः ।

## ॥ सप्तनवत्यधिकशततमोऽध्यायः ॥

धृतराष्ट्राज्ञया विदुरस्य द्रुपदनगरगमनम् ॥ १ ॥ तत्र श्रीकृष्णादीनां समीपे धृतराष्ट्रसन्देशकथनम् ॥२॥ पाण्डवानां हास्तिनपुरं प्रति गमनाय श्रीकृष्णद्रुपदयोरभ्यनुज्ञा ॥ ३ ॥ पृथाविदुरसंवादः ॥ ४ ॥ द्रुपदेन पारिबर्हदानम् ॥ ५ ॥ पाण्डवानां हास्तिनपुरप्रवेशः ॥ ६ ॥ प्रत्युद्गमनायागतैः कौरवैस्सह प्रस्थितानां पाण्डवानां भीष्मादिवन्दनपुरस्सरं गृहप्रवेशः ॥७॥

धृतराष्ट्रः—

भीष्मश्शान्तनवश्चैव द्रोणश्चैव महामतिः ।

पूर्वतोऽनुवृत्तम्—

वृष्ण्यन्धकपुरोगाश्च यादवास्सहकेशवाः ॥ १०

सर्वे संभूय जीवाम सपुत्रपशुबान्धवाः ॥ १०॥

बोधयध्वं तथा यूयं तथैव शरदां शतम् ।

मा पुत्रवशगो भूप तव पुत्रस्सुदुर्मतिः ॥ ११॥

आनीय पाण्डवान् साधून् पुत्रांश्च सह सर्वशः ।

अभेदेन निरीक्षस्व न भेदं चक्षुषोः कुरु ॥ १२॥

मनसा स्नेहपूर्वेण निर्भेदो नखमांसवत् ॥ १३

धृतराष्ट्रः—

पार्थिवार्थे प्रियं ब्रूहि नाप्रियं सूतनन्दन ।

पुत्र त्वं च न मे ब्रूहि पार्थानामहितं क्वचित् ॥ १४

दुर्योधनमसन्मार्गान्निवर्तय महामते ॥ १४॥

[अधिकः पाठः]

च—शकुने प्रवर्तय त्वं च सद्भिराचरिते पथि ॥

प्रथमं मम पुत्रास्ते पाण्डवा धर्मचारिणः ।

सत्यं ब्रवीम्यहं क्षत्तः पश्चाद्दुर्योधनादयः ॥

मम भाग्यवशान्मुक्ता घोराज्जतुगृहानलात् ।

लोकापवादान्मुक्तोऽहं चक्षुषाऽन्धस्य ते मम ।

उक्त्वेत्थमात्मजं कर्णं शकुनिं चापि सौबलम् ।

आहूय विदुरं भूपं पृथक् चेदमुवाच ह ॥ [अधिकः पाठः]

हितं परमकं वाक्यं त्वं च सत्यं ब्रवीषि माम् ॥ १

यथैव पाण्डोस्ते वीराः कुन्तीपुत्रा महाबलाः ।
तथैव धर्मतस्सर्वे मम पुत्रा न संशयः ॥ २

यथैव मम पुत्राणाम् इदं राज्यं विधीयते ।
तथैव पाण्डुपुत्राणाम् इदं राज्यमसंशयम् ॥ ३

क्षत्तरानय गच्छैतान् सह मात्रा सुसत्कृतान् ।
तया च देवरूपिण्या कृष्णया सह भारत ॥ ४

दिष्ट्या जीवन्ति ते पार्था दिष्ट्या जीवति सा पृथा ।
दिष्ट्या द्रुपदकन्यां च लब्धवन्तो महारथाः ॥ ५

दिष्ट्या वर्धामहे सर्वे दिष्ट्या शान्तः पुरोचनः ।
दिष्ट्या मम परं दुःखम् अपनीतं महाद्युते ॥ ६

त्वमेव गत्वा विदुर तानिहानय मा चिरम् ॥ ६॥

1 वैशम्पायनः—

एवमुक्तस्ततः क्षत्ता रथमारुह्य शीघ्रगम् ।
आगात् कतिपयाहोभिः पाञ्चालान् राजधर्मवित् ॥ ७॥

ततो जगाम विदुरो धृतराष्ट्रस्य शासनात् ।

---

1. ब—विदुरः—
एवं ते निश्चिता बुद्धिर् आचन्द्रार्कं जनेश्वर ।
न भवेच्चञ्चला पार्थे काकस्थानं च मा कुरु ॥

सकाशं यज्ञसेनस्य पाण्डवानां च भारत ॥ ८॥

आगतं विदुरं श्रुत्वा द्रुपदो राजसत्तमः ।
स्वपुत्रैस्सह धर्मात्मा पूजयामास धर्मतः ॥ ९॥

तत्र गत्वा च धर्मज्ञस् सर्वशास्त्रविशारदः ।
द्रुपदं न्यायतो राजन् संयुक्तमुपतस्थिवान् ॥ १०॥
स चापि प्रतिजग्राह धर्मेण विदुरं ततः ।
चक्रे पूजां यथान्यायं विदुरस्य महात्मनः ॥ ११॥

चक्रतुश्च यथान्यायं कुशलप्रश्नसंविदम् ॥ १२

ददर्श पाण्डवांस्तत्र वासुदेवं च भारत ॥ १२॥
[1]ततस्स्नेहात् परिष्वज्य पप्रच्छानामयं ततः ॥ १३

वचनाद्धृतराष्ट्रस्य स्नेहयुक्तं पुनः पुनः ।
तैश्चाप्यमितबुद्धिस्स पूजितोऽथ यथाक्रमम् ॥ १४
पाण्डवा विनयोपेता नत्वाऽऽलिङ्ग्य विशाम्पते ।
दृष्ट्वा मुहुर्मुहू राजन् हर्षादश्रूण्यवर्तयन् ॥ १५

दृष्ट्वा कुशलिनश्चैतान् ततस्तान् पाण्डुनन्दनान् ।

---

1. ब—अद्य मे सफला दृष्टिर् अद्य मे सफलं श्रुतम् ।
अवश्यं पाण्डवानद्य चिरस्य पुनरागतान् ॥
कुन्तीमपश्यं सत्पुत्रां वीरसूं मम मातरम् ।
दृष्ट्वाऽथ पाण्डवान् क्षत्ता वासुदेवं सनातनम् ॥
जीवातुमात्मनः कृष्णम् आत्मप्राणेनिम्नयेश्वरम् ॥ [अधिकः पाठः]

प्रददौ चापि रत्नानि विविधानि वसूनि च ॥ १६

पाण्डवानां च कुन्त्याश्च द्रौपद्याश्च विशेषतः ।
द्रुपदस्य च पुत्राणां तथा दत्तानि कौरवैः ॥ १७

सङ्कर्षणं वासुदेवं प्रणम्य विदुरस्ततः ।
आसने काञ्चने शुभ्रे निषसाद महामतिः ॥ १८

कृत्वा मिथस्तु सँल्लापं मुदा पुनरभाषत ॥ १८॥

भीष्मद्रोणाजमीढैश्च यदुक्तं पाण्डवान् प्रति ।
अवदत्तत्र तत्सर्वं सर्वेषामनुशृण्वताम् ॥ १९॥

प्रोवाच चामितप्रज्ञः प्रश्रितं विनयान्वितम् ।
द्रुपदं पाण्डुपुत्राणां सन्निधौ केशवस्य च ॥ २०॥

विदुरः—
राजन् शृणु सहामात्यस् सपुत्रश्च वचो मम ॥ २१

धृतराष्ट्रस्सपुत्रं त्वां सहामात्यं सबान्धवम् ।
अब्रवीत् कुशलं राजन् प्रीयमाणः पुनः पुनः ॥ २२

प्रीतिमांस्ते दृढं चापि सम्बन्धेन नराधिप ॥ २२॥

अथ भीष्मश्शान्तनवः कौरवैस्सह सर्वशः ।
कुशलं त्वां महाप्राज्ञस् सर्वतः परिपृच्छति ॥ २३॥

भारद्वाजो महाप्राज्ञो द्रोणः प्रियसखस्तव ।
समाश्लेषमुपेत्य त्वां कुशलं परिपृच्छति ॥ २४॥

धृतराष्ट्रस्तु पाञ्चाल त्वया संबन्धमेयिवान् ।
कृतार्थं मन्यतेऽत्मानं तथा सर्वेऽपि कौरवाः ॥ २५॥
न तथा राज्यसंप्राप्तिस् तेषां प्रीतिकरी मता ।
यथा सम्बन्धकं प्राप्य यज्ञसेन त्वया सह ॥ २६॥
एतद्विदित्वा तु भवान् प्रस्थापयतु पाण्डवान् ।
द्रष्टुं हि पाण्डुदायादान् त्वरन्ते कुरवो भृशम् ॥ २७॥
विप्रोषिता दीर्घकालम् एते चापि नरर्षभाः ।
उत्सुका नगरं द्रष्टुं भविष्यन्ति तथा पृथा ॥ २८॥
कृष्णामपि च पाञ्चालीं सर्वाः कुरुवरस्त्रियः ।
द्रष्टुकामाः प्रतीक्षन्ते पुरं च विषयं च नः ॥ २९॥
स भवान् पाण्डुपुत्राणाम् आज्ञापयतु मा चिरम् ।
गमनं सहदाराणाम् एतदागमनं मम ॥ ३०॥
निसृष्टेषु त्वया राजन् पाण्डवेषु महात्मसु ।
ततोऽहं प्रेषयिष्यामि धृतराष्ट्रस्य शीघ्रगान् ॥ ३१॥
आगमिष्यन्ति कौन्तेयाः कुन्ती च सह कृष्णया* ॥ ३२

द्रुपदः—

एवमेतन्महाप्राज्ञ यथाऽऽत्थ विदुराद्य माम् ।
ममापि परमो हर्षस् सम्बन्धेऽस्मिन् कृते विभो ॥ ३३

---

* अ-क-ख-ग—कोशेषु अत्रैवाध्यायसमाप्तिर्दृश्यते ।

गमनं चापि युक्तं स्याद् गृहमेषां महात्मनाम् ।
न तु तावन्मया युक्तम् एतद्वक्तुं स्वया गिरा ॥ ३४

यदा तु मन्यते वीरः कुन्तीपुत्रो युधिष्ठिरः ।
भीमसेनार्जुनौ चैव यमौ च पुरुषर्षभौ ॥ ३५

रामकृष्णौ च धर्मज्ञौ तदा गच्छन्तु पाण्डवाः ॥ ३५॥
एतौ हि पुरुषव्याघ्रावेषां प्रियहिते रतौ ॥ ३६

युधिष्ठिरः—
परवन्तो वयं राजंस् त्वयि सर्वे सहानुगाः ।
यथा वक्ष्यसि नः प्रीत्या चरिष्यामस्तथा वयम् ॥ ३७

वैशम्पायनः—
ततोऽब्रवीद्वासुदेवो गमनं मम रोचते ।
[1]यथाऽयं मन्यते राजा द्रुपदस्सर्वधर्मवित् ॥ ३८

द्रुपदः
यथैतन्मन्यते वीरो दाशार्हः पुरुषोत्तमः ।

---

1. घ—दूरे वस्तुमयुक्तं हि ज्ञातीनामविभागिनाम् ।
तदेव संविभागस्स्याद् दूरदेशप्रवासनम् ॥
धृतराष्ट्रे स्थिते भीष्मे बाह्लिके विदुरेऽपि च ।
भूरिश्रवसि कौरव्ये कुरुष्वन्येषु भूमिप ॥
एतेषु सत्सु पार्थानाम् अयुक्तं मम रोचते ।
वैवाहिकगृहे राजन् तस्माद्गच्छन्तु पाण्डवाः ॥
सुचिरं वर्धतां राजा पाण्डवार्थे सपार्षतः ।
नाथोऽयं पाण्डवानां च ह्युपचारोऽत्र को भवेत् ॥
[अधिकः पाठः]

प्राप्तकालं महाबाहुस् सा बुद्धिर्निश्चिता मम ॥ ३९

यथैव हि महाभागाः कौन्तेया मम साम्प्रतम् ।

तथैव वासुदेवस्य पाण्डुपुत्रा न संशयः ॥ ४०

न तद्ध्यायति कौन्तेयः पाण्डुपुत्रो महामनाः ।

यदेषां पुरुषव्याघ्रश् श्रेयो ध्यायति केशवः ॥ ४१

वैशम्पायनः

पृथायास्तु यथा वेश्म प्रविवेश महाद्युतिः ।

पादौ स्पृष्ट्वा पृथायास्तु शिरसा च महीं गतः ॥ ४२

दृष्ट्वा तु देवरं कुन्ती शुशोच च मुहुर्मुहुः ॥ ४२॥

कुन्ती—

वैचित्रवीर्य ते पुत्राः कथञ्चिज्जीवितास्त्वया ।

त्वत्प्रसादाज्जतुगृहे त्राताः प्रत्यागतास्तव ॥ ४३॥

कूर्मश्चिन्तयते पुत्रान् यत्र वा तत्र वा गतान् ।

चिन्तया वर्धयेत् पुत्रान् यथा कुशलिनस्तथा ॥ ४४॥

तव पुत्रास्तु जीवन्ति त्वं त्राता भरतर्षभ ॥ ४५

यथा परभृतः पुत्रान् अरिष्टा वर्धयेन् सदा ।

तथैव तव पुत्रास्तु मया तात सुरक्षिताः ॥ ४६

दुःखास्तु बहवः प्राप्तास् तथा प्राणान्तिका मया ॥ ४६॥

अतः परं न जानामि कर्तव्यं त्रातुमर्हसि ॥ ४७

वैशम्पायनः—

इत्येवमुक्त्वा दुःखार्ता शुशोच परमातुरा ।
प्रणिपत्याब्रवीत् क्षत्ता मा शोच इति भारत ॥ ४८

विदुरः—

न विनश्यन्ति लोकेषु तव पुत्रा महाबलाः ।
नचिरेणैव कालेन स्वराज्यस्था भवन्ति ते ॥ ४९
बान्धवैस्सहितास्सर्वैर् मा शोकं कुरु माधवि ॥ ४९॥

वैशम्पायनः—

ततस्ते समनुज्ञाता द्रुपदेन महात्मना ।
पाण्डवाश्चैव कृष्णश्च विदुरश्च महामतिः ॥ ५०॥
आदाय द्रौपदीं कृष्णां कुन्तीं चैव यशस्विनीम् ।
सविहारं सुखं जग्मुर् नगरं नागसाह्वयम् ॥ ५१॥
सुवर्णकक्ष्याग्रैवेयान् सुवर्णाङ्कुशभूषितान् ।
जाम्बूनदपरिष्कारान् प्रभिन्नकरटामुखान् ॥ ५२॥
अधिष्ठितान् महामात्रैस् सर्वशस्त्रसमन्वितान् ।
सहस्रं प्रददौ राजा गजानां वरवर्णिनाम् ॥ ५३॥
रथानां च सहस्रं वै सुवर्णमणिचित्रितम् ।
चतुर्युजं भानुमच्च पञ्चानां प्रददौ तदा ॥ ५४॥
सुवर्णपरिबर्हाणां वरचामरमालिनाम् ।
जात्यश्वानां च पञ्चाशत् सहस्रं प्रददौ नृपः ॥ ५५॥

दासीनामयुतं राजा प्रददौ वरभूषणम् ।
ततस्सहस्रं दासानां प्रददौ वरधन्विनाम् ॥ ५६॥

हैमानि शय्यासनभाजनानि
द्रव्याणि चान्यानि च गोधनानि ।
पृथक्पृथक् चैव ददौ स कोटिं
पाञ्चालराजः परमप्रहृष्टः ॥ ५७॥

शिबिकानां शतं पूर्णं वाहान् पञ्चशतं नरान् ।
एवमेतानि पाञ्चालो कन्यार्थे प्रददौ धनम् ॥ ५८॥
हरणं चापि पाञ्चाल्या ज्ञातिदेयं तु सौमकिः ।
धृष्टद्युम्नो ययौ तत्र भगिनीं गृह्य भारत ॥ ५९॥
नानद्यमाने बहुभिस् तूर्यशब्दैस्सहस्रशः* ॥ ६०
श्रुत्वा चोपस्थितान् वीरान् धृतराष्ट्रोऽम्बिकासुतः ।
प्रतिग्रहाय पाण्डूनां प्रेषयामास कौरवान ॥ ६१
विकर्णं च महेष्वासं चित्रसेनं च भारत ।
द्रोणं च परमेष्वासं गौतमं कृपमेव च ॥ ६२
ते तैः परिवृता वीराश् शोभमाना महारथाः ।
नगरं हास्तिनपुरं शनैः प्रविविशुस्तदा ॥ ६३
पाण्डवानागताञ्छ्रुत्वा नागरास्तु कुतूहलात् ।
मण्डयाञ्चक्रिरे तत्र नगरं नागसाह्वयम् ॥ ६४

*. अ-क-ख-ग—कोशेषु अत्रैवाध्यायसमाप्तिर्दृश्यते ।

मुक्तपुष्पावकीर्णं तत् जलसिक्तं तु सर्वशः ।
धूपितं दिव्यधूपेन मण्डनैश्चापि संवृतम् ॥ ६५

पताकोच्छ्रितमाल्यं च पुरमप्रतिमं बभौ ॥ ६५॥
शङ्खभेरीनिनादैश्च नानावादित्रनिस्वनैः ।

कौतूहलेन नगरं पूर्यमाणमिवाभवत् ॥ ६६॥

यत्र ते पुरुषव्याघ्राश् शोकदुःखविनाशनाः ॥ ६७
[1]तत उच्चावचा वाचः प्रियाः प्रियचिकीर्षुभिः ।
उदीरितास्तेऽशृण्वन्त पाण्डवा हृदयङ्गमाः ॥ ६८

पौराः—

अयं स पुरुषव्याघ्रः पुनरायाति धर्मवित् ।
यो नरस्वानिव दायादान् धर्मेण परिरक्षति ॥ ६९

अद्य पाण्डुर्महाराजो वनादिव वनप्रियः ।
आगतः प्रियमस्माकं चिकीर्षुर्नात्र संशयः ॥ ७०

किं न्वद्य सुकृतं पुण्यं सर्वेषां नः प्रियं परम् ।
यन्नः कुन्तीसुता वीरा भर्तारः पुनरागताः ॥ ७१

यदि दत्तं यदि हुतं यदि वाऽप्यस्ति नस्तपः ।
तेन तिष्ठन्तु नगरे पाण्डवाश्शरदां शतम् ॥ ७२

---

1. ब—निवसन्तो वयं तत्र निवसामोऽकुतोभयाः । [अधिकः पाठः]

वैशम्पायनः—

[1]ततस्ते धृतराष्ट्रस्य भीष्मस्य च महात्मनः ।
अन्येषां च तदर्हाणां चक्रुः पादाभिवन्दनम् ॥ ७३
कृत्वा तु कुशलप्रश्नं सर्वस्य नगरस्य ते ।
[2]समाविशन्त वेश्मानि धृतराष्ट्रस्य शासनात् ॥ ७४

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्याम्
आदिपर्वणि सप्तनवत्यधिकशततमोऽध्यायः:* ॥ १९७ ॥
॥ १४ ॥ विदुरागमनपर्वणि पञ्चमोऽध्यायः ॥ ५ ॥
(समाप्तं विदुरागमनपर्व)
[ अस्मिन्नध्याये ७४ श्लोकाः ]

---

## ॥ अष्टनवत्यधिकशततमोऽध्यायः ॥

(अथ राज्यलाभपर्व)

धृतराष्ट्रेण युधिष्ठिरस्य अर्धराज्येऽभिषेकः ॥ १ ॥ पाण्डवानां खाण्डवप्रस्थगमनम् ॥ २ ॥ श्रीकृष्णचिन्तितेनेन्द्रेण विश्वकर्मणः प्रेषणम् ॥ ३ ॥ विश्वकर्मणा इन्द्रप्रस्थपुरनिर्माणम् ॥ ४ ॥

---

वैशम्पायनः—

दुर्योधनस्य महिषी काशिराजसुता तदा ।
धृतराष्ट्रस्य पुत्राणां वधूभिस्सहिता तदा ॥ १

---

1. घ—एता वाचस्सुशृण्वानास् तैः पौरैस्समुदीरिताः ।
सुयोधनश्रुतिविषं विविशुर्नगरं तदा ॥ [अधिकः पाठः]
2. घ—जितेन्द्रियस्य भीष्मस्य त्यक्तसङ्गस्य सर्वतः ।
दृष्ट्वा पाण्डुसुतान् प्रीतिर् न ममौ तस्य चात्मनि ॥[अधिकः पाठः]
* घ—कोशे नाताध्यायसमाप्तिर्दृश्यते

पाञ्चालीं प्रतिजग्राह [1]द्रौपदीं श्रीमिवापराम् ॥ १॥
[2]पूजयामास पूजार्हां शचीदेवीमिवागताम् ॥ २
[3]ववन्दे तत्र गान्धारीं माधवी कृष्णया सह ॥ २॥
आशिषश्च प्रयुक्त्वा तु पाञ्चालीं परिषस्वजे ॥ ३
परिष्वज्य च गान्धारी कृष्णां कमललोचनाम् ।
पुत्राणां मम पाञ्चाली मृत्युरेवेत्यमन्यत ॥ ४
सा चिन्त्य विदुरं प्राह युक्तितस्सुबलात्मजा ॥ ४॥

गान्धारी—

कुन्तीं राजसुतां क्षत्तस् सवधूं सपरिच्छदाम् ।
पाण्डोर्निवेशनं शीघ्रं नीयतां यदि रोचते ॥ ५॥
[4]करणेन मुहूर्तेन नक्षत्रेण शुभे तिथौ ।
यथा सुखं तथा कुन्ती रंस्यते स्वगृहे सुतैः ॥ ६॥

वैशम्पायनः—

तथेत्येव तदा क्षत्ता कारयामास तत्तदा ॥ ७

---

1. क-ग—साध्वीं श्रियमिवापराम् । घ—प्रत्यक्षां श्रीमिवापराम् ।
2. घ—यौवनेन सुवेषेण लावण्येन मुखश्रिया ।
सर्वाङ्गसौष्ठवेनैव देवकन्या विशेषतः ॥
योषितां भानुमत्याद्या दिवा दीपमिवाभवन् ॥ [अधिकः पाठः]
3. घ—कुन्तीं ववन्दे पूर्वं तां गान्धारीं पतिदेवताम् । [अधिकः पाठः]
4. घ—लग्ने गृहगता कुन्ती रंस्यते स्वगृहे यथा ।
कुरुष्वाद्य तथा शीघ्रं सर्वकामसमन्वितम् ॥ [अधिकः पाठः]

पूजयामासुरत्यर्थं बान्धवाः पाण्डवांस्तदा ।
नागराश्श्रेणिमुख्याश्च पूजयन्ति स्म पाण्डवान् ॥ ८

भीष्मो द्रोण[1]स्तथा कर्णो बाह्लीकस्ससुतस्तदा ।
शासनाद्धृतराष्ट्रस्य अकुर्वन्नातिथिक्रियाम् ॥ ९

एवं विहरतां तेषां पाण्डवानां महात्मनाम् ।
नेता सर्वस्य कार्यस्य विदुरो राजशासनात् ॥ १०

विश्रान्तास्ते महात्मानः कश्चित् कालं सकेशवाः ।
आहूता धृतराष्ट्रेण राज्ञा शान्तनवेन च ॥ ११

[2]धृतराष्ट्रः—

भ्रातृभिस्सह कौन्तेय निबोध त्वं वचो मम ॥ ११॥
पाण्डुना वर्धितं राज्यं पाण्डुना पालितं जगत् ॥ १२

शासनान्मम कौन्तेय मम भ्राता महाबलः ।
कृतवान् दुष्करं कर्म नित्यमेव विशाम्पते ॥ १३

तस्मात् त्वमपि कौन्तेय शासनं कुरु मा चिरम् ॥ १३॥

मम पुत्रा दुरात्मानो दर्पाहङ्कारसंयुताः ।
शासनं न करिष्यन्ति मम नित्यं युधिष्ठिर ॥ १४॥

स्वकार्यनिरतैर्नित्यम् अवलिप्तैर्दुरात्मभिः ।

1. ध—:कृपः
2. ध—गत्वाऽभिवाद्य राजानं पुनः प्राञ्जलयस्स्थिताः । [अधिकः पाठः]

पुनर्वै विग्रहो मा भूत् खाण्डवप्रस्थमाविश ॥ १५॥
न च वो वसतस्तत्र कश्चिच्छक्तः प्रबाधितुम् ।
संरक्ष्यमाणान् पार्थेन त्रिदशानिव वज्रिणा ॥ १६॥
अर्धराज्यं तु सम्प्राप्य खाण्डवप्रस्थमाविश ॥ १७
केशवो यदि मन्येत तत् कर्तव्यमसंशयम् ॥ १७॥

वैशम्पायनः—

प्रतिगृह्य तु ते वाक्यं नृपं सर्वे प्रणम्य च ।
वासुदेवेन सम्मन्त्र्य पाण्डवास्समुपाविशन् ॥ १८॥

[1]धृतराष्ट्रः—

अभिषेकस्य संभारान् क्षत्तरानय मा चिरम् ।
अभिषिक्तं करिष्यामि अद्य वै कुरुनन्दनम् ॥ १९॥

---

1. घ—श्रीभगवान्—

मा स्तु राज्यं पाण्डवानाम् अर्धं वा सर्वमेव वा ।
शास्तु दुर्योधनो राजा भ्रातृभिश्शरदां शतम् ॥
धर्मराजोऽनुजैस्सार्धं मात्रा कुन्त्या दिवानिशम् ।
कृष्णया सह राजेन्द्र भवन्तमुपतिष्ठतु ॥
अनाथाः पितृहीनाश्च लोके वदतु नोदति ।
पितृवन्तो नाथवन्तो भवन्तु भवता अमी ॥

धृतराष्ट्रः—

पुत्राणां चैव मे कृष्ण पाण्डवानां च सर्वदा ।
त्वमेव राज्यं स्वर्गं च भोगमोक्षसुखानि च ॥
उभयेषां भवान् कर्ता शास्ता नेता पिता गुरुः ।
तदर्धराज्यं पाण्डूनां त्वमेवादिश केशव ॥
इत्युक्त्वा केशवं राजा विदुरं पुनरब्रवीत् ।
विविधैः करणैः कष्टचित्तोऽसावम्बिकासुतः ॥ [अधिकः पाठः]

ब्राह्मणा नैगमश्रेष्ठाश् श्रेणीमुख्याश्च सर्वशः ।
आहूयन्तां प्रकृतयो बान्धवाश्च विशेषतः ॥ २०॥

पुण्याहं वाच्यतां तात गोसहस्रं तु दीयताम् ।
ग्राममुख्याश्च विप्रेभ्यो दीयन्तां [1]सहदक्षिणाः ॥ २१॥

अङ्गदे मकुटं क्षत्तर् हस्ताभरणमानय ॥ २२

मुक्तावलीश्च हारं च निष्कादीन् कुण्डलानि च ।
कटिबन्धश्च सूत्रं च तथोदरनिबन्धनम् ॥ २३

अष्टोत्तरसहस्रं तु ब्राह्मणाधिष्ठिता गजाः ।
जाह्नवीसलिलं शीघ्रम् आनीयन्तां पुरोहितैः ॥ २४

अभिषेकोदकक्लिन्नं सर्वाभरणभूषितम् ।
औपवाह्योपरिगतं दिव्यचामरवीजितम् ॥ २५

सुवर्णमणिचित्रेण श्वेतच्छत्रेण शोभितम् ।
जयेति द्विजवाक्येन स्तूयमानं नृपैस्तथा ॥ २६

दृष्ट्वा कुन्तीसुतं ज्येष्ठम् आजमीढं युधिष्ठिरम् ॥
[2]प्रीताः प्रीतेन मनसा प्रशंसन्तु पुरे जनाः ॥ २७

---

1. अ-ख—सहदक्षिणैः ।
2. घ—प्रीतः प्रीतेन मनसा विदुरादीनुवाच ह ।
मूर्धाभिषिक्तसंयुक्तं सुवर्णमणिभूषितम् ॥
महापर्वतसङ्काशं निर्मदं रोषवर्जितम् ।
महागजं समारोप्य प्रथयन्तु पुरे जनाः ॥ [अधिकः पाठः]

पाण्डोः कृतोपकारस्य राज्यं दत्वा ममैव च ।
प्रतिक्रिया कृतमिदं भविष्यति न संशयः ॥ २८

वैशम्पायनः—

भीष्मो द्रोणः कृपः क्षत्ता साधु साध्वित्यभाषत ॥ २८॥

श्रीवासुदेवः—

युक्तमेतन्महाराज कौरवाणां यशस्करम् ।
शीघ्रमद्यैव राजेन्द्र यथोक्तं कर्तुमर्हसि ॥ २९॥

वैशम्पायनः—

इत्येवमुक्त्वा वार्ष्णेयस् त्वरयामास तं तदा ॥ ३०
यथोक्तं धृतराष्ट्रश्च कारयामास कौरवः ॥ ३०॥

तस्मिन् क्षणे महाराज कृष्णद्वैपायनस्तदा ।
आगत्य कुरुभिस्सर्वैः पूजितस्ससुहृद्गणैः ॥ ३१॥

मूर्धावसिक्तैस्सहितो ब्राह्मणैर्वेदपारगैः ।
कारयामास विधिवत् केशवानुमते तदा ॥ ३२॥

कृपो द्रोणश्च भीष्मश्च धौम्यश्च व्यासकेशवौ ।
बाह्लीकस्सोमदत्तश्च चातुर्वेद्यपुरस्कृताः ॥ ३३॥

अभिषेकं तदा चक्रुर् भद्रपीठे सुसंयतम् ॥ ३४

जित्वा तु पृथिवीं कृत्स्नां वशे कृत्वा नरर्षभान् ।
राजसूयादिभिर्यज्ञैः क्रतुभिर्भूरिदक्षिणैः ॥ ३५

स्नात्वा ह्यवभृथस्नानं मोदतां बान्धवैस्सह ॥ ३५॥
एवमुक्त्वा तु ते सर्वे आशीर्भिरभिपूजयन् ॥ ३६
मूर्धाभिषिक्तः कौरव्यस् सर्वाभरणभूषितः ।
जयेति संस्तुतो राजा प्रददौ धनमक्षयम् ॥ ३७
सर्वमूर्धावसिक्तैश्च पूजितः कुरुनन्दनः ।
औपवाह्यमथारुह्य श्वेतच्छत्रेण शोभितः ॥ ३८
रराजानुगतो राजा महेन्द्र इव दैवतैः ॥ ३८॥
ततः प्रदक्षिणीकृत्य नगरं नागसाह्वयम् ।
प्रविवेश ततो राजा नागरैः पूजितो भृशम् ॥ ३९॥
मूर्धावसिक्तं कौन्तेयम् अभ्यनन्दन्त बान्धवाः ।
गान्धारिपुत्राश्शोचन्तस् सर्वे ते सह बान्धवैः ॥ ४०॥
ज्ञात्वा शोकं तु पुत्राणां धृतराष्ट्रोऽब्रवीन्नृपम् ।
समक्षं वासुदेवस्य कुरूणां च समक्षतः ॥ ४१॥

धृतराष्ट्रः—

अभिषेकं त्वया प्राप्तं दुष्प्रापमकृतात्मभिः ।
गच्छ त्वमद्यैव नृप कृतकृत्योऽसि कौरव ॥ ४२॥
आयुः पुरूरवा राजन् नहुषश्च ययातिना ।
तत्रैव निवसन्ति स्म खाण्ड[1]वाह्वे नृपोत्तम ॥ ४३॥

1. क-ग—वाख्ये

राजधानी तु सर्वेषां पौरवाणां महाभुज ।
विनाशितं मुनिगणैर् लोभाद्बुधसुतस्य तु ॥ ४४॥
तस्मात् त्वं खाण्डवप्रस्थं पुरं राष्ट्रं च वर्धय ॥ ४५
ब्राह्मणाः क्षत्रिया वैश्याश् शूद्राश्च कृतनिश्चयाः ।
त्वद्भक्त्या जन्तवश्चान्ये भजन्त्येव पुरं शुभम् ॥ ४६
पुरं राष्ट्रं समृद्धं वै धनधान्यैस्समावृतम् ।
तस्माद्गच्छस्व कौन्तेय भ्रातृभिस्सहितोऽनघ ॥ ४७

वैशम्पायनः—

प्रतिगृह्य तु ते वाक्यं नृपं सर्वे प्रणम्य च ।
रथैर्नागैर्हयैश्चापि सहितास्तु पदातिभिः ॥ ४८
प्रतस्थिरे ततो घोरं वनान्तं मनुजर्षभाः ॥ ४८॥
पाण्डवैस्सहिता गन्तुं नार्हतेति च नागरान् ।
घोषयामास नगरे धार्तराष्ट्रस्ससौबलः ॥ ४९॥
ततस्ते पाण्डवास्तत्र गत्वा कृष्णपुरोगमाः ।
मण्डयाञ्चक्रिरे तद्वै पुरं स्वर्गवदच्युताः ॥ ५०॥
वासुदेवो जगन्नाथश् चिन्तयामास वासवम् ।
महेन्द्रश्चिन्तितो राजन् विश्वकर्माणमादिशत् ॥ ५१॥

महेन्द्रः—

विश्वकर्मन् महाप्राज्ञ अद्यप्रभृति तत् पुरम् ।

इन्द्रप्रस्थमिति ख्यातं दिव्यं रम्यं भविष्यति ॥ ५२॥

वैशम्पायनः—

महेन्द्रशासनाद्गत्वा विश्वकर्मा तु केशवम् ।
प्रणम्य प्रणिपातार्हं किं करोमीत्यभाषत ॥ ५३॥
वासुदेवस्तु तच्छ्रुत्वा विश्वकर्माणमूचिवान् । ५४

वासुदेवः—

कुरुष्व कुरुराजाय महेन्द्रपुरसन्निभम् ।
इन्द्रेण कृतनामानम् इन्द्रप्रस्थं महापुरम् ॥ ५५

वैशम्पायनः—

ततः पुण्ये शिवे देशे शान्तिं कृत्वा महारथाः ।
स्वस्तिवाच्य यथान्यायम् इन्द्रप्रस्थं भवत्विति ॥ ५६
तत्पुरं प्रापयामासुर् द्वैपायनपुरोगमाः ॥ ५६॥
ततस्तु विश्वकर्मा तु चकार पुरमुत्तमम् ।
सागरप्रतिरूपाभिः परिखाभिरलङ्कृतम् ॥ ५७॥
प्राकारेण च सम्पन्नं दिवमावृत्य तिष्ठता ।
पाण्डुराभ्रप्रकाशेन वृतं शशिनिभेन च ॥ ५८॥
शुशुभे तत् पुरश्रेष्ठं नागैर्भोगवती यथा ॥ ५९
विपक्षगारुडप्रख्यैर् द्वारैर्घोरप्रदर्शनैः ।
गुप्तं मन्द्रघनप्रख्यैर् गोपुरैर्मन्दरोपमैः ॥ ६०

विविधैरतिनिर्विद्धैश् शक्त्योपेतैस्सुसंवृतैः ।
शक्तिभिश्चावृतं तद्धि द्विजिह्वैरिव पन्नगैः ॥ ६१

तल्पैश्चाभ्यधिकैर्युक्तं शुशुभे योधरक्षितम् ॥ ६१॥

तीक्ष्णाभिश्च शतघ्नीभिर् यन्त्रजालैश्च शोभितम् ।
आयसैश्च महाचक्रैश् शुशुभे तत् पुरोत्तमम् ॥ ६२॥

सुविभक्तमहारथ्यं देवताबाधवर्जितम् ।
विरोचमानं विविधैः पाण्डुरैर्भवनोत्तमैः ॥ ६३॥

हर्म्यप्रासादसम्बाधं नानापण्यविभूषितम् ॥ ६४

विस्पर्धयेव प्रासादा अन्योन्यस्योच्छ्रिता भवन् ॥ ६४॥

मण्डपाश्च सभाशालाः प्रपाश्चैव समन्ततः ॥ ६५

तत् त्रिविष्टपसङ्काशम् इन्द्रप्रस्थं व्यरोचत ।
मेघवृन्दमिवाकाशे विद्धं विद्युत्समावृतम् ॥ ६६

इन्द्रप्रस्थस्य मध्ये तु कौरवस्य निवेशनम् ।
शुशुभे धनसम्पूर्णं धनाध्यक्षक्षयोपमम् ॥ ६७

गृहैरादर्शविमलैर् विविधैश्च लतागृहैः ।
मनोहरैश्चित्रगृहैस् तथाऽजगतिपर्वतैः ॥ ६८

पुष्करिण्यश्च विविधाः पद्मोत्पलसमावृताः ।
हंसकारण्डवाकीर्णाश् चक्रवाकोपशोभिताः ॥ ६९

रम्याश्च विविधास्तत्र वाप्यश्चैव वनावृताः ॥ ६९॥

वेश्ममध्ये शुभं दिव्यम् इन्द्रवासगृहोपमम् ।

राज्ञो वासगृहं रम्यं विश्वकर्माऽत्यकारयत् ॥ ७०॥

सुवर्णमणिसोपानं सर्वरत्नविचित्रितम् ॥ ७१

विहारभूम्यो विविधाः कारितास्सुमनोहराः ॥ ७१॥

तथा प्रासादमालाश्च शोभन्ते स्म सहस्रशः ॥ ७२

निरन्तरा राजमार्गास् क्षीरत्नैश्शोभितास्थिताः ॥ ७२॥

तत्रागच्छन् द्विजा राजन् सर्वे वेदविदां वराः ॥ ७३

निवासं रोचयन्ति स्म सर्वभाषाविदस्तथा ॥ ७३॥

वणिजश्चाभ्ययुस्तत्र देशेभ्योऽपि धनार्थिनः ।

सर्वशिल्पविदश्चैव वासायाभ्यागमंस्तदा ॥ ७४॥

उद्यानानि च रम्याणि नगरस्य समीपतः ।

सहकाराम्रपनसैः कपित्थैरभ्युदुम्बरैः ॥ ७५॥

नालिकेरैश्च लिकुचैः कदलीभिश्च संवृताः ।

अशोकैस्तिलकैर्लोध्रैर् नीलाशोकैश्च चम्पकैः ॥ ७६॥

पुन्नागैर्नागवृक्षैश्च मधूकैश्च सुपुष्पितैः ।

सालतालकदम्बैश्च बकुलैश्च सकेतकैः ॥ ७७॥

जम्बूभिः पाटलीभिश्च अङ्कोलैरतिमुक्तकैः ।
कर्णिकारैः पारिजातैः करवीरैस्सुपुष्पितैः ॥ ७८॥

अन्यैश्च विविधैर्वृक्षैः फलभारावनामिभिः ।
नित्यपुष्पफलोपेतैश् शोभितास्ते गृहोत्तमाः ॥ ७९॥

तटाकानि च रम्याणि विविधानि दिशासु च ॥ ८०
नदी च नन्दिनी नाम सा पुरीमुपगूहते ॥ ८०॥

चातुर्वर्ण्यसमाकीर्णं मान्यैश्शिल्पिभिरावृतम् ।
उपभोगसमर्थैश्च सर्वद्रव्यैस्समावृतम् ॥ ८१॥

नित्यमार्यजनोपेतं नरनारीगणैर्युतम् ।
[1]मत्तवारणसम्पूर्णं गोभिरुष्ट्रैः खरैरजैः ॥ ८२॥

सर्वदाऽभिगतं सद्भिः कारितं विश्वकर्मणा ।
तत् त्रिविष्टपसङ्काशम् इन्द्रप्रस्थं व्यरोचत ॥ ८३॥

पुरीं सर्वगुणोपेतां निर्मितां विश्वकर्मणा ।
पौरवाणामधिपतिः कुन्तीपुत्रो युधिष्ठिरः ॥ ८४॥

कृतमङ्गलसत्कारो ब्राह्मणैर्वेदपारगैः ।
द्वैपायनं पुरस्कृत्य धौम्यस्यानुमते स्थितः ॥ ८५॥

---

1. घ—नानादेशपुरग्रामं कुर्वद्भिः सहपट्टणैः ।
नानाजातिसमुद्भूतैस् स्वस्वकर्मरतैस्सदा ।
सुयोधनाज्ञामुल्लङ्घ्य हरिप्रस्थं सुपूरितम् ॥ [अधिकः पाठः]

भ्रातृभिस्सहितो राजन् केशवेन सहाभिभूः ।
[1]तोरणद्वारसुमुखं द्वात्रिंशद्वारसंयुतम् ॥ ८६॥
वर्धमानपुरद्वारं प्रविवेश महाद्युतिः ॥ ८७
शङ्खदुन्दुभिनिर्घोषाश् श्रूयन्ते बहवो भृशम् ।
जयेति ब्राह्मणागिरश् श्रूयन्ते च सहस्रशः ॥ ८८
संस्तूयमानो मुनिभिस् सूतमागधवन्दिभिः ।
औपवाह्यगतो राजा राजमार्गमतीत्य च ॥ ८९
कृतमङ्गलसत्कारं प्रविवेश गृहोत्तमम् ॥ ८९॥
प्रविश्य भवनं राजा सत्कारैरभिपूजितः ।
पूजयामास विप्रेन्द्रान् केशवेन यथाक्रमम् ॥ ९०॥
ततस्तु राष्ट्रं नगरं नरनारीगणायुतम् ।
गोधनैश्च समाकीर्णं सस्यवृद्धिस्तदाऽभवत् ॥ ९१॥
तेषां पुण्यजनोपेतं राष्ट्रमावसतां महत् ।

---

1. घ—नानाविधमहावाद्या महाघोषरवैर्दिशः ।
पूरयन् सुरलोकं च पुष्पवर्षं सुवर्षितम् ॥
नदत्सु दिव्यवाद्येषु गायत्स्वमरवन्दिषु ।
सुरयोषित्सु नृत्यत्सु सुरेष्वशुभशंसिषु ॥
शृण्वन् स्वस्तिवचस्सर्वं देवविप्रसमीरितम् ।
विलोकयन् प्रजास्सर्वाः कृपार्णःपूर्णया दृशा ॥
पञ्चयां प्रदक्षिणं कृत्वा वाचा मधुरया नृपः ।
मन्दस्मितेन स्पर्शेन प्रियांश्च सुहृदस्तथा ।
कृतार्थयन् महीपांश्च मितसम्बन्धिबान्धवान् ॥ [अधिकः पाठः]

पाण्डवानां महाराज शश्वत् प्रीतिरवर्धत ॥ ९२॥
सौबलेन च कर्णेन धार्तराष्ट्रैः कृपेण च ।
तथा भीष्मेण राज्ञा च धर्मप्रणयिनस्सदा ॥ ९३॥
पाण्डवास्समपद्यन्त खाण्डवप्रस्थवासिनः ॥ ९४
पञ्चभिस्तैर्महेष्वासैर् इन्द्रकल्पैस्समावृतम् ।
शुशुभे तत् पुरश्रेष्ठं नागैर्भोगवती यथा ॥ ९५
ततस्तु विश्वकर्माणं पूजयित्वा विसृज्य च ।
द्वैपायनं च सम्पूज्य विसृज्य च नराधिप ॥ ९६
वार्ष्णेयमब्रवीद्राजा गन्तुकामं कृतक्षणम् ॥ ९६॥

युधिष्ठिरः—

तव प्रसादाद्वार्ष्णेय राज्यं प्राप्तं मयाऽनघ ॥ ९७
प्रसादादेव ते वीर शून्यं राष्ट्रं सुदुर्गमम् ॥ ९७॥
तवैव तु प्रसादेन राज्यस्थाश्च महामते ॥ ९८
गतिस्त्वमन्तकाले च पाण्डवानां तु माधव ।
माताऽस्माकं पिता देवो न पाण्डुं विद्म वै वयम् ॥ ९९
[1]ज्ञात्वा तु कृत्यं कर्तव्यं कारयस्व भवान् हि नः ॥ ९९॥

---

1. च—कर्तव्यं नः कृतं कर्म कृत्यं ज्ञात्वा च केशव ।
अस्माकं यद्धितं कृत्यं तत् कर्तव्यं त्वयाऽनघ ॥
त्वत्प्रेरिता वयं कृत्यं स्वर्गं वा श्वभ्रमेव वा ।
गच्छाम पुरुषव्याघ्र त्वमस्माकं गतिर्भव ॥ [अधिकः पाठः]

यदिष्टमनुमन्तव्यं पाण्डवानां त्वयाऽनघ ॥ १००

श्रीवासुदेवः—

त्वत्प्रभावान्महाभाग राज्यं प्राप्तं स्वधर्मतः ।
पितृपैतामहं राज्यं कथं न स्यात्तव प्रभो ॥ १०१
धार्तराष्ट्रा दुराचाराः किं करिष्यन्ति पाण्डवान् ॥ १०१॥
यथेष्टं पालय महीं सदा धर्मधुरं वह ॥ १०२
धर्मोपदेशं संक्षेपाद् ब्राह्मणान् भज कौरव ।
अद्यैव नारदश्श्रीमान् आगमिष्यति सत्वरः ॥ १०३
आदृत्य तस्य वाक्यानि शासनं कुरु तस्य वै ॥ १०३॥

वैशम्पायनः—

एवमुक्त्वा ततः कुन्तीम् अभिवाद्य जनार्दनः ।
उवाच श्लक्ष्णया वाचा गमिष्यामि नमोऽस्तु ते ॥ १०४॥

कुन्ती—

जातुषं गृहमासाद्य मया प्राप्तं च केशव ।
आर्येण चापि न ज्ञातं कुन्तिभोजेन चानघ ॥ १०५॥
त्वया नाथेन गोविन्द दुःखं तीर्णं महत्तरम् ।
त्वं हि नाथस्त्वनाथानां दरिद्राणां विशेषतः ॥ १०६॥
सर्वदुःखानि शाम्यन्ति तव सन्दर्शनान्मम ॥ १०७
स्मरस्वैनान् महाप्राज्ञ तेन जीवन्ति पाण्डवाः ॥ १०७॥

वैशम्पायनः—

करिष्यामीति चामन्त्र्य अभिवाद्य पितृष्वसाम् ।
गमनाय मतिं चक्रे वासुदेवस्सहानुगः ॥ १०८॥

[1]तां निवर्त्य ततो वीरस् सह रामेण केशवः ।
ययौ द्वारवतीं राजन् पाण्डवानुमते तदा ॥ १०९॥

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्याम्
आदिपर्वणि अष्टनवत्यधिकशततमोऽध्यायः ॥ १९८ ॥
॥ १५ ॥ राज्यलाभपर्वणि प्रथमोऽध्यायः ॥ १ ॥
[अस्मिन्नध्याये १०९॥ श्लोकाः]

---

## ॥ एकोनद्विशततमोऽध्यायः ॥

पाण्डवानां समीपे नारदागमनम् ॥ १ ॥

---

जनमेजयः—

एवं सम्प्राप्य राज्यं तद् इन्द्रप्रस्थे तपोधन ।
अत ऊर्ध्वं नरव्याघ्राः किमकुर्वत पाण्डवाः ॥ १

सर्वे एव महात्मानस् सर्वे एव पितामहाः ।
द्रौपदी धर्मपत्नी च कथं तानन्वर्तत ॥ २

---

1. च—महाप्रसाद इत्युक्त्वा तां नमस्कृत्य केशवः ।
पाण्डवानात्मसात्कृत्वा योगक्षेमे तथा तयोः ।
आमन्त्र्य ब्राह्मणान् सर्वान् राज्ञः पुण्यकृतो हरिः ॥
ययौ द्वारवतीं [अधिकः पाठः]

कथमासंश्च कृष्णायाम् एकस्यां ते नराधिपाः ।
वर्तमाना महेष्वासा नाभिद्यन्त परस्परम् ॥ ३

श्रोतुमिच्छाम्यहं तत्र विस्तरेण यथातथम् ।
तेषां चेष्टितमन्योन्यं युक्तानां कृष्णया सह ॥ ४

वैशम्पायनः—

धृतराष्ट्राभ्यनुज्ञाता इन्द्रप्रस्थं प्रविश्य तत् ।
रेमिरे पुरुषव्याघ्राः कृष्णया सह पाण्डवाः ॥ ५

प्राप्य राज्यं महातेजास् सत्यसन्धो युधिष्ठिरः ।
पालयामास धर्मेण पृथिवीं भ्रातृभिस्सह ॥ ६

जितारयो महाप्राज्ञास् सत्यधर्मपरायणाः ।
मुदं परमिकां प्राप्तास् तत्रोषुः पाण्डुनन्दनाः ॥ ७

कुर्वाणाः पौरकार्याणि सर्वाणि भरतर्षभ ।
आसाञ्चक्रुर्महार्हेषु परार्ध्येष्वासनेषु च ॥ ८

तेषु तत्रोपविष्टेषु पाण्डवेषु महात्मसु ।
आययौ धर्मराजं तु द्रष्टुकामोऽथ नारदः ॥ ९

पथा नक्षत्रजुष्टेन सुपर्णचरितेन च ।
चन्द्रसूर्यप्रकाशेन सेवितेन महर्षिभिः ॥ १०

नभस्स्थलेन दिव्येन दुर्लभेनातपस्विनाम् ।
भूतार्चितो भूतधरं राष्ट्रं नगरभूषितम् ॥ ११

अवेक्षमाणो द्युतिमान् आजगाम महातपाः ॥ ११॥
सर्ववेदान्तगो विप्रस् सर्वविद्यासु पारगः ।
परेण तपसा युक्तो ब्राह्मेण तपसा वृतः ॥ १२॥
नये नीतौ च निरतो विश्रुतश्च महामुनिः ।
[1]परात् परतरं प्राप्तो धर्मात् समभिजग्मिवान् ॥ १३॥
भावितात्मा गतरजाश् शान्तो मृदुरृजुर्द्विजः ।
धर्मेणाधिगतस्सर्वैर् देवदानवमानुषैः ॥ १४॥
[2]क्षीणकर्मसु पापेषु भूतेषु विविधेषु च ।
सर्वथा कृतमर्यादो वेदेषु विविधेषु च ॥ १५॥
शतशस्सोमपा यज्ञे सदा पुण्यकृदग्निचित् ।
ऋक्सामयजुषां वेत्ता न्यायवृत्तान्तकोविदः ॥ १६॥
ऋजुरारोहवाञ्छुक्लो भूयिष्ठपथिकोऽनघः ।
श्लक्ष्णया शिखयोपेतस् सम्पन्नः परमत्विषा ॥ १७॥
अवदाते च सूक्ष्मे च दिव्ये च रुचिरे शुभे ।
महेन्द्रवृत्ते महती बिभ्रत् परमवाससी ॥ १८॥
जाम्बूनदमये दिव्ये गण्डलम्बिमुखे नवे ।
अभ्यर्कसदृशे दिव्ये धारयन् कुण्डले शुभे ॥ १९॥

---

1. ग—काष्ठां परमिकां प्राप्तो धर्मकामस्समाधिमान् ।
2. ख—अक्षीणवृत्तधर्मश्च संसारभयवर्जितः ।

राजतच्छत्रमुच्छ्रित्य चित्रं परमवर्चसम् ।
प्राप्य दुष्प्रापमन्येन ब्रह्मवर्चसमुत्तमम् ॥ २०॥
भवने भूमिपालस्य बृहस्पतिरिवाप्लुतः ॥ २१
संहितायां च सर्वेषां स्थितस्योपस्थितस्य च ।
द्विपदस्य च धर्मस्य क्रमधर्मस्य पारगः ॥ २२
गाधासामानुधर्मज्ञस् साम्नां परमवल्गुनाम् ।
आत्मना सर्वमोक्षिभ्यः कृतिमान् कृत्यवित्तदा ॥ २३
योक्ता धर्मे बहुविधे मनो मतिमतां वरः ।
[1]विदितार्थस्समश्चैव छेत्ता निगमसंशयान् ॥ २४
अर्थनिर्वचने नित्यं संशयच्छिदसंशयः ।
प्रकृत्या धर्मकुशलो नानाधर्मविशारदः ॥ २५
लोपेनागमधर्मेण सङ्क्रमेण च वृत्तिषु ।
एकशब्दांश्च नानार्थान् एकार्थांश्च पृथक्छ्रुतीन् ॥ २६
पृथगर्थाभिधानांश्च प्रयोगाणामवेक्षिता ॥ २६॥
प्रमाणभूतो लोकस्य सर्वाधिकरणेषु च ।
सर्ववर्णविकारेषु नित्यं सकलपूजितः ॥ २७॥
स्वरेऽस्वरे च विविधे वृत्तेषु विविधेषु च ।
समस्थानेषु सर्वेषु समाम्नायेषु धातुषु ॥ २८॥

1. क-ग—विदितार्थः स्वसमय ; च—विदितार्थः समश्चैव

उद्देश्यानां समाख्याता सर्वमाख्यातमुद्दिशन् ॥ २९
अभिसन्धिषु [1]सर्वज्ञः पदान्यङ्गान्यनुस्मरन् ॥ २९॥

कालधर्मेण निर्दिष्टं यथार्थं च विचारयन् ।
चिकीर्षितं च यो वेत्ता [2]यथा लोकेन संवृतम् ॥ ३०॥

विभाषितं च समयं भाषितं हृदयङ्गमम् ।
आत्मने च परस्मै च स्वरसंस्कारयोगवान् ॥ ३१॥

एषां स्वराणां [3]वेत्ता च बोद्धा च वचनस्वरान् ।
विज्ञाता चोक्तवाक्यानाम् एकतां वहुतां तथा ॥ ३२॥

बोद्धा हि परमार्थांश्च विविधांश्च व्यतिक्रमान् ।
अभेदतश्च बहुशो बहुशश्चापि भेदतः ॥ ३३॥

वनानां विविधानां च देशानां च समीक्षिता ।
नानार्थकुशलस्तत्र तद्धितेषु च सर्वशः ॥ ३४॥

परिभूषयिता वाचां वर्णतस्स्वरतोऽर्थतः ॥ ३५
प्रत्ययांश्च समाख्याता नियतं प्रतिधातुकम् ।
पञ्च चाक्षरजातानि स्वरसंज्ञानि यानि च ॥ ३६
नारदस्त्वथ देवर्षिर् आजगाम यदृच्छया ॥ ३६॥

तमागतमृषिं दृष्ट्वा प्रत्युद्गम्याभिवाद्य च ।

---

1. क-ख-ग-घ—तत्त्वज्ञः 2. अ-ख-घ - शर्करीतेन
3. क-ख-घ—ज्ञाता च बोद्धा प्रवचनस्वरान् ।

आसनं रुचिरं तस्मै स्वं ददौ स युधिष्ठिरः ॥ ३७॥
कृष्णाजिनोत्तरे तस्मिन्नुपविष्टो महानृषिः ॥ ३८
देवर्षेरुपविष्टस्य स्वयमर्घ्यं यथाविधि ।
प्रादाद्युधिष्ठिरो धीमान् राज्यं चास्मै न्यवेदयत् ॥ ३९
प्रतिगृह्य तु तां पूजाम् ऋषिः प्रीतमना भवत् ।
आशीर्भिर्वर्धयित्वा तु तमुवाचास्यतामिति ॥ ४०
निषसादाभ्यनुज्ञातस् तदा राजा युधिष्ठिरः ।
प्रेषयामास कृष्णायै भगवन्तमुपस्थितम् ॥ ४१
श्रुत्वैतद्द्रौपदी चैव शुचिर्भूत्वा समाहिता ।
जगाम तत्र यत्रास्ते नारदः पाण्डवैस्सह ॥ ४२
तस्याभिवाद्य चरणौ देवर्षेर्धर्मचारिणी ।
कृताञ्जलिस्सुसंवीता स्थिता वै द्रुपदात्मजा ॥ ४३
तस्याश्चापि स धर्मात्मा सत्यवागृषिसत्तमः ।
आशिषो विविधाः प्रोच्य राजपुत्र्यास्तु नारदः ॥ ४४
गम्यतामिति चोवाच भगवांस्तामनिन्दिताम् ॥ ४४॥
गतायामथ कृष्णायां युधिष्ठिरपुरोगमान् ।
विविक्ते पाण्डवान् सर्वान् उवाच भगवानृषिः ॥ ४५॥

नारदः—

पाञ्चाली भवतामेका धर्मपत्नी यशस्विनी ।

यथा वो नात्र भेदस्स्यात् तथा नीतिर्विधीयताम् ॥ ४६॥

सुन्दोपसुन्दौ ह्यसुरौ भ्रातरौ सहितावुभौ ।

देवैरवध्यावसुरौ त्रिषु लोकेषु विश्रुतौ ॥ ४७॥

एकराज्यावेकगृहावेकशय्यासनाशनौ ।

तिलोत्तमायास्तौ हेतोर् अन्योन्यमभिजघ्नतुः ॥ ४८॥

रक्ष्यतां सौहृदं तस्माद् अन्योन्यं प्रति भाविकम् ।

यथा वो नात्र भेदस्स्यात् तत् कुरुष्व युधिष्ठिर ॥ ४९॥

युधिष्ठिरः—

सुन्दोपसुन्दावसुरौ कस्य पुत्रौ महामुने ।

उत्पन्नश्च कथं भेदः कथं चान्योन्यमघ्नताम् ॥ ५०॥

अप्सरा देवकन्या वा कस्य वैषा तिलोत्तमा ।

यस्याः कामेन सम्मत्तौ जघ्नतुस्तौ परस्परम् ॥ ५१॥

एतत्सर्वं यथा वृत्तं विस्तरेण तपोधन ।

श्रोतुमिच्छामहे विप्र परं कौतूहलं हि नः ॥ ५२॥

नारदः—

शृणु मे विस्तरेणेदम् इतिहासं पुरातनम् ।

भ्रातृभिस्सहितः पार्थ यथावृत्तं युधिष्ठिर ॥ ५३॥

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्याम्
आदिपर्वणि एकोनद्विशततमोऽध्यायः ॥ १९९ ॥

॥ १५ ॥राज्यलाभपर्वणि द्वितीयोऽध्यायः ॥ २ ॥

[अस्मिन्नध्याये ५३॥ श्लोकाः ]

## ॥ द्विशततमोऽध्यायः ॥

सुन्दोपसुन्दकथा-सुन्दोपसुन्दयोर्ब्रह्मणो वरलाभः ॥ १ ॥ सुन्दोपसुन्दयोः दिग्विजयः कुरुक्षेत्रे निवासश्च ॥ २ ॥ सुन्दोपसुन्दकृतोपद्रवं निवेद्य देवादिभिः प्रार्थितेन ब्रह्मणा आज्ञप्तेन विश्वकर्मणा तिलोत्तमासृष्टिः ॥ ३ ॥ तिलोत्तमया ब्रह्माज्ञास्वीकारः ॥ ४ ॥ सुन्दोपसुन्दसमीपे तिलोत्तमाया आगमनम् ॥५॥ तस्यां सकामयोस्तयोः परस्परं गदाप्रहारेण मरणम् ॥ ६ ॥ तिलोत्तमायै ब्रह्मणा वरदानम् ॥ ७ ॥ नारदोक्तामिमां कथां श्रुतवद्भिः पाण्डवैः तत्समक्षं द्रौपदीविषये समयकरणम् ॥ ८ ॥

नारदः--

महासुरस्यान्ववाये हिरण्यकशिपोः पुरा ।
निकुम्भो नाम दैत्येन्द्रस् तेजसा बलवानभूत् ॥ १

तस्य पुत्रौ महावीर्यौ जातौ भीमपराक्रमौ ।
सहान्योन्येन भुञ्जाते विनाऽन्योन्यं न गच्छताम् ॥ २

अन्योन्यस्य प्रियकरावन्योन्यस्य प्रियंवदौ ।
एकशीलसमाचारौ द्विधैवैकोऽभवद्य यौ ॥ ३

तौ विवृद्धौ महावीर्यौ कार्येष्वप्येकनिश्चितौ ॥ ३॥

त्रैलोक्यविजये यत्तौ समास्थायैकनिश्चयम् ।
दीक्षां कृत्वा गतौ विन्ध्यं तत्रोग्रं तेपतुस्तपः ॥ ४॥

तौ तु दीर्घेण कालेन तपोयुक्तौ बभूवतुः ॥ ५

क्षुत्पिपासापरिश्रान्तौ जटावल्कलधारिणौ ।

मलोपचितसर्वाङ्गौ वायुभक्षौ बभूवतुः ॥ ६

आत्ममांसानि जुह्वन्तौ पादाङ्गुष्ठाग्रविष्ठितौ ।
ऊर्ध्वबाहू ह्यनिमिषौ दीर्घकालं धृतव्रतौ ॥ ७

तयोस्तपःप्रभावेण दीर्घकालं प्रतापितः ।
धूमं प्रमुमुचे विन्ध्यस् तदद्भुतमिवाभवत् ॥ ८

ततो देवा भवन् भीता उग्रं दृष्ट्वा तयोस्तपः ।
ततस्तपोविघातार्थं देवा विघ्नानि चक्रिरे ॥ ९

रत्नैः प्रलोभयामासुस् स्त्रीभिश्चोभौ पुनः पुनः ।
न च तौ चक्रतुर्भङ्गं व्रतस्य तु महाव्रतौ ॥ १०

[1]अथ मायां पुनर्देवास् तयोश्चक्रुर्महात्मनोः ॥ १०॥

भगिन्यो मातरो भार्यास् तयोर्बन्धुजनास्तथा ।
परीयमाना वित्रस्ताश् शूलहस्तेन रक्षसा ॥ ११॥

स्रस्ताभरणकेशान्ता एकान्तभ्रष्टवाससः ।
[2]अभिभाष्य तु तास्सर्वास् तौ त्राहीति पुनः पुनः ॥ १२॥

यदा क्षोभं न गच्छेताम् आर्तिं वैकतरस्तयोः ।
ततस्स्त्रियस्तास्सन्त्रस्तास् सर्वमन्तरधीयत ॥ १३॥

1. ख—यदा तौ तपसो भङ्गं व्रतस्य सुमहाव्रतौ । [अधिकः पाठः]
2. ख—न हि तौ चक्रतुर्भङ्गं व्रतस्य सुमहाव्रतौ ।
यदा तौ तपसो भङ्गं चक्रतुर्दृढमानसौ ॥ [अधिकः पाठः]

ततः पितामहस्साक्षाद् अभिगम्य महासुरौ ।
वरेण च्छन्दयामास सर्वलोकपितामहः ॥ १४॥

ततस्सुन्दोपसुन्दौ तौ भ्रातरौ दृढविक्रमौ ।
दृष्ट्वा पितामहं देवम् उभौ तौ प्राञ्जली तदा ॥ १५॥

[1]ऊचतुश्च प्रभुं देवं ततस्तौ सहितौ तदा ॥ १६

सुन्दोपसुन्दौ—

आवयोस्तपसाऽनेन यदि प्रीतः पितामहः । १६॥

मायाविदावस्त्रविदौ बलिनौ कामरूपिणौ ।
उभावप्यमरौ स्याव: प्रसन्नो यदि नौ प्रभुः ॥ १७॥

पितामहः—

ऋतेऽमरत्वमन्यद्वां सर्वमुक्तं भविष्यति ।
अन्यद्वृणीतं मृत्योश्च विधानममरैस्सह ॥ १८॥

सुन्दोपसुन्दौ—

करिष्यावेदमिति यन्महदप्युत्थितं तपः ।
आवयोर्हेतुना केन नामरत्वं विधीयते ॥ १९॥

पितामहः—

त्रैलोक्यविजयार्थाय भवद्भ्यामास्थितं तपः ।
हेतुनाऽनेन दैत्येन्द्रौ न वां कामं करोम्यहम् ॥ २०॥

---

1. घ—निश्चित्य मनसाऽन्योन्यं चिरमात्माभिकाङ्क्षितम् ।
अवृणीतां वरं भीमौ सर्वलोकभयङ्करौ ॥ [अधिकः पाठः]

सुन्दोपसुन्दौ—

त्रिषु लोकेषु यद्भूतं सर्वं स्थावरजङ्गमम् ।
सर्वस्मान्नौ भयं न स्याद् ऋतेऽन्योन्यात् पितामह ॥ २१॥

पितामहः—

यत् प्रार्थितं यथोक्तं तत् काममेव ददामि वाम् ।
मृत्योर्विधानमेतच्च यथावद्वां भविष्यति ॥ २२॥

नारदः—

ततः पितामहो दत्त्वा वरमेतत्तदा तयोः ।
निवर्त्य तपसस्तौ च ब्रह्मलोकं जगाम ह ॥ २३॥

लब्ध्वा वराणि सर्वाणि दैत्येन्द्रावपि तावुभौ ।
अवध्यौ सर्वलोकस्य [1]स्वयमेवावनिं गतौ ॥ २४॥

तौ तु लब्धवरौ दृष्ट्वा कृतकामौ महासुरौ ।
सर्वस्सुहृज्जनस्ताभ्यां प्रहर्षमुपजग्मिवान् ॥ २५॥

ततस्तौ तु जटा भित्त्वा मौलिनौ सम्बभूवतुः ।
महार्हाभरणोपेतौ विरजोम्बरधारिणौ ॥ २६॥

अकालकौमुदीं चैवं चक्रतुस्सार्वकालिकीम् ॥ २७
दैत्येन्द्रौ परमप्रीतौ तयोश्चैव सुहृज्जनः ॥ २७॥

भक्ष्यतां भुज्यतां नित्यं रम्यतां गीयतामिति ।
पीयतां दीयतां चेति वाच आसन् गृहे गृहे ॥ २८॥

---

1 क.-ग-घ—स्वमेव भवनं

तत्र तत्र महानादैर् उद्घुष्टतलनादितैः ।
[1]हृष्टं प्रमुदितं सर्वं दैत्यानामभवत् पुरम् ॥ २९॥

तैस्तैर्विहारैर्बहुभिर् दैत्येन्द्राणां महौजसाम् ।
समास्संक्रीडतां तेषाम् अहरेकमिवाभवत् ॥* ३०॥

उत्सवे वर्तमाने तु त्रैलोक्याकाङ्क्षिणावुभौ ।
मन्त्रयित्वा ततस्सेनां तावाज्ञापयतां तदा ॥ ३१॥

सुहृद्भिरभ्यनुज्ञातौ दैत्यवृद्धैश्च मन्त्रिभिः ।
कृत्वा प्रास्थानिकीं यात्राम् असुरौ ययतुस्तदा ॥ ३२॥

गदापट्टसधारिण्या शूलमुद्गरहस्तया ।
प्रस्थितौ सहधर्मिण्या महत्या दैत्यसेनया ॥ ३३॥

मङ्गलैस्स्तुतिभिश्चापि विजयं प्रति संहितौ ।
चारणैस्स्तूयमानौ तौ जग्मतुः परया मुदा ॥ ३४॥

तावन्तरिक्षमुत्पत्य दैत्यौ कामगमावुभौ ।
देवानामेव भवनं जग्मतुर्युद्धदुर्मदौ ॥ ३५॥

तयोरागमनं ज्ञात्वा वरदानं च तत् प्रभोः ।
हित्वा त्रिविष्टपं जग्मुर् ब्रह्मलोकं ततस्सुराः ॥ ३६॥

---

1. घ—पारावतरवस्सर्वः केङ्कारं कोकिलारवः ।
कस्तूरिलिप्तसर्वाङ्गस् सर्वाभरणभूषितः ।
सुगन्धलेपमाल्याढ्यस्त्रीरतसुरताकुलः ॥ [अधिकः पाठः]

* अ-क-ख-ग—कोशेषु अत्रैवाध्यायसमाप्तिर्दृश्यते ।

ताविन्द्रलोकं निर्जित्य यक्षरक्षोगणांस्तथा ।
खेचराण्यपि भूतानि जघ्नतुस्तीव्रविक्रमौ ॥ ३७॥

अन्तर्भूमिगतान् नागान् जित्वा तौ तु महासुरौ ।
समुद्रवासिनीस्सर्वा म्लेच्छजातीर्विजिग्यतुः ॥ ३८॥

ततस्सर्वां महीं जेतुम् आरब्धावुग्रशासनौ ।
सैनिकांश्च समाहूय सुतीक्ष्णां वाचमूचतुः ॥ ३९॥

राजर्षयो महायज्ञैर् हव्यकव्यैर्द्विजातयः ।
तेजो बलं च देवानां वर्धयन्ते श्रियं तथा ॥ ४०॥

तेषामेवं प्रवृद्धानां सर्वेषामसुरद्विषाम् ।
सम्भूय सर्वैरस्माभिः कार्यस्सर्वात्मना वधः ॥ ४१॥

एवं सर्वान् समादिश्य पूर्वतीरे महोदधेः ।
क्रूरां मतिं समास्थाय जग्मतुस्सर्वतोदिशम् ॥ ४२॥

यज्ञैर्यजन्ते ये के चिद् याजयन्ति च ये द्विजाः ।
तान् सर्वानसुरौ दृष्ट्वा बलिनौ जघ्नतुस्ततः ॥ ४३॥

आश्रमेष्वग्निहोत्राणि ऋषीणां भावितात्मनाम् ।
गृहीत्वा प्रक्षिपन्त्यप्सु विस्रब्धास्सैनिकास्तदा ॥ ४४॥

तपोधनैश्च ये शापाः क्रुद्धैरुक्ता महात्मभिः ।
नाक्रामन्ति तयोस्तेन वरदानेन च प्रभो ॥ ४५॥

नाक्रामन्ति यदा शापा बाणा मुक्ताश्शिलास्विव ।

नियमांस्तु परित्यज्य विद्रवन्ति द्विजातयः ॥ ४६॥

पृथिव्यां ये तपस्सिद्धाश् शान्ता दमपरायणाः ।
तयोर्भयाद्दुद्रुविरे वैनतेयादिवोरगाः ॥ ४७॥

मथितैराश्रमैर्भग्नैर् विकीर्णैः कलशैस्स्रुवैः ।
शून्यमासीज्जगत्सर्वं कालेनेव हतं यथा ॥ ४८॥

ततो राजन्नदृश्यद्भिर् ऋषिभिश्च तपोधनैः ।
उभौ विनिश्चयं कृत्वा विकुर्वाणौ वधैषिणौ ॥ ४९॥

प्रभिन्नकरटौ मत्तौ भूत्वा कुञ्जररूपिणौ ।
सँल्लीनानपि दुर्गेषु निन्यतुर्यमसादनम् ॥ ५०॥

सिंहौ भूत्वा पुनर्व्याघ्रौ पुनश्चान्तर्हितावुभौ ।
तैरुपायैस्तु तान् क्रुद्धान् ऋषीन् दृष्ट्वा निजघ्नतुः ॥ ५१॥

निवृत्तनित्यस्वाध्याया प्रनष्टनृपतिद्विजा ।
उत्सन्नोत्सवयज्ञा च बभूव वसुधा तदा ॥ ५२॥

हाहाभूता भयार्ता च निवृत्तविपणापणा ।
निवृत्तदेवकार्या च पुण्योद्वाहविवर्जिता ॥ ५३॥

निवृत्तकृषिगोरक्षा विध्वस्तनगराश्रया ।
अस्थिकङ्कालसङ्कीर्णा बभूव ह्युग्रदर्शना ॥ ५४॥

निवृत्तपितृकार्यं च निर्वषट्कारमङ्गलम् ।

जगत् प्रतिभयाकारं दुष्प्रेक्ष्यमभवत् तदा ॥ ५५॥
चन्द्रादित्यौ ग्रहास्तारा नक्षत्राणि दिवौकसः ।
जग्मुर्विषादं तत् कर्म दृष्ट्वा सुन्दोपसुन्दयोः ॥ ५६॥
एवं सर्वा दिशो दैत्यौ जित्वा क्रूरेण कर्मणा ।
निस्सपत्नौ कुरुक्षेत्रे निवेशमभिचक्रतुः* ॥ ५७॥
ततो देवर्षयस्सर्वे सिद्धाश्च परमर्षयः ।
जग्मुस्तदा परामार्तिं दृष्ट्वा तत्कदनं महत् ॥ ५८॥
तेऽभिजग्मुर्जितक्रोधा जितात्मानो जितेन्द्रियाः ।
पितामहस्य भवनं जग्मुस्ते शोककातराः ॥ ५९॥
ततो ददृशुरासीनं सह देवैः पितामहम् ।
सिद्धैर्ब्रह्मर्षिभिश्चैव समन्तात् परिवारितम् ॥ ६०॥
तत्र विष्णुर्महादेवस् तत्राग्निर्वायुना सह ।
चन्द्रादित्यौ च धर्मश्च परमेष्ठी तथा बुधः ॥ ६१॥
वैखानसा वालखिल्यास् सोमपाश्च मरीचिपाः ।
अजाश्चैवाजमीढाश्च तेजोगर्भास्तपस्विनः ॥ ६२॥
ऋषयस्सर्वे एवैते पितामहमुपासते ॥ ६३
ततोऽभिगम्य सहितास् सर्वे एव महर्षयः ।
सुन्दोपसुन्दयोः कर्म सर्वमेवाशशंसिरे ॥ ६४

---

* अ-क-ख-ग—कोशेषु अत्रैवाध्यायसमाप्तिर्दृश्यते

यथा हृतं यथा चैव कृतं येन क्रमेण च ।
[1]न्यवेदयंस्ततस्सर्वम् अखिलेन पितामहम् ॥ ६५

ततो देवगणास्सर्वे ते चैव परमर्षयः ।
तमेवार्थं पुरस्कृत्य पितामहमचोदयन् ॥ ६६

ततः पितामहश्श्रुत्वा सर्वेषां तद्वचस्तदा ।
मुहूर्तमिव सञ्चिन्त्य कर्तव्यस्य विनिश्चयम् ॥ ६७
तयोर्वधं समुद्दिश्य विश्वकर्माणमाह्वयत् ॥ ६७॥

दृष्ट्वा च विश्वकर्माणं व्यादिदेश पितामहः ।
सृज्यतां प्रार्थनीयेन रूपेण स्त्रीत्यथाब्रवीत् ॥ ६८॥

पितामहं नमस्कृत्य तद्वाक्यमभिनन्द्य वै ।
निर्ममेऽपि च तां दिव्यां चिन्तयित्वा प्रयत्नतः ॥ ६९॥

त्रिषु लोकेषु यत् किञ्चिद् भूतं स्थावरजङ्गमम् ।

---

1. घ—यदा न प्रतिषेद्धारस् तयोस्सन्तीह के चन ।
निरुद्योगौ तथा भूत्वा विजह्रातेऽमराविव ॥
पुरे पुरवनोद्याने पर्वतोपवनेऽपि च ।
यथेप्सितेषु सर्वत्र विजह्रातेऽमराविव ॥
ततः कदाचिद्विन्ध्यस्य पृष्ठे तस्य शिलातले ।
पुष्पिताग्रेषु सालेषु विहारमभिजग्मतुः ॥
दिव्येषु सर्वकामेषु सन्नीसीनेषु तत्र वै ।
वरासनेषु संहृष्टास् सह स्त्रीभिर्निषीदतुः ॥
ततो वादित्रनृत्ताभ्याम् उपातिष्ठन्त तास्स्त्रियः ।
गीतैश्च सुसमायुक्तैः प्रीत्यर्थमुपजग्मिरे ॥ [अधिकः पाठः]

समानयद्दर्शनीयं तत्तद्यत्नात् ततस्ततः ॥ ७०॥

तिलशश्चैव रत्नानि तस्या गात्रे न्यवेशयत् ।
तां रत्नसङ्घातमयीम् असृजद्देवरूपिणीम् ॥ ७१॥

सा प्रयत्नेन महता निर्मिता विश्वकर्मणा ।
त्रिषु लोकेषु नारीणां रूपेणाप्रतिमा भुवि ॥ ७२॥

न तस्यास्सूक्ष्ममप्यस्ति यद्गात्रे रूपसम्पदा ।
निर्मितं सर्वगात्रेषु यत्र दृष्टिर्न सज्जते ॥ ७३॥

सा विग्रहवतीव श्रीः कान्तरूपा वपुष्मती ।
पितामहमुपातिष्ठत् किं करोमीति चाब्रवीत् ॥ ७४॥

प्रीतो भूत्वा स दृष्ट्वैव प्रीत्या चास्यै वरं ददौ ।
कान्तत्वं सर्वभूतानां स्वश्रियाऽनुपमं वपुः ॥ ७५॥

सा तेन वरदानेन कर्तुश्च क्रियया तदा ।
जहार सर्वभूतानां चक्षूंषि च मनांसि च ॥ ७६॥

तिलं तिलं समादाय रत्नानां यद्विनिर्मिता ।
तिलोत्तमेत्यतस्तस्या नाम चक्रे पितामहः ॥ ७७॥

पितामहः—

गच्छ सुन्दोपसुन्दाभ्याम् असुराभ्यां तिलोत्तमे ।
प्रार्थनीयेन रूपेण कुरु भद्रे प्रलोभनम् ॥ ७८॥

त्वत्कृते दर्शनादेव रूपसंपत्कृते च वै ।

विरोधस्स्याद्यथा ताभ्याम् अन्योन्यं तु तथा कुरु ॥ ७९॥

नारदः—

सा तथेति प्रतिज्ञाय नमस्कृत्य पितामहम् ।
चकार मण्डलं सा वै त्रिबुधानां प्रदक्षिणम् ॥ ८०॥

प्राङ्मुखो भगवानास्ते दक्षिणेन महेश्वरः ।
देवाश्चैवोत्तरेणासन् सर्वतस्त्वृषयोऽभवन् ॥ ८१॥

कुर्वन्त्यां तु तदा तस्यां मण्डलं तत्प्रदक्षिणम् ।
ब्रह्मा विष्णुश्च भगवान् तूर्णीकृत्यावतिष्ठते ॥ ८२॥
इन्द्रस्स्थाणुश्च भगवान् धैर्यं कृत्वा व्यवस्थितौ ॥ ८३

द्रष्टुकामस्य रुद्रस्य गतायां पार्श्वतस्ततः ।
अन्यदञ्चितपक्ष्माक्षं पश्चिमं निस्सृतं मुखम् ॥ ८४

गतायाश्चोत्तरं पार्श्वम् उत्तरं निस्सृतं मुखम् ।
पृष्ठतः परिवर्तन्त्या दक्षिणं निस्सृतं मुखम् ॥ ८५

महेन्द्रस्यापि नेत्राणां पार्श्वतः पृष्ठतोऽग्रतः ।
रक्तानां च विशालानां सहस्रं सर्वतोऽभवत् ॥ ८६

एवं चतुर्मुखस्स्थाणुर् महादेवोऽभवत् पुरा ।
तथा सहस्रनेत्रश्च बभूव बलसूदनः ॥ ८७

तथा देवनिकायानाम् ऋषीणां चैव सर्वशः ।
मुखान्यपि प्रवर्तन्ते येन याति तिलोत्तमा ॥ ८८

तस्या गात्रे निपतिता दृष्टिस्तेषां महात्मनाम् ।
सर्वेषामेव भूयिष्ठम् ऋते देवं पितामहम् ॥ ८९

गच्छन्त्या च तया देवास् सर्वे च परमर्षयः ।
कृतमित्येव तत् कार्यं मेनिरे रूपसम्पदा ॥ ९०

तिलोत्तमायां तु तदा गतायां लोकभावनः ।
कृतं कार्यमिति श्रीमान् अब्रवीच्च पितामहः ॥ ९१

सर्वान् विसर्जयामास देवानृषिगणांश्च तान्* ॥ ९१॥

जित्वा तु पृथिवीं दैत्यौ निस्सपत्नौ गतव्यथौ ।
त्रैलोक्यं तु वशे कृत्वा कृतकृत्यौ बभूवतुः ॥ ९२॥

देवगन्धर्वयक्षाणां नागपार्थिवरक्षसाम् ।
आदाय सर्वरत्नानि परां तुष्टिमुपागतौ ॥ ९३॥

यदा न प्रतिषेद्धारस् तयोस्सन्तीह के चन ।
निरुद्योगौ ततो भूत्वा विजह्राते यथाऽमरौ ॥ ९४॥

स्त्रीभिर्माल्यैश्च गन्धैश्च भक्ष्यैर्भोज्यैश्च पुष्कलैः ।
पानैश्च विविधैरन्यैः परां प्रीतिमवापतुः ॥ ९५॥

अन्तःपुरे वनोद्याने पर्वतोपवनेषु च ।
यथेप्सितेषु देशेषु विजह्रातेऽमराविव ॥ ९६॥

---

* अ-क-ख-ग—कोशेषु अत्रैवाध्यायसमाप्तिर्दृश्यते ।

ततः कदाचिद्विन्ध्यस्य पृष्ठे समशिलातले ।
पुष्पिताग्रेषु सालेषु विहारमभिजग्मतुः ॥ ९७॥
[1]दिव्येषु सर्वकामेषु समानीतेषु तत्र तौ ।
वरासनेषु संहृष्टौ सह स्त्रीभिर्निषीदतुः ॥ ९८॥
ततो वादित्रनृत्ताभ्याम् उपातिष्ठंस्ततस्त्रियः ।
गीतैश्च स्तुतिसंयुक्तैः प्रीत्यर्थमुपजग्मिरे ॥ ९९॥
ततस्तिलोत्तमा तस्मिन् वने पुष्पाणि चिन्वती ।
वेषमादीप्तमाधाय रक्तेनैकेन वाससा ॥ १००॥

---

1. च—नन्दनादिषु दिव्येषु वनेपूपवनेषु च ।
सरस्तीरेषु कुञ्जेषु गुहासु च दरीषु च ॥
निस्सपत्नं निरुद्विग्नं निर्भयं निर्भरं सुखम् ।
सुनिश्चलं च निश्शङ्कं निर्मर्यादं निराकुलम् ॥
देवदानवरक्षांसि यक्षकिन्नरभूपतीन् ।
मुनीन् ऋषीन् ब्राह्मणांश्च सर्वान् पुण्यकृतो नरान् ॥
हत्वा छित्वा समाच्छिन्द्य स्वेन वीर्येण संभृतम् ।
परोत्सादनतप्तेन तपसा तामसेन च ॥
आर्जितं चिरनष्टेन नाशोदर्कफलं तथा ।
स्ववशे नाशहेतुश्च निरयार्णवपातनम् ॥
एवंभूतं सुखं प्राप्य तौ रेमाते नरेश्वरौ ॥
ततः कदाचिद्विन्ध्यस्य पृष्ठे समशिलातले ।
पुष्पिताग्रेषु सालेषु विहारमभिजग्मतुः ॥
दिव्येषु सर्वभोगेषु समानीतेषु सर्वतः ॥ [अधिकः पाठः]

[1]नदीतीरेषु जातान् सा कर्णिकारान् प्रचिन्वती ।
शनैर्जगाम तं देशं यत्रास्तां तौ महासुरौ ॥ १०१॥
तौ तु पीत्वा परं पानं मदरक्तान्तलोचनौ ।
दृष्ट्वैव तां वरारोहां व्यथितौ सम्बभूवतुः ॥ १०२॥
तावावुत्थायासनं हित्वा जग्मतुर्यत्र सा स्थिता ।
उभौ च कामसंयुक्तावुभौ प्रार्थयतां च ताम् ॥ १०३॥
दक्षिणे तां करे क्रूरस् सुन्दो जग्राह पाणिना ।
उपसुन्दोऽपि जग्राह वामे पाणौ तिलोत्तमाम् ॥ १०४॥
वरप्रदानमत्तौ तावौरसेन बलेन च ।
धनरत्नमदाभ्यां च सुरापानमदेन च ॥ १०५॥
[2]सर्वैरेतैर्मदैर्मत्तावन्योन्यं भ्रुकुटीकृतौ ॥ १०६
तौ कटाक्षेण दैत्येन्द्रावाकर्षति मुहुर्मुहुः ।
दक्षिणेन कटाक्षेण सुन्दं जग्राह कामिनी ॥ १०७
वामेनैव कटाक्षेण उपसुन्दं जिघृक्षती ॥ १०७॥
गन्धाभरणरूपैस्तौ व्यामोहं जग्मतुस्तदा ॥ १०८

1. घ—बाहुमूलोरुवक्षोजनाभिमूलप्रदर्शिनी ।
स्वकङ्कणझणत्कारमुखरीकृतदिङ्मुखा ॥
स्वकरस्पर्शसञ्जातमदनाकुलभास्वरा ।
पद्मोत्पलदलाकीर्णाः कुर्वन्ती स्वदृशा दिशः ॥ [अधिकः पाठः]
2. घ—वारयोषित्सहस्रोत्थरतिभोगमदेन च ।
निस्सपत्नमदेनापि रूपलावण्यजेन च ॥ [अधिकः पाठः]

मदकामसमाविष्टौ परस्परमथोचतुः ॥ १०८॥

मम भार्या तव गुरुर् इति सुन्दोऽभ्यभाषत ।
मम भार्या तव वधूर् उपसुन्दोऽभ्यभाषत ॥ १०९॥

[1]नैषा तव ममैषेति तत्र तौ मन्युराविशत् ।
तस्या हेतोर्गदे भीमे सङ्गृह्णीतामुभौ हि तौ ॥ ११०॥

[2]प्रगृह्य तौ गदे भीमे तस्याः कामेन मोहितौ ।
[3]अहंपूर्वमहंपूर्वम् इत्यन्योन्यं निजघ्नतुः ॥ १११॥

तौ गदाभिहतौ भीमौ पेततुर्धरणीतले ।
रुधिरेणैव लिप्ताङ्गौ द्वाविवार्कौ नभश्च्युतौ ॥ ११२॥

---

1. घ—ज्येष्ठभार्याभिगमने नाचरेद्गुरुतल्पगम् ।
इति मत्वाऽनुज भ्रातर् मुञ्चेमां मत्परिग्रहाम् ॥
कनिष्ठभार्याभिगमे भवदुग्रमघं भवेत् ।
इति मत्वा स्नुषां चेमाम् उपसुन्दोऽभ्यभाषत ॥
एषा मम ममेत्येवं वदन्तौ भ्रातरावुभौ ।
प्रविवेश महान् मन्युः कालसृष्टो महीपते ॥ [अधिकः पाठः]

2. घ—शतभारायसीं गुर्वीं सहस्रघ्नीं पृथक्पृथक् ।
कालदण्डमहादण्डसमाने घोरदर्शने ।
तां प्रगृह्य गदे भीमे [अधिकः पाठः]

3. घ—परस्परगदाघातैर् युयुधाते परस्परम् ।
सुचिरं युध्यतोरेवं समीपमुपसर्पति ॥
कटाक्षवीक्षणैश्चैव मुखावयवदर्शनैः ।
विलासमुखसंलापैर् गमनागमनेन च ॥
कामक्रोधानले चित्रे ज्वालयामास सा तयोः ।
शिरसोस्तौ गदाघातैर् अन्योन्यमभिजघ्नतुः ॥ [अधिकः पाठः]

ततस्ता विद्रुता नार्यस् स च दैत्यगणस्तदा ।
पातालमगमन् सर्वे विषादभयशङ्किताः ॥ ११३॥
ततः पितामहस्तत्र सहदेवैर्महर्षिभिः ।
आजगाम विशुद्धात्मा पूजयिष्यंस्तिलोत्तमाम् ॥ ११४॥
वरेण च्छन्दिता सा च भगवत्प्रीतिमेव सा ।
[1]वरयामास तत्रैतां प्रीतः प्राह पितामहः ॥ ११५॥

पितामहः—
[2]आदित्यचरिताँल्लोकान् विचरिष्यसि तेजसा ।
तेजसा तेन दृष्टस्त्वां न हरिष्यति कश्चन ॥ ११६॥

नारदः—
एवं तस्यै वरं दत्वा सर्वलोकपितामहः ।
इन्द्रे त्रैलोक्यमाधाय ब्रह्मलोकं गतः प्रभुः ॥ ११७॥
[3]एवं तौ सहितौ भूत्वा सर्वार्थेष्वेकनिश्चयौ ।
तिलोत्तमार्थे सङ्क्रुद्धावन्योन्यमभिजघ्नतुः ॥ ११८॥
तस्माद्ब्रवीमि वस्स्नेहात् सर्वान् भरतसत्तमाः ॥ ११९

---

1. घ—भक्तिर्मे भास्करे ब्रह्मन्नचला पद्मसम्भव ।
एवं वृतस्तया ब्रह्मा प्रीतः प्राह सुलोचनाम् ॥ [अधिकः पाठः]
2. ख—दिवि तावत् सुकल्याणि दिव्यभोगसमन्विता ।
चरिष्यस्यकुतोभीता रूपेणानेन नित्यदा ।
तेजसा तव दृष्ट्वा त्वां नाहरिष्यति कश्चन ॥ [अधिकः पाठः]
3. घ—कालस्तिलोत्तमारूपं कृत्वा हत्वा महासुरौ ।
परां निर्वृतिमापेदे साऽगात्सूर्यसलोकताम् ॥ [अधिकः पाठः]

यथा वो नात्र भेदस्स्यात् सर्वेषां द्रौपदीकृते ।
तथा कुरुत भद्रं वो मम चेत् प्रियमिच्छथ ॥ १२०
यथा सुन्दोपसुन्दाभ्यां तथा न स्याद्युधिष्ठिर ॥ १२०॥

[1] वैशम्पायनः—

एवमुक्ता महात्मानो नारदेन महर्षिणा ।
समयं चक्रिरे राजंस् तेऽन्योन्येन समागताः ॥ १२१॥
समक्षं तस्य देवर्षेर्नारदस्यामितौजसः ॥ १२२
एकैकस्य गृहे कृष्णा वसेद्वर्षमकल्मषा ॥ १२२॥
द्रौपद्या च समासीनम् अन्योन्यं यो विदर्शयेत् ।
स नो द्वादश वै मासान् ब्रतचारी वने वसेत् ॥ १२३॥
कृते च समये तस्मिन् पाण्डवैर्धर्मचारिभिः ।
ततस्स भगवांस्तत्र पाण्डवैरर्चितः प्रभुः ॥ १२४॥
नारदोऽप्यगमत्प्रीत इष्टं देशं महामुनिः ॥ १२५
[2]एवं तैस्समयः पूर्वं कृतो नारदचोदितैः ॥ १२५॥
न चाभिद्यन्त ते सर्वे तदाऽन्योन्येन भारत ॥ १२६

---

1. क-ग—पुरा सुन्दोपसुन्दाभ्यां यथा तस्माद्युधिष्ठिर ।
घ—सर्वदा जायते भेदस् स्त्र्यर्थे स विदुषामपि ।
कामस्सर्वात्मना वाऽपि सर्वान् योषित्सु योजयेत् ॥
[अधिकः पाठः]

2. घ—विनिर्ययौ शुभे काले ह्यनुप्रस्थात् सुरालयम् । [अधिकः पाठः]

एतद्विस्तरशस्सर्वम् आख्यातं ते नरेश्वर ।
काले च तस्मिन् सम्पन्नं यथावज्जनमेजय ॥ १२७

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्याम
आदिपर्वणि द्विशततमोऽध्यायः ॥ २०० ॥
॥ १५ ॥ राज्यलाभपर्वणि तृतीयोऽध्यायः ॥ ३ ॥
[अस्मिन्नध्याये १२७ श्लोकाः]

[समाप्तं च राज्यलाभपर्व]

---

## ॥ एकाधिकद्विशततमोऽध्यायः ॥

(अथार्जुनवनवासपर्व)

तस्करैः कस्यचिद्ब्राह्मणस्य गोहरणम् ॥ १ ॥ चोरितानां गवां प्रत्याजिहीर्षया धनुर्ग्रहणार्थं द्रौपदीयुधिष्ठिराधिष्ठिते आयुधागारे अर्जुनस्य प्रवेशः ॥ २ ॥ चोरेभ्यः प्रत्याहृता गाः ब्राह्मणाय दत्त्वा यथासमयं अर्जुनस्य तीर्थयात्रा ॥ ३ ॥

वैशम्पायनः—

एवं ते समयं कृत्वा न्यवसंस्तत्र पाण्डवाः ।
वशे शस्त्रप्रतापेन कुर्वन्तोऽन्यान् महीक्षितः ॥ १

तेषां मनुजसिंहानां पञ्चानाममितौजसाम् ।
बभूव कृष्णा सर्वेषां पार्थानां वशवर्तिनी ॥ २

[1]ते तया तैश्च सा वीरैः पतिभिस्सह पञ्चभिः ।
बभूव परमप्रीता नागैरिव सरस्वती ॥ ३

1.

वर्तमानेषु धर्मेण पाण्डवेषु महात्मसु ।
व्यवर्धन् कुरवस्सर्वे हीनदोषास्सुखान्विताः ॥ ४

अथ दीर्घेण कालेन ब्राह्मणस्य विशांपते ।
कस्यचित्तस्कराः केचिज् जह्रुर्गा नृपसत्तम ॥ ५

ह्रियमाणे धने तस्मिन् ब्राह्मणः क्रोधमूर्च्छितः ।
आगम्य खाण्डवप्रस्थम् उदक्रोशत पाण्डवान् ॥ ६

ब्राह्मणः —

ह्रियते गोधनं क्षुद्रैर् नृशंसैरकृतात्मभिः ।
प्रगृह्य चास्मद्विषयाद् अभिधावन्ति पाण्डवाः ॥ ७

ब्राह्मणस्याप्रमत्तस्य हविर्ध्वाङ्क्षैर्विलुप्यते ॥ ७॥

शार्दूलस्य गुहां [1]शून्यां नीचः क्रोष्टाऽभिमन्यते ॥ ८

ब्राह्मणस्वे हृते चोरैर् धर्मार्थौ च विलोपितौ ।
रोरूयमाणे च मयि क्रियतामस्त्रधारणम् ॥ ९

वैशम्पायनः—

रोरूयमाणस्याभ्याशे भृशं विप्रस्य पाण्डवः ।
तानि वाक्यानि शुश्राव कुन्तीपुत्रो धनञ्जयः ॥ १०

श्रुत्वैव च महाबाहुर् मा भैरित्याह तं द्विजम् ॥ १०॥

1. ब—भीमामधिगच्छन्ति जम्बुकाः

आयुधानि च यत्रासन् पाण्डवानां महात्मनाम् ।
कृष्णया सह तत्रासीद् धर्मराजो युधिष्ठिरः ॥ ११॥
स प्रवेशाय चाशक्तो गन्तुमिच्छंश्च पाण्डवः ।
तस्य चार्तस्य तैर्वाक्यैश् चोद्यमानः पुनः पुनः ॥ १२॥
[1]आक्रन्देन च कौन्तेयश् चिन्तयामास दुःखितः ॥ १३
ह्रियमाणे धने तस्मिन् ब्राह्मणस्य तपस्विनः ।
उपप्रेक्षणजोऽधर्मस् सुमहान् स्यान्महीपतेः ॥ १४
आत्मप्रमार्जनं तस्य कर्तव्यमिति निश्चयः ॥ १४॥
यद्यस्य रुदतो द्वारि न करोम्यद्य रक्षणम् ।
नास्तिक्यं चापि सर्वेषाम् अस्माकं स्यादधर्मजम् ॥ १५॥
प्रतितिष्ठेत लोकेऽस्मिन् अधर्मश्चैव नो भवेत् ॥ १६
अनापृच्छयैव राजानं गते मयि न संशयः ।
अजातशत्रोर्नृपतेर् मम चैवाप्रियं भवेत् ॥ १७
[2]अनुप्रवेशे राज्ञस्तु वनवासो भवेन्मम ।

---

1. च—आक्रोशति द्विजे तस्मिंश् चिन्तयामास फल्गुनः ।
2. च—एवं विचार्य कौन्तेयो ब्राह्मणं पुनरब्रवीत् ।
उपर्युपरि चात्यर्थं विक्रोशन्तं पुनः पुनः ॥
प्रतीक्षस्व क्षणं विप्र समयो विषमोऽधुना ॥
अस्माकमायुधागारे धर्मराजस्स कृष्णया ।
शेते तत्र प्रवेष्टुं मे न शक्यस्समयो हि नः ॥
गोधनं तेऽपहर्तुं न चोराणां शक्तिरस्ति हि ॥

अधर्मो वै महानस्तु वने वा मरणं मम ॥ १८

शरीरस्यापि नाशात्तु धर्म एव विशिष्यते ॥ १८॥

एवं विनिश्चित्य ततः कुन्तीपुत्रो धनञ्जयः ।

अनुप्रविश्य राजानम् अभिवाद्य विनिस्सृतः ॥ १९॥

धनुरादाय संहृष्टो ब्राह्मणं प्रत्यभाषत ॥ २०

अर्जुनः—

ब्राह्मणागम्यतां शीघ्रं यावत् परधनैषिणः ।

---

पूर्वतोऽनुवृत्तम्—

त्रैलोक्यान्तर्गतमपि साधये तव गा द्विज ? ।
पातालेषु दिगन्तेषु भूरादिषु च सप्तसु ॥
यत्र कुत्राप्यहं ते गां गतास्ताः पुनरानये ।
सत्येनायुधमालप्स्ये भयामो भैक्षणं कुरु ? ॥

ब्राह्मणः—

दूरं गते धने मह्यं कथं लभ्येत मे पुनः ।
न जीवामि नृपश्रेष्ठ गतिरन्या न विद्यते ॥
राज्यं राष्ट्रं पुरो ग्रामनगराणि नृपात्मज ।
सर्वत्र विवृतद्वारं सर्वत्रैवाकुतोभयम् ॥
मम भाग्यविपर्यासाच् चोरैर्मेऽपहृतं धनम् ।
निवर्तयाशु मे गास्त्वं नोपेक्षां कुरु फल्गुन ॥
यदि धर्मः प्रमाणं ते प्रजानां परिपालनम् ।
गा मे निवर्तयाशु त्वं जीवितुं यदिहेच्छसि ॥
हारयित्वा धनं चोरैर् मह्यं क्षत्रकुलोद्भव ॥
सपुत्रज्ञातिसम्बन्धिसुहृद्भिस्तकलत्रवान् ।
सुखी भव चिरं जीव यामि राज्यं सुराजकम् ॥
एवं विक्रोशमानेऽस्मिन् चिन्तयामास फल्गुनः ।
धर्मकोपभयाद्भीतो ब्रह्मण्यो ब्रह्मवत्सलः ।
अनुप्रवेशाद्राज्ञस्तु वनवासो भवेन्मम ॥ [अधिकः पाठः]

अदूराध्वगताः क्षुद्रास् तावद्गच्छावहे सह ॥ २१
[1]यावदावर्तयाम्यद्य चोरहस्ताद्धनं तव ॥ २१॥

वैशम्पायनः—

सोऽनुसृत्य महाबाहुर् धन्वी वर्मी रथी ध्वजी ।
[2]शरैर्विध्वस्य तांश्चोरान् अपजित्य च तद्धनम् ॥ २२॥
ब्राह्मणस्य उपाकृत्य यशः पीत्वा च पाण्डवः ।
[3]आजगाम पुरं वीरस् सव्यसाची धनञ्जयः ॥ २३॥

---

1. च—हरन्ति गोधनं दूरात् तावद्गच्छावहे सह ।
मा भैस्त्वं गोधनं तुभ्यं शीघ्रमावर्तयाम्यहम् ।
चोरहस्तगता वाऽपि त्रिलोकात् परतोऽपि वा ॥ [अधिकः पाठः]
2. च—पदपङ्क्तिं समादाय चोराणां च गवां तथा ॥ [अधिकः पाठः]
3. च—कृतार्थयित्वा विप्रं तं तोषयित्वा पुनः पुनः ।
प्रेषयित्वा द्विजश्रेष्ठं चोरांस्तानाह फल्गुनः ॥
कुतो यूयं धर्मसूनो राज्यं निहतकण्टकम् ।
अकुतोभयचारं च सर्वस्व निरुपद्रवम् ॥
सर्वत्रासंवृतद्वारं निश्शङ्कं निर्भयं सुखम् ।
प्रविश्य गोधनं हृत्वा कुतो यास्यथ निर्भयाः ॥
किं नु न ज्ञास्यथ नृपं धर्मसूनुं युधिष्ठिरम् ।
तस्यानुजं भीमसेनं नागायुतबलं बले ॥
यद्बाहुबलमाश्रित्य वयं जीवाम निर्भयाः ।
किं न ज्ञास्यथ तं भीमं तयोर्भ्राताऽहमर्जुनः ॥
किङ्करो धर्मराजस्य भीमस्य च महात्मनः ।
नकुलं सहदेवं च रूपे ज्ञाने च निस्समौ ॥
तौ राज्ञश्चक्षुषी चैव तौ च न ज्ञायतो ध्रुवम् ।
यस्याज्ञया जगत्यस्मिन् चोरशब्दस्थितौ श्रुतः ॥
तत्रापि पापचौर्यत्वम् अपरद्रव्यचौर्यतः ।
तस्माद्वदत के यूयं कस्य वा च्छन्दकारिणः ॥

चोराः—

कौन्तेय नास्मि चोरोऽपि नास्माभिर्गोधनं हृतम् ।
नैव गोमांस्स विप्रोऽपि गुह्यं श्रृणु पृथात्मज ॥
स ब्राह्मणो बलारातिः गन्धर्वास्स्याम पाण्डव ।
मायात्मिकाश्च ता गावः श्रृणु धर्मं सनातनम् ॥

आज्ञां जिज्ञासमानेन भक्तिं वो ब्राह्मणेषु च ।
कारणं किञ्चिदुद्दिश्य शोधितोऽसि बलारिणा ॥

दिवा वा यदि वा रात्रौ सन्ध्ययोश्च सदाऽपि वा ।
सुनिद्रासमये चापि भोजनावसरेपु च ॥

भोगानुभववेलासु सर्वेषाज्ञां प्रवर्तय ।
आज्ञामूलं जगत् सर्वम् आज्ञाहीनं हि नश्यति ॥

आज्ञां विना न कर्माणि सन्ति सर्वाणि भूतले ।
राज्ञो मूलश्रियो विप्रास् तेषु भक्तिमचञ्चलाम् ॥

यूयं कुरुत भूपाल ब्रह्मक्षत्रं प्रवर्तते ।
अन्यच्छृणु परं गुह्यं न वक्तव्यं कथञ्चन ॥

भ्रातृभिश्चापि कौन्तेय ज्येष्ठेनापि कदा चन ।
भ्रातृभिः प्रतिषिद्धोऽपि तीर्थयात्रां न मोक्ष्यसि ॥

हेतुभिश्शास्त्रवचनैर् ज्ञातिसम्बन्धिबान्धवैः ।

पाताले नागकन्यां च भूमौ पाण्ड्यसुतामपि ॥

द्वारकायां सुभद्रां च परिणेष्यसि फल्गुन ।
उपभार्यात्रयं त्वेवं भविष्यति तवानघ ॥
भीमस्य च हिडिम्ब्यासीद् धर्मसूनोर्भविष्यति ।
भविष्यतश्च यमयोस् तीर्थयात्रां समाचर ॥

वैशम्पायनः—

एवमुक्त्वाऽर्जुनं तत्र रहस्यं देवनिर्मितम् ।
अन्तर्धानं ययुस्सर्वे गन्धर्वाश्चोररूपिणः ।
श्रुत्वैवं तद्रहोवाक्यं गन्धर्वोक्तं शचीशजम् ॥ [अधिकः पाठः]

सोऽभिवाद्य गुरून् सर्वांस् तैश्चापि प्रतिनन्दितः ।
[1]धर्मराजमुवाचेदं व्रतमादिश्यतां मम ॥ २४॥

समयस्समतिक्रान्तो भवतो दर्शनान्मम ।
वनवासं गमिष्यामि समयो ह्येष नः कृतः ॥ २५॥

इत्युक्तो धर्मराजस्तु सहसा वाक्यमब्रवीत् ॥ २६

कथमित्यब्रवीद्वाचा शोकार्तस्सज्जमानया ।
युधिष्ठिरो गुडाकेशं भ्राता भ्रातरमब्रवीत् ॥ २७

युधिष्ठिरः—

प्रमाणमस्मि यदि ते मत्तश्शृणु वचो मम ॥ २७॥

अनुप्रवेशं यद्वीर कृतवांस्त्वं ममाप्रियम् ।
सर्वं तदनुजानामि व्यलीकं न च मे हृदि ॥ २८॥

गुरोरनुप्रवेशेन नोपघातो यवीयसः ।
यवीयसोऽनुप्रवेशो ज्येष्ठस्य विधिलोपकृत् ॥ २९॥

निवर्तस्व महाबाहो कुरुष्व वचनं मम ।
न हि ते धर्मलोपोऽस्ति न च मे धर्षणा कृता ॥ ३०॥

अर्जुनः—

न व्याजेन चरेद्धर्मम् इति मे भवतश्श्रुतम् ।
न तस्माद्विचलिष्यामि सत्येनायुधमालभे ॥ ३१॥

---

1. ब—अभिवन्दितो यमाभ्यां च तैश्च स प्रतिनन्दितः । [अधिकः पाठः]

आज्ञा तु मम दातव्या भवता कीर्तिवर्धन ।
भवदाज्ञामृते किञ्चिन्न कार्यमिति निश्चितम् ॥ ३२॥

वैशम्पायनः—

सोऽभ्यनुज्ञाप्य राजानं ब्रह्मचर्यादिदीक्षितः ।
वने द्वादश [1]मासानां वासायोपजगाम ह ॥ ३३॥

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्याम्
आदिपर्वणि एकाधिकद्विशततमोऽध्यायः* ॥ २०१ ॥
॥ १६ ॥ अर्जुनवनवासपर्वणि प्रथमोऽध्यायः ॥ १ ॥
[अस्मिन्नध्याये ३३॥ श्लोकाः]

---

## ॥ द्व्यधिकद्विशततमोऽध्यायः ॥

ब्राह्मणैस्सह तीर्थान्यटतोऽर्जुनस्य गङ्गायामवतरणम् ॥ १ ॥ तत्र उलूप्या नागकन्यया गृहीतस्यार्जुनस्य नागलोकगमनम् ॥ २ ॥ संवाद-पूर्वकमुलूप्याः परिग्रहः ॥ ३ ॥ इरावत उत्पत्तिः ॥ ४ ॥ अर्जुनं पुनर्गङ्गा-द्वारमुपनीय उलूप्यास्स्वलोकगमनम् ॥ ५ ॥

---

वैशम्पायनः—

तं प्रयान्तं महाबाहुं कौरवाणां यशस्करम् ।
अनुजग्मुर्महात्मानो ब्राह्मणा वेदपारगाः ॥ १

---

1. मासान्हि

* घ-कोशे नात्राध्यायसमाप्तिर्दृश्यते ।

वेदवेदाङ्गविद्वांसस् तथैवाध्यात्मचिन्तकाः ।
[1]मौक्षाश्च भगवद्भक्तास् सूताः पौराणिकाश्च ये ॥ २
कथकाश्चापरे राजन् श्रमणाश्च वनौकसः ।
[2]दिव्याख्यानानि ये चापि पठन्ति मधुरं द्विजाः ॥ ३
एतैश्चान्यैश्च बहुभिस् सहायैः पाण्डुनन्दनः ।
पृथक्छ्लक्ष्णकथैः प्रायान्मरुद्भिरिव वासवः ॥ ४
रमणीयानि चित्राणि वनानि च सरांसि च ।
सरितस्सागरांश्चैव देशानपि च भारत ॥ ५
पुण्यान्यपि च तीर्थानि ददर्श भरतर्षभः ॥ ५॥
स गङ्गाद्वारमासाद्य निवेशमकरोत् प्रभुः ॥ ६
तस्य तत्राद्भुतं कर्म शृणु मे जनमेजय ।
कृतवान् यद्विशुद्धात्मा पाण्डूनां प्रवरो रथी ॥ ७
निविष्टे तत्र कौन्तेये ब्राह्मणेषु च भारत ।
अग्निहोत्राणि विप्रास्ते प्रादुश्चक्रुरनेकशः ॥ ८
तेषु प्रणीयमानेषु ज्वलितेषु हुतेषु च ।
कृतपुष्पोपहारेषु निरन्तरगतेषु च ॥ ९

---

1. ब—वैयाकरणपाण्डित्या मीमांसान्यायकोविदाः ।
सांख्ययोगविदश्चान्ये तर्कपादविदस्तथा ॥ [अधिकः पाठः]

2. ब—दिव्याख्यानविदश्चान्ये यतयस्संशितव्रताः ।
नित्याग्निहोत्रिणो विप्रास् सदारसुतबान्धवाः ॥ [अधिकः पाठः]

कृताभिषेकैर्विद्वद्भिर् नियतैस्सत्पथे स्थितैः ।
शुशुभेऽतीव तद्राजन् गङ्गाद्वारं महात्मभिः ॥ १०

तथा पर्याकुले तस्मिन् निवेशे पाण्डवर्षभः ।
अभिषेकाय कौन्तेयो गङ्गामवततार ह ॥ ११

तत्राभिषेकं कृत्वा स तर्पयित्वा पितामहान् ।
उत्तितीर्षुर्जलाद्राजन् अग्निकार्यचिकीर्षया ॥ १२

अपकृष्टो महाबाहुर् नागराजस्य कन्यया ;
अन्तर्जले महाबाहुर् उलूप्या कामयानया ॥ १३

ददर्श पाण्डवस्तत्र पावकं सुसमाहितः ।
कौरव्यस्याथ नागस्य भवने परमार्चिते ॥ १४

तत्राग्निकार्यं कृतवान् कुन्तीपुत्रो धनञ्जयः ।
अशङ्कमानेन हुतस् तेनातुष्यद्धुताशनः ॥ १५

अग्निकार्यं स कृत्वा तु नागराजसुतां तदा ।
प्रहसन्निव कौन्तेय इदं वचनमब्रवीत् ॥ १६

अर्जुनः—

किमिदं साहसं भीरु कृतवत्यसि भामिनि ।
कश्चायं सुभगे देशः का च त्वं कस्य वाऽऽत्मजा ॥ १७

उलूपी—

ऐरावतकुले जातः कौरव्यो नाम पन्नगः ।

तस्याहं दुहिता पार्थ उलूपी नाम पन्नगी ॥ १८

साऽहं त्वामभिषेकार्थम् अवतीर्णं सरिद्वराम् ।
दृष्टवत्येव कौन्तेय कन्दर्पेणापि मूर्च्छिता ॥ १९

तां मामनङ्गमथितां त्वत्कृते कुरुनन्दन ।
अनन्यां नन्दयस्वाद्य प्रदानेनात्मनो रहः ॥ २०

अर्जुनः—

ब्रह्मचर्यमिदं भद्रे मम द्वादशमासिकम् ।
धर्मराजेन चादिष्टो नाहमस्मि स्वयं वशः ॥ २१

तव चापि प्रियं कर्तुम् इच्छामि जलचारिणि ।
अनृतं नोक्तपूर्वं च मया किञ्चन कर्हि चित् ॥ २२

कथं च नानृतं च स्यात् तव चैव प्रियं भवेत् ।
[1]अधर्मो मे न सिद्ध्येत तथा कार्यं भुजङ्गमे ॥ २३

उलूपी—

जानाम्यहं पाण्डवेय यथा चरसि मेदिनीम् ।
[2]यथा हि ते ब्रह्मचर्यम् इति वस्समयः कृतः ॥ २४

---

1. अ-ख-कोशयोः—सिद्ध्येत न च मेऽधर्मस्तथा कुर्यां भुजङ्गमे ।
क-ग-कोशयोः—पीड्येत न च मे धर्मस्तथा कुर्यां भुजङ्गमे ॥

2. क-ख-ग—तथा हि ते ब्रह्मचर्यम् इदमादिष्टवान् प्रभुः ।
परस्परं वर्तमानां द्रुपदस्य सुतां प्रति ।
यो नोऽनुप्रविशेन्मोहात् स नो द्वादशमासिकम् ॥
[अधिकः पाठः]

तदिदं द्रौपदीहेतोर् अन्योन्यस्य प्रवासनम् ।
कृतवांस्तत्र धर्मार्थम् अत्र धर्मो न लुप्यते ॥ २५
परित्राणं च कर्तव्यम् आर्तानां पृथुलोचन ।
कृत्वा मम परित्राणं तव धर्मो न लुप्यते ॥ २६
त्वया कामप्रचाराय प्रेरितं न हि यन्मनः ।
तस्मात् तव प्रत्यवायो युज्यते न हि कुत्रचित् ॥ २७
यदि वाऽप्यस्य धर्मस्य सूक्ष्मोऽपि स्याद् व्यतिक्रमः ।
स च ते धर्म एव स्याद् दत्त्वा प्राणान् ममार्जुन ॥ २८
भक्तां भजस्व मां पार्थ सतामेतन्मतं प्रभो ।
न करिष्यसि चेदेवं मृतां मामुपधारय ॥ २९
प्राणदानान्महाबाहो चर धर्ममनुत्तमम् ।
शरणं च प्रपन्नाऽस्मि त्वामद्य पुरुषोत्तम ॥ ३०
दीनानाथांश्च कौन्तेय परिरक्षसि नित्यशः ।
साऽहं शरणमभ्येमि रोरवीमि च दुःखिता ॥ ३१
याचे त्वामभिकामाऽहं तस्मात् कुरु मम प्रियम् ।
स त्वमात्मप्रदानेन सकामां कर्तुमर्हसि ॥ ३२

1वैशम्पायनः—

एवमुक्तस्तु कौन्तेयः पन्नगेश्वरकन्यया ।

---

1. घ—आतिष्ठ गन्धर्ववचो गोधनस्य विमोक्षणे ।
ब्राह्मणस्य स ते धर्म आर्तानामार्तिनाशन ॥ [अधिकः पाठः]

कृतवांस्तत्तथा सर्वं धर्ममुद्दिश्य कारणम् ॥ ३३

स नागभवने रात्रिं तामुषित्वा प्रतापवान् ।
पुत्रमुत्पादयामास स तस्यां सुमनोहरम् ॥ ३४

इरावन्तं महाभागं महाबलपराक्रमम् ॥ ३४॥

[1]विमलेऽभ्युदिते सूर्ये कौरव्यस्य निवेशनात् ।
निश्चक्राम तदा पार्थस् स्वमेव भवनं शुभम् ॥ ३५॥

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्याम्
आदिपर्वणि द्व्यधिकद्विशततमोऽध्यायः ॥ २०२ ॥
॥ १६ ॥ अर्जुनवनवासपर्वणि द्वितीयोऽध्यायः ॥ २ ॥
[अस्मिन्नध्याये ३५॥ श्लोकाः]

---

## ॥ त्र्यधिकद्विशततमोऽध्यायः ॥

अर्जुनस्य मणलूरुपुरगमनम् ॥ १ ॥ पुत्रिकापुत्रकधर्मेण चित्राङ्गदा-परिग्रहः ॥ २ ॥

---

वैशम्पायनः—

कथयित्वा च तत्सर्वं ब्राह्मणेभ्यस्स भारत ।
प्रययौ हिमवत्पार्श्वे ततो वज्रधरात्मजः ॥ १

अगस्त्यवनमासाद्य वसिष्ठस्य च पर्वतम् ।
भृगुतीर्थे च कौरव्यः कृतवाञ्शौचमात्मनः ॥ २

---

1. ध—फल्गुनो यस्य मनसि सत्त्ववीर्यबलोन्नतैः ।
अष्टादशदिनं युद्धं कृष्णमात्मजमजीजनत् ॥ [अधिकः पाठः]

प्रददौ गोसहस्राणि यज्ञानुद्दिश्य दक्षिणाः ।
निवेशांश्च द्विजातिभ्यस् सोऽददात् कुरुसत्तमः ॥ ३

हिरण्यबिन्दोस्तीर्थानि स्नात्वा पुरुषसत्तमः ।
दृष्टवान् पर्वतश्रेष्ठान् पुण्यान्यायतनानि च ॥ ४
अवतीर्य नरश्रेष्ठो ब्राह्मणैस्सह भारत ।
प्राचीं दिशमभिप्रेप्सुर् जगाम भरतर्षभः ॥ ५
आनुपूर्व्येण तीर्थानि दृष्टवान् कुरुसत्तमः ।
नदीं चोत्पलिनीं रम्याम् अरण्यं नैमिशं प्रति ॥ ६
नन्दामपरनन्दां च कौशिकीं च यशस्विनीम् ।
महानदीं गयां चैव गङ्गामपि च भारत ॥ ७
एवं तीर्थानि सर्वाणि पश्यमानस्तथाऽऽश्रमान् ।
आत्मनः पावनं कुर्वन् ब्राह्मणेभ्यो धनं ददौ ॥ ८

अङ्गवङ्गकलिङ्गेषु यानि पुण्यानि कानि चित् ।
जगाम तानि सर्वाणि पुण्यान्यायतनानि च ॥ ९
दृष्ट्वा च विधिवत्तानि धनं चापि ददौ पुनः ॥ ९॥
कलिङ्गराष्ट्रद्वारे तु ब्राह्मणाः पाण्डवानुगाः ।
अभ्यनुज्ञाय कौन्तेयम् उपावर्तन्त भारत ॥ १०॥
स तु तैरभ्यनुज्ञातः कुन्तीपुत्रो धनञ्जयः ।
सहायैरल्पकैश्शूरैः प्रययौ [1]लवणार्णवम् ॥ ११॥

1. अ-क-ग-च—येन सागरम् ॥

स कलिङ्गानतिक्रम्य देशानायतनानि च ।
हर्म्याणि रमणीयानि प्रेक्षमाणो ययौ प्रभुः ॥ १२॥

शूर्पाकारमथाप्लुत्य सागरानूपमाश्रितः ।
महेन्द्रपर्वतं दृष्ट्वा तापसैरुपशोभितम् ॥ १३॥

गोदावर्यां ततस्स्नात्वा तामतीत्य महाबलः ।
कावेरीं तामथासाद्य सङ्गमे सागरस्य ह ॥ १४॥

स्नात्वा सम्पूज्य देवांश्च पितॄंश्च मुनिभिस्सह ।
समुद्रतीरेण शनैर् मणलूरुं जगाम ह ॥ १५॥

तत्र सर्वाणि तीर्थानि पुण्यान्यायतनानि च ।
अत्र त्रयोदशे मासे मणलूरेश्वरं प्रभुम् ॥ १६॥

अभिगम्य महाबाहुम् अभ्यगच्छन्महीपतिम् ॥ १७

मणलूरेश्वरं राजन् धर्मज्ञं चित्रवाहनम् ।
सर्वशास्त्रेषु नेतारं सर्वाङ्गममकल्मषम् ॥ १८

धर्मे सत्ये दमे शौचे शौर्ये चैव विशेषतः ।
द्विजराजऋषीणां च धार्मिकाणां महास्थले ॥ १९

कीर्तने चोपमाभूतं क्षत्रधर्मविदुत्तमम् ॥ १९॥

तस्य चित्राङ्गदा नाम दुहिता चारुदर्शना ॥ २०

तां ददर्श पुरे तस्मिन् विचरन्तीं यदृच्छया ॥ २०॥

दृष्ट्वा च तां वरारोहां चकमे चैत्रवाहनीम् ।
अभिगम्य च राजानं ज्ञापयत् स्वं प्रयोजनम् ॥ २१॥
तमुवाचाथ राजा स सान्त्वपूर्वमिदं वचः ॥ २२

चित्रवाहनः—
राजा प्रभाकरो नाम कुलेऽस्मिन् सम्बभूव ह ।
अपुत्रः प्रसवेनार्थी तपस्तेपे स चोत्तमम् ॥ २३
उग्रेण तपसा तेन प्रणिपत्य प्रणम्य च ।
ईश्वरस्तोषितः पार्थ देवदेव उमापतिः ॥ २४
स तस्मै भगवान् प्रादाद् एकप्रसवजं कुलम् ।
एकैकः प्रसवस्तस्माद् भवत्यस्मिन् कुले सदा ॥ २५
तेषां कुमाराः पूर्वेषां सर्वेषां मम जज्ञिरे ।
कन्या तु मम जातेयं कुलस्योत्पादनी ध्रुवम् ॥ २६
पुत्रो ममेयमिति मे भावना पुरुषोत्तम ।
पुत्रिकाहेतुविधिना सम्मता भरतर्षभ ॥ २७
तस्मादेकस्सुतो योऽस्यां जायते भारत त्वया ।
एतच्छुल्कं भवत्वस्यां कुलकृज्जायतामिति ॥ २८
एतेन समयेनेमां प्रतिगृह्णीष्व भारत ॥ २८॥

वैशम्पायनः—
स तथेति प्रतिज्ञाय तां कन्यां प्रतिगृह्य च ।
मासे त्रयोदशे पार्थः कृत्वा वैवाहिकीं क्रियाम् ॥ २९॥

उवास नगरे तस्मिन् मासांस्त्रीन् स तया सह ॥ ३०

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्याम्
आदिपर्वणि त्र्यधिकद्विशततमोऽध्यायः* ॥२०३॥
॥१६॥ अर्जुनवनवासपर्वणि तृतीयोऽध्यायः ॥ ३ ॥
[अस्मिन्नध्याये ३० श्लोकाः]

## ॥ चतुरधिकद्विशततमोऽध्यायः ॥

सौभद्रतीर्थे स्नानार्थमवतीर्णस्यार्जुनस्य ग्राहेण ग्रहणम् ॥ १ ॥ जला-दुद्धरणेन ग्राहरूपं परित्यज्य नारीरूपं प्राप्तया वन्दानाम्न्या स्वेषां ब्राह्मणेन शापदानकथनम् ॥ २ ॥ प्रसादितेन ब्राह्मणेन कृतस्य शापमोचन-प्रकारस्य, नारदनिदेशेनैतत्तीर्थागमनस्य च अर्जुनं प्रति वन्दया कथनम् ॥ ३ ॥ एतत्कथां श्रुतवता अर्जुनेन ग्राहरूपाणामवशिष्टानां चतसृणा-मप्यप्सरसां तत्तत्तीर्थेभ्य उद्धरणेन तासां स्वस्वरूपप्राप्तिः ॥ ४ ॥ पुनर्मण-लूरमागत्य तत्र चित्राङ्गदायां जातं बभ्रुवाहननामानं स्वपुत्रं स्वश्वशुरे समर्प्य गोकर्णक्षेत्रगमनम् ॥ ५ ॥

वैशम्पायनः—

ततस्समुद्रे तीर्थानि दक्षिणे भरतर्षभ ।
अभ्यगच्छत् सुपुण्यानि रहितानि तपस्विभिः ॥ १
वर्जयन्ति स्म तीर्थानि तत्र पञ्च तु तापसाः ।
आचीर्णानि तु यान्यासन् पुरस्तात्तु तपस्विभिः ॥ २
अगस्त्यतीर्थं सौभद्रं पौलोमं च सुपावनम् ।

*ब-कोशे—अत्राध्यायसमाप्तिर्न दृश्यते ।

करं धर्मप्लवं चैव हयमेधफलं च यत् ॥ ३
भारद्वाजस्य तीर्थं च पापप्रशमनं महत् ।
विविक्तान्युपलक्ष्याथ तानि तीर्थानि पाण्डवः ॥ ४
दृष्ट्वा च वर्ज्यमानानि मुनिभिर्धर्मबुद्धिभिः ।
तपस्विनस्ततोऽपृच्छत् प्राञ्जलिः कुरुनन्दनः ॥ ५
तीर्थान्येतानि वर्ज्यन्ते किमर्थं ब्रह्मवादिभिः ॥ ५॥

तापसाः—

ग्राहाः पञ्च वसन्त्येषु हरन्ति च तपोधनान् ।
अत एतानि वर्ज्यन्ते तीर्थानि कुरुनन्दन ॥ ६॥

वैशम्पायनः—

श्रुत्वा तु वचनं तेषां वार्यमाणस्तपोधनैः ।
जगाम तानि तीर्थानि द्रष्टुं पुरुषसत्तमः ॥ ७॥
ततस्सौभद्रमासाद्य महर्षेस्तीर्थमुत्तमम् ।
विगाह्य सहसा शूरस् स्नानं चक्रे परन्तपः ॥ ८॥
अथ तं पुरुषव्याघ्रम् अन्तर्जलचरो महान् ।
निजग्राह जले ग्राहश् शापमोक्षाय भारत ॥ ९॥
स तमादाय कौन्तेयो विस्फुरन्तं जलेचरम् ।
उदतिष्ठन्महाबाहुर् बलेन बलिनां वरः ॥ १०॥
उत्कृष्ट एव तु ग्राहस् सोऽर्जुनेन तपस्विना ।
बभूव नारी कल्याणी सर्वाभरणभूषिता ॥ ११॥

दीप्यमाना श्रिया राजन् दिव्यरूपा मनोरमा ॥ १२

तदद्भुततमं दृष्ट्वा कुन्तीपुत्रो धनञ्जयः ।
तां स्त्रियं परमप्रीत इदं वचनमब्रवीत् ॥ १३

अर्जुनः—
का वै त्वमसि कल्याणि कुतो वाऽसि जलेचरी ।
किमर्थं च महत् पापम् इदं कृतवती पुरा ॥ १४

[1]स्त्री—
अप्सराऽस्मि महाबाहो देवारण्यविचारिणी ।
इष्टा धनपतेर्नित्यं [2]वन्दा नाम महाबल ॥ १५

मम सख्यश्चतस्रोऽन्यास् सर्वाः कामगमाश्शुभाः ।
ताभिस्सार्धं प्रयाताऽस्मि लोकपालनिवेशनम् ॥ १६

[3]ततः पश्याम वै सर्वा ब्राह्मणं संशितव्रतम् ।
रूपवन्तमधीयानम् एकमेकान्तचारिणम् ॥ १७

[4]तस्यैव तपसा राजंस् तद्वनं तेजसा वृतम् ॥ १७॥

आदित्य इव तं देशं कृत्स्नमभ्यवभासयत् ॥ १८

तस्य दृष्ट्वा तपस्तादृग् रूपं चाद्भुतदर्शनम् ।

---

1. घ—पिताऽहमस्मि ते वत्से निर्भया वद मेऽखिलम् ॥
श्रुत्वा प्रतिकरोम्यद्य भवत्या यन्मनीषितम् ॥ [अधिकः पाठः]

2. घ—वृन्दा

3. घ—मध्ये मार्गे तपस्यन्तं ब्राह्मणं संशितव्रतम् । [अधिकः पाठः]

4. घ—यथाप्रमाणमूर्धाद्विसर्वावयवशोभितम् ॥ [अधिकः पाठः]

अवतीर्णाऽस्मि तं देशं तपोविघ्नचिकीर्षया ॥ १९

अहं च सौरभेयी च समीची बुद्बुदालसा ।
यौगपद्येन तं विप्रम् अभ्यगच्छाम भारत ॥ २०

गायन्त्योऽथ हसन्त्यश्च नृत्यन्त्यो वै वराङ्गनाः ।
प्रेक्षणानि च कुर्वन्त्यो विभ्रुतं कारयन्ति च ॥ २१

[1]अनिच्छन्तीरिवाङ्गानि हासभावविलासितैः ।
बाहूरुमूलदन्तानां दर्शनं वै वराङ्गनाः ॥ २२
कुर्वन्त्यो लोभयन्त्यश्च तं द्विजं परितश्रिताः ॥ २२॥
[2]स च नास्मासु कृतवान् मनो वीर कथञ्चन ॥ २३
नाकम्पत महातेजास् स्थितस्तपसि निर्मलः ॥ २३॥

सोऽशपत् कुपितोऽस्मांस्तु ब्राह्मणः क्षत्रियर्षभ ।
ग्राहभूता जले यूयं चरिष्यथ शतं समाः* ॥ २४॥

ततो वयं प्रव्यथितास् सर्वा भारतसत्तम ।
याचाम शरणं विप्रं तं तपोधनमच्युतम् ॥ २५॥

रूपेण वयसा चैव कन्दर्पेण च दर्पिताः ।

---

1. विवृतानि च कुर्वन्त्यो गुह्यस्थानानि सर्वशः ।
अवशा इव कामार्ता हास्यभावविलासितैः ॥ [अधिकः पाठः]
2. च—पन्नगन्धसुनिश्वासाः पन्नगन्धाङ्गयष्टिकाः ॥ [अधिकः पाठः]
* अ-क-ख-ग—कोशेषु—अत्रैवाध्यायसमाप्तिर्दृश्यते ।

अयुक्तं कृतवत्यश्च क्षन्तुमर्हसि नो द्विज ॥ २६॥

एष एव वधोऽस्माकं सुपर्याप्तस्तपोधन ।
यद्वयं संशितात्मानं प्रलोभयितुमागताः ॥ २७॥

अवध्यास्तु स्त्रियस्सृष्टा मन्यन्ते धर्मचिन्तकाः ।
तस्माद्धर्मेण धर्मज्ञ नास्मान् हिंसितुमर्हसि ॥ २८॥

सर्वभूतेषु धर्मज्ञ मैत्रो ब्राह्मण उच्यते ।
सत्यो भवतु कल्याण एष वादो मनीषिणाम् ॥ २९॥

शरणं च प्रपन्नानां शिष्टाः कुर्वन्ति पालनम् ।
शरणं त्वां प्रपन्नास्स्म तस्मात् त्वं क्षन्तुमर्हसि ॥ ३०॥

एवमुक्तस्स धर्मात्मा ब्राह्मणश्शुभकर्मकृत् ।
प्रसादं कृतवान् वीर रविसोमसमप्रभः ॥ ३१॥

ब्राह्मणः—

विश्वं शतसहस्रं च सर्वमक्षय्यवाचकम् ।
परिमाणं शतं त्वेतन्नेदमक्षयवाचकम् ॥ ३२॥

यदा च वो ग्राहभूता गृह्णन्तीः पुरुषाञ्जले ।
उत्तारयेज्जलात् कश्चित् स्थलं पुरुषसत्तमः ॥ ३३॥

तदा यूयं पुनस्सर्वं स्वरूपं प्रतिपत्स्यथ ॥ ३४

अनृतं नोक्तपूर्वं मे भविताऽपि कदा चन ॥ ३४॥

[1]तानि तीर्थानि सर्वाणि ततःप्रभृति चैव ह ।
नारीतीर्थानि नाम्नेह ख्यातिं यास्यन्ति सर्वशः ॥ ३५॥
पुण्यानि च भविष्यन्ति पावनानि मनीषिणाम् ॥ ३६

[2]वन्दा—

ततोऽभिवाद्य तं विप्रं कृत्वा चापि प्रदक्षिणम् ।
विचिन्तया चापसृत्य तस्माद्देशात् सुदुःखिताः ॥ ३७
क नु नाम वयं सर्वाः कालेनाल्पेन तं नरम् ।
समागच्छेम यो नस्तद् रूपमापादयेत् पुनः ॥ ३८
ता वयं चिन्तयित्वैव मुहूर्तादिव भारत ।
दृष्टवत्यो महाभागं देवर्षिमुत नारदम् ॥ ३९
संप्रहृष्टास्स्म तं दृष्ट्वा देवर्षिममितद्युतिम् ।
अभिवाद्य च तं पार्थ स्थिता व्रीडितचेतनाः ॥ ४०
स नोऽपृच्छद्दुःखमूलम् उक्तवत्यो वयं च तत् ।
श्रुत्वा तच्च यथावृत्तम् इदं वचनमब्रवीत् ॥ ४१

नारदः—

दक्षिणे सागरानूपे पञ्च तीर्थानि सन्ति वै ।
पुण्यानि रमणीयानि तानि गच्छत मा चिरं ॥ ४२
तत्राशु पुरुषव्याघ्रः पाण्डवेयो धनञ्जयः ।
मोक्षयिष्यति शुद्धात्मा दुःखादस्मान्न संशयः ॥ ४३

---

1. च—इतः प्रभृति तीर्थानि तानि सर्वानि कन्यकाः ।
2. च—वृन्दा

वन्दा—

इत्युक्त्वा नारदस्सर्वास् तत्रैवान्तरधीयत ॥ ४३॥

तस्मात् सर्वा वयं वीर निवसामोऽत्र नित्यशः ॥ ४४

तदिदं सत्यमेवाद्य मोक्षिताऽहं त्वयाऽनघ ॥ ४४॥

एतास्तु मम वै सख्यश् चतस्रोऽन्या ह्रदे स्थिताः ।
एता अपि महाबाहो मुनिशापाद्विमोक्षय ॥ ४५॥

वैशम्पायनः—

तच्छ्रुत्वा पाण्डवश्रेष्ठस् सर्वा एव विशाम्पते ।
तस्माच्छापाददीनात्मा मोक्षयामास वीर्यवान् ॥ ४६॥

उत्थाय च जलात् सर्वाः प्रतिलभ्य स्वकं वपुः ।
तास्तदाऽ[1]प्सरसो राजन्नदृश्यन्त यथा पुरा ॥ ४७॥

तीर्थानि शोधयित्वाऽथ तथाऽनुज्ञाय ताः प्रभुः ।
चित्राङ्गदां पुनर्द्रष्टुं मणलूरपुरं ययौ ॥ ४८॥

तस्यामजनयत् पुत्रं राजानं बभ्रुवाहनम् ।
तं दृष्ट्वा पाण्डवो राजंश् चित्रवाहनमब्रवीत् ॥ ४९॥

चित्राङ्गदायाश्शुल्कं च गृह्णेमं बभ्रुवाहनम् ।
अनेन तु भविष्यामि ऋणान्मुक्तो जनाधिप ॥ ५०॥

चित्राङ्गदां पुनर्वाक्यम् अब्रवीत् पाकशासनिः ॥ ५१

---

1. ब—अप्सरसः पञ्च तिरोधानं प्रपेदिरे ।

अर्जुनः—

इहैव भव भद्रे त्वं बभ्रुवाहनवर्धना ।
इन्द्रप्रस्थनिवासं मे त्वं तत्रागत्य रंस्यसे ॥ ५२

कुन्तीं युधिष्ठिरं भीमं भ्रातरौ मे कनीयसौ ।
आगता तत्र पश्येथा अन्यानपि च बान्धवान् ॥ ५३
बान्धवैस्सहिता भद्रे नन्दसे त्वमनिन्दिते ॥ ५३॥
धर्मे स्थितस्सत्यधृतिः कुन्तीपुत्रो युधिष्ठिरः ।
जित्वा तु पृथिवीं सर्वां राजसूयं करिष्यति ॥ ५४॥
तत्रागच्छन्ति राजानः पृथिव्यां नृपसंज्ञिताः ॥ ५५
बहूनि रत्नान्यादाय आगमिष्यति ते पिता ॥ ५५॥
एकसार्थं प्रयाताऽसि चित्रवाहनसेनया ॥ ५६
द्रक्ष्यामि राजसूये त्वां पुत्रं पालय मा शुचः ॥ ५६॥
बभ्रुवाहननाम्ना तु मम प्राणो बहिश्चरः ।
तस्माद्भरस्व पुत्रं वै पूरुवंशविवर्धनम् ॥ ५७॥
चित्रवाहनदायादं धर्मात् पौरवनन्दनम् ।
पाण्डवानां प्रियं पुत्रं तस्मात् पालय सर्वदा ॥ ५८॥
विप्रयोगेण सन्तापं मा कृथास्त्वमनिन्दिते ॥ ५९

वैशम्पायनः—

चित्राङ्गदामेवमुक्त्वा सागरानूपमाश्रितः ।

स्थानं दूरं समाप्लुत्य दत्त्वा बहुधनं तदा ॥ ६०

केरलान् समतिक्रम्य गोकर्णमभितोऽगमत् ॥ ६०॥

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्याम्
आदिपर्वणि चतुरधिकद्विशततमोऽध्यायः ॥ २०४ ॥
॥ १६ ॥ अर्जुनवनवासपर्वणि चतुर्थोऽध्यायः ॥ ४ ॥
[अस्मिन्नध्याये ६०॥ श्लोकाः]

---

## ॥ पञ्चाधिकद्विशततमोऽध्यायः ॥

अर्जुनस्य प्रभासतीर्थगमनम् ॥ १ ॥ तत्र स्मृतिपथागतसुभद्रारूपलावण्यादिकं चिन्तयतोऽर्जुनस्य परिव्राजकवेषस्वीकारेण तस्या हरणे निश्चयः ॥ २ ॥ अर्जुनस्य चिन्तितज्ञानेन हसता श्रीकृष्णेन सहशायिन्या सत्यभामया हासकारणं पृष्टे तां प्रति अर्जुनवृत्तान्तकथनम् ॥ ३ ॥ सत्यभामां शयने विहाय एकाकिना श्रीकृष्णेन प्रभासतीर्थं प्रति प्रस्थानम् ॥ ४ ॥ चारमुखेन अर्जुनस्य तत्रागमनं श्रुत्वा कृष्णस्य तत्र गमनम् ॥ ५ ॥ अर्जुनेन संभाष्य कृष्णस्य द्वारकां प्रति पुनरागमनम् ॥ ६ ॥

---

वैशम्पायनः—

सोऽपरान्तेषु तीर्थानि पुण्यान्यायतनानि च ।
सर्वाणि चानुपूर्व्येण जगामामितविक्रमः ॥ १

समुद्रे पश्चिमे यानि तीर्थान्यायतनानि च ।
तानि गत्वा स सर्वाणि प्रभासमुपजग्मिवान् ॥ २

चिन्तयामास रात्रौ तु गदेन कथितां कथाम् ।

सुभद्रायाश्च माधुर्यरूपसंपद्गुणानि च ॥ ३
प्राप्तुं तां चिन्तयामास कोऽत्रोपायो भवेदिति ॥ ३॥
वेषवैकृतमापन्नः परिव्राजकरूपधृक् ॥ ४
कुकुरान्धकवृष्णीनाम् अज्ञातो वेषधारणात् ।
भ्रममाणश्चरन् भैक्षं परिव्राजकवेषवान् ॥ ५
येन केनाप्युपायेन प्रविश्य च गृहं महत् ।
दृष्ट्वा सुभद्रां कृष्णस्य भगिनीमेकसुन्दरीम् ॥ ६
वासुदेवमतं ज्ञात्वा करिष्यामि हितं शुभम् ॥ ६॥
एवं विनिश्चयं कृत्वा दीक्षितो वै तदाऽभवत् ॥ ७
त्रिदण्डी मुण्डितः कुण्डी अक्षमालाऽङ्गुलीयकः ।
योगभारं वहन् पार्थो वटवृक्षस्य कोटरम् ॥ ८
प्रविशन्नेव बीभत्सुर् वृष्टिं वर्षति वासवे ।
चिन्तयामास देवेशं केशवं क्लेशनाशनम् ॥ ९
प्रणतार्तिहरं शम्भुं मायारूपेण वञ्चकम् ॥ ९॥
केशवश्चिन्तितं ज्ञात्वा दिव्यज्ञानेन दृष्टवान् ॥ १०
शयानश्शयने धन्ये सत्यभामासहायवान् ।
केशवस्सहसा राजन् जहास च ननन्द च ॥ ११
पुनः पुनस्सत्यभामा चाब्रवीत् पुरुषोत्तमम् ॥ ११॥

सत्यभामा—

भगवंश्चिन्तयाऽऽविष्टश् शयने शयितस्सुखम् ।
भवान् बहुप्रकारेण जहास च पुनः पुनः ॥ १२॥
श्रोतव्यं यदि वा कृष्ण प्रसादो यदि चेन्मयि ।
वक्तुमर्हसि लोकेश तच्छ्रोतुं कामये ह्यहम् ॥ १३॥

1श्रीभगवान्—

पितृष्वसायाः पुत्रो मे भीमसेनानुजोऽर्जुनः ।
तीर्थयात्रां गतः पार्थः कारणात् समयात् तदा ॥ १४
तीर्थयात्रासमाप्तौ तु निवृत्तो निशि भारतः ।
सुभद्रां चिन्तयानस्तु तदर्थे चापि मां पुनः ॥ १५
चिन्तयन्नेव तां भद्रां यतिरूपधरोऽभवत् ॥ १५॥
यतिरूपप्रतिच्छन्नो द्वारकां प्राप्य माधवीम् ।
येन केनाप्युपायेन दृष्ट्वा तु वरवर्णिनीम् ॥ १६॥
वासुदेवमतं ज्ञात्वा प्रयतिष्ये मनोरथम् ॥ १७
एवं व्यवसितः पार्थो यतिलिङ्गेन पाण्डवः ॥ १७॥
छायायां वटवृक्षस्य वृष्टिं वर्षति वासवे ।
योगभारं वहन्नेव मानसं दुःखमाप्तवान् ॥ १८॥
ईदृशं मां विजानाति माधवो यदि मां स्मरन् ॥
किञ्चिद्व्याजमवष्टभ्य यायात् कतिपयैर्जनैः ॥ १९॥

---

1. घ—शङ्का मे महती कृष्ण तव हासेन वर्तते ।
किं वा रूपेषु ते कृष्ण तव हासोऽयमद्भुतः ॥ [अधिकः पाठः]

तद्भावं प्रविचिन्त्यैव हसितं मे सुलोचने ।
नास्त्यन्यन्मा विशङ्केथाश् शपे सत्येन मे शुभे ॥ २०॥

वैशम्पायनः—

भ्रातरं वोऽभि पश्येति सत्यभामामदर्शयत् ॥ २१
[1]तत उत्थाय शयनात् प्रस्थितो मधुसूदनः ॥ २१॥
प्रभासं समनुप्राप्तं बीभत्सुमपराजितम् ।
तीर्थान्यनुचरन्तं च शुश्राव मधुसूदनः ॥ २२॥
चारणानां तु वचनाद् एकाकी स जनार्दनः ॥ २३
ततोऽभ्यगच्छत् कौन्तेयम् अज्ञातो नाम माधवः ॥ २३॥
ददृशाते तदाऽन्योन्यं प्रभासे कृष्णपाण्डवौ ॥ २४
तावन्योन्यं समाश्लिष्य पृष्ट्वा च कुशलं पथि ।
आस्तां प्रियसखायौ तौ नरनारायणावृषी ॥ २५
ततोऽर्जुनं वासुदेवस् तां चर्यां पर्यपृच्छत ॥ २५॥

वासुदेवः—

किमर्थं पावनानीह तीर्थान्यनुचरस्युत ॥ २६

वैशम्पायनः—

ततोऽर्जुनो यथावृत्तं सर्वमाख्यातवांस्तदा ॥ १६॥
श्रुत्वाऽथोवाच वार्ष्णेयस् त्वेवमेतदिति प्रभो ॥ २७
तौ विहृत्य यथाकामं प्रभासे कृष्णपाण्डवौ ।
महीधरं रैवतकं वासायैवाभिजग्मतुः ॥ २८

---

1. च-- ज्ञानदृष्ट्यैव शयने मध्यरात्रे हरिस्स्वयम् ॥ [अधिकः पाठः]

पूर्वमेव तु कृष्णस्य वचनात् तं महीधरम् ।
पुरुषास्समलञ्चक्रुर् उपजह्रुश्च भोजनम् ॥ २९
प्रतिगृह्यार्जुनस्सर्वम् उपभुज्य च पाण्डवः ।
सहैव वासुदेवेन दृष्टवान् नटनर्तकान् ॥ ३०
अभ्यनुज्ञातवांस्सर्वान् अर्चयित्वा च पाण्डवः ।
सत्कृतं शयनं दिव्यम् अभ्यगच्छत् सहाच्युतः ॥ ३१
स कथां कथयन्नेव निद्रया जनमेजय ।
कौन्तेयोऽपि हृतस्तस्मिन् शयने सत्यविक्रमः ॥ ३२
मधुरेण स गीतेन वीणाशब्देन चानघ ।
प्रबोध्यमानो बुबुधे स्तुतिभिर्मङ्गलैस्तथा ॥ ३३
स कृत्वाऽवश्यकार्याणि वार्ष्णेयेनाभिनन्दितः ।
वार्ष्णेयं समनुज्ञाय ततो वासमरोचयत् ॥ ३४
तथेत्युक्त्वा वासुदेवो भोजनं वै शशाम ह ॥ ३४॥
यतिरूपधरं पार्थं विसृज्य सहसा हरिः ।
रथेन काञ्चनाङ्गेन द्वारकामभिजग्मिवान् ॥ ३५॥
अलङ्कृता द्वारका तु बभूव जनमेजय ॥ ३६
दिदृक्षवश्च गोविन्दं द्वारकावासिनो जनाः ।
नरेन्द्रमार्गमाजग्मुस् तूर्णं शतसहस्रशः ॥ ३७
क्षणार्धमपि वार्ष्णेया गोविन्दविरहाक्षमाः ।
कौतूहलसमाविष्टा भृशमुत्प्रेक्ष्य संस्थिताः ॥ ३८

अवलोकेषु नारीणां सहस्राणि शतानि च ।
भोजवृष्ण्यन्धकानां च समवायो महानभूत् ॥ ३९
स तथा सत्कृतस्सर्वैर् भोजवृष्ण्यन्धकात्मजैः ।
अभिवाद्याभिवाद्यांश्च सर्वैश्च प्रतिनन्दितः ॥ ४०
कुमारैस्सर्वशो वीरस् सत्कारेणाभिवादितः ।
समानवयसस्सर्वान् आश्लिष्य स पुनः पुनः ॥ ४१
कृष्णस्स्वभवनं रम्यं प्रविवेश महाद्युतिः ॥ ४१॥
प्रवासादागतं देव्यस् सर्वाः कृष्णमपूजयन्* ॥ ४२

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्याम्
आदिपर्वणि पञ्चाधिकद्विशततमोऽध्यायः ॥ २०५ ॥
॥ १६ ॥ अर्जुनवनवासपर्वणि पञ्चमोऽध्यायः ॥ ५ ॥
[अस्मिन्नध्याये ४२ श्लोकाः]
॥ समाप्तं चार्जुनवनवासपर्व ॥

## ॥ षडधिकद्विशततमोऽध्यायः ॥

॥ (अथ सुभद्राहरणपर्व) ॥

रैवतकपर्वतं प्रति उत्सवार्थं कृष्णादीनां गमनम् ॥ १ ॥ तत्र कृष्णस्य परिव्राजकरूपार्जुनदर्शनम् ॥ २ ॥ सुभद्रादर्शनेन तस्यां संजातहृच्छय-स्यार्जुनस्य यतिरूपेण सुभद्राहरणे कृष्णानुज्ञालाभः ॥ ३ ॥ दूतैर्निवेदितैतद्वृत्तान्तेन सपरिवारेण युधिष्ठिरेणाभ्यनुज्ञानम् ॥ ४ ॥

वैशम्पायनः—
ततः कतिपयाहस्सु तस्मिन् रैवतके गिरौ ।

* घ-कोशे—अत्राध्यायसमाप्तिर्न दृश्यते ।

वृष्ण्यन्धकानामभवत् सुमहानुत्सवो नृप ॥ १
तत्र दानं ददुर्वीरा ब्राह्मणानां सहस्रशः ।
भोजवृष्ण्यन्धकाश्चैव [1]महे तस्य गिरेस्तदा ॥ २
प्रासादै रत्नचित्रैस्तु गिरेस्तस्य समन्ततः ।
स देशश्शोभितो राजन् दीपवृक्षैश्च शोभितः ॥ ३
वादित्राणि च तत्र[2]स्म वादकास्समवादयन् ।
ननृतुर्नर्तकाश्चैव जगुर्गीतानि गायकाः ॥ ४
अलङ्कृताः कुमाराश्च वृष्णीनां सुमहौजसः ।
यानैर्हाटकचित्राङ्गैश् चञ्चूर्यन्ते स्म सर्वशः ॥ ५
पौराश्च पादचारेण यानैरुच्चावचैस्तथा ।
सदारास्सानुयात्राश्च शतशोऽथ सहस्रशः ॥ ६
ततो हलधरः क्षीबो रेवतीसहितः प्रभुः ।
अनुगम्यमानो बहुभिर् अचरत् तत्र भारत ॥ ७
तथैव राजा वृष्णीनाम् उग्रसेनः प्रतापवान् ।
उपगीयमानो गन्धर्वैस् स्त्रीसहस्रसहायवान् ॥ ८
रौक्मिणेयश्च साम्बश्च क्षीबौ समरदुर्मदौ ।
दिव्यमाल्याम्बरधरौ विजह्रातेऽमराविव ॥ ९
अक्रूरस्सारणश्चैव गदो भानुर्विदूरथः ।

---

1. अ—मखे 2. क-ग-ङ—स्युः; ब—आसन्

निशठश्चारुदेष्णश्च पृथुर्विपृथुरेव च ॥ १०

सत्यकस्सात्यकिश्चैव भङ्गकारसहाचरौ ।
[1]हार्दिक्यः कृतवर्मा च ये चान्ये नानुकीर्तिताः ॥ ११

एते परिवृतास्स्त्रीभिर् गन्धर्वैश्च पृथक् पृथक् ।
तमुत्सवं रैवतके शोभयाञ्चक्रिरे तदा ॥ १२

वासुदेवो ययौ तत्र सह स्त्रीभिर्गुणान्वितः ।
दत्वा दानं द्विजातिभ्यः परिव्राजमपश्यत ॥ १३

तदा कौतूहले तस्मिन् वर्तमाने महोत्सवे ।
वासुदेवश्च पार्थश्च सहितौ परिजग्मतुः ॥ १४

तत्र चङ्क्रममाणौ तौ वसुदेवसुतां शुभाम् ।
अलङ्कृतां सखीमध्ये भद्रां ददृशतुस्तदा ॥ १५

दृष्ट्वैव तामर्जुनस्य कन्दर्पस्समजायत ।
तं तदैकाग्रमनसं कृष्णः पार्थमलक्षयत् ॥ १६

अब्रवीत् पुण्डरीकाक्षः प्रहसन्निव भारत ।
वनेचरस्य किमिदं कामेनालोड्यते मनः ॥ १७

ममैषा भगिनी पार्थ सारणस्य सहोदरी ।
यदि ते वर्तते बुद्धिर् वक्ष्यामि पितरं स्वयम् ॥ १८

1. अ-क-ख-ग—हृदिकः

अर्जुनः—

दुहिता वसुदेवस्य वासुदेवस्य च स्वसा ।
रूपेणैव च सम्पन्ना किमिवैषा न मोहयेत् ॥ १९

कृतमेव तु कल्याणं सर्वं मम भवेद्ध्रुवम् ।
यदि स्यान्मम वार्ष्णेय महिषीयं स्वसा तव ॥ २०

देववृन्दस्सदा त्वां तु स्मृत्वा विजयतेऽसुरान् ।
तव सन्दर्शनात् स्वामिन्नप्राप्यं न हि तत् किमु ॥ २१

प्राप्तौ तु क उपायोऽस्यास् तं ब्रवीहि जनार्दन ।
आस्थास्यामि तथा सर्वं यदि शक्यं नरेण तत् ॥ २२

[1]वासुदेवः—

स्वयंवरः क्षत्रियाणां विवाहः पुरुषर्षभ ।
स च संशयितः पार्थ स्वभावस्यानिमित्ततः ॥ २३

प्रसह्य हरणं चापि क्षत्रियाणां प्रशस्यते ।
विवाहहेतोः कन्यानाम् इति धर्मविदो विदुः ॥ २४

स त्वमर्जुन कल्याणीं प्रसह्य भगिनीं मम ।
यतिरूपधरस्त्वं तु यदा कालविपाकता ॥ २५

हर स्वयंवरे ह्यस्याः को वै वेद चिकीर्षितम् ॥ २५॥

---

1. घ—यदिदं मे भवान् कृष्ण मन्यतेऽभिमतं कृतम् ।
मन्ये सिद्धमिदं कार्यम् अस्माकं हि भवान् गतिः ॥
[अधिकः पाठः]

वैशम्पायनः —

ततोऽर्जुनश्च कृष्णश्च विनिश्चित्येतिकृत्यताम् ।
शीघ्रगान् पुरुषान् राजन् प्रेषयामासतुस्तदा ॥ २६॥
धर्मराजाय तत्सर्वम् इन्द्रप्रस्थगताय वै ॥ २७
श्रुत्वैव च महाबाहुर् अनुजज्ञे समातृकः ॥ २७॥
भीमसेनस्तु तच्छ्रुत्वा कृतकृत्योऽभ्यमन्यत ।
इत्येवं मनुजैस्सार्धम् उक्त्वा प्रीतिमुपेयिवान् ॥ २८॥

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्याम्
आदिपर्वणि षडधिकद्विशततमोऽध्यायः ॥ २०६ ॥
॥ १७ ॥ सुभद्राहरणपर्वणि प्रथमोऽध्यायः ॥ १ ॥
[अस्मिन्नध्याये २८॥ श्लोकाः]

## ॥ सप्ताधिकद्विशततमोऽध्यायः ॥



द्वारकाया उपवने वसतः यतिरूपस्यार्जुनस्य रैवतकपर्वतात् प्रतिनिवृत्तैर्यादवैर्दर्शनम् ॥ १ ॥ यतिनिवासविषये यादवैः पृष्टे सुभद्रागृहे वसत्विति रामोक्तिः ॥ २ ॥ यतेस्सुभद्रागृहे कृष्णेन स्थापनम् ॥ ३ ॥ श्रुतपूर्वपार्थलक्षणदर्शनेन एनं यतिं अर्जुनं शङ्कमानायाः सुभद्रायाः यतिं प्रति अर्जुनादिकुशलप्रश्नः ॥ ४ ॥ अर्जुनेन तत्त्वे कथिते मोहितायां सुभद्रायां रुक्मिण्या श्वश्रूसमीपे तद्वृत्तकथनम् ॥ ५ ॥ वासुदेवानुमत्या देवक्या सुभद्राश्वासनम् ॥ ६ ॥ गूढं सुभद्राया विवाहचिकीर्षया कृष्णेन महादेवपूजाव्याजेन सर्वयादवैस्सह अन्तर्द्वीपगमनम् ॥ ७ ॥

---

वैशम्पायनः—

चारैस्सञ्चारिते तस्मिन् अनुज्ञातो धनञ्जयः ।
वासुदेवाभ्यनुज्ञातः कथयित्वेतिकृत्यताम् ॥ १

कृष्णस्य मतमास्थाय प्रययौ भरतर्षभः ॥ १॥
वृत्तोत्सवे रैवतके वृष्णयोऽप्यगमन् पुरीम् ।
सुभद्राऽप्यथ शैलेन्द्रम् अभ्यर्च्य सह रैवतम् ॥ २॥
दैवतानि च सर्वाणि ब्राह्मणान् स्वस्ति वाच्य च ।
प्रदक्षिणं गिरिं कृत्वा प्रययौ द्वारकां प्रति ॥ ३॥
गतां रैवतकात् कन्यां प्रविष्टां द्वारकां प्रति ।
चिन्तयानस्ततो भद्राम् उपविष्टश्शिलातले ॥ ४॥
रमणीये वनोद्देशे बहुपादपसंवृते ।
सालतालाश्वकर्णैश्च बहुलैरर्जुनैस्तथा ॥ ५॥
चम्पकाशोकपुन्नागैः केतकैः पाटलैस्तथा ।
कर्णिकारैरशोकैश्च अङ्कोलैरतिमुक्तकैः ॥ ६॥
एवमादिभिरन्यैश्च संवृते स शिलातले ।
पुनः पुनश्चिन्तयानस् सुभद्रां भद्रभाषिणीम् ॥ ७॥
यदृच्छया चोपपन्नान् वृष्णिवीरान् ददर्श ह ॥ ८
बलदेवं च हार्दिक्यं साम्बं सारणमेव च ।
प्रद्युम्नं च गदं चैव चारुदेष्णं विदूरथम् ॥ ९
भानुं च निशठं चैव विपृथुं पृथुमेव च ।
तथाऽन्यांश्च बहून् पश्यन् हृदि शोकमधारयत् ॥ १०
ततस्ते सहितास्सर्वे यतिं दृष्ट्वा समुत्सुकाः ।
वृष्णयो विनयोपेताः परिवार्योपतस्थिरे ॥ ११

ततोऽर्जुनः प्रीतमनास् स्वागतं व्याजहार सः ।
आस्यतामास्यतां सर्वैं रमणीये शिलातले ॥ १२

इत्येवमुक्ता यतिना प्रीतास्ते यादवर्षभाः ।
उपोपविविशुस्सर्वे सुस्वागतमिति ब्रुवन् ॥ १३

ततस्तेषु निविष्टेषु वृष्णिवीरेषु पाण्डवः ।
आकारं गूहमानस्तु कुशलप्रश्नमब्रवीत् ॥ १४

सर्वत्र कुशलं चोक्त्वा बलदेवोऽब्रवीदिदम् ॥ १४॥

बलदेवः—

प्रसादं कुरु मे विप्र कुतस्त्वं चागतो ह्यसि ॥ १५

त्वया दृष्टानि पुण्यानि वदस्व वदतां वर ।
पर्वतांश्चैव तीर्थानि वनान्यायतनानि च ॥ १६

वैशम्पायनः—

तीर्थानां दर्शनं चैव पर्वतानां च भारत ।
आपगानां वनानां च कथयामास यादवे ॥ १७

ताः कथाः कथयन्नेव कथान्ते जनमेजय ।
कथां धर्मसमायुक्तां वृष्णिवीरे न्यवेदयत् ॥ १८

श्रुत्वा धर्मकथां पुण्यां वृष्णिवीरोऽभ्यपूजयत् ॥ १८॥

ततस्तु यादवास्सर्वे मन्त्रयन्ति स्म भारत ॥ १९

अयं देशातिथिश्श्रीमान् यतिलिङ्गधरो द्विजः ।

आवासं कमुपाश्रित्य वसेत निरुपद्रवः ॥ २०

इत्येवमब्रुवंस्ते वै रौहिणेयं तु यादवाः ॥ २०॥

ददृशुः कृष्णमायान्तम् सर्वे यादवनन्दनम् ।

एहि केशव तातेति रौहिणेयो वचोऽब्रवीत् ॥ २१॥

यतिलिङ्गधरो विद्वान् देशातिथिरयं द्विजः ।

वर्षरात्रनिवासार्थम् आगतो नः पुरं प्रति ॥ २२॥

स्थाने यस्मिन्निवसति तन्मे ब्रूहि जनार्दन ॥ २३

भगवान्—

त्वयि स्थिते महाभाग परवानास्मि धर्मतः ।

स्वयं तु रुचिरे स्थाने वासयेर्यदुनन्दन ॥ २४

वैशम्पायनः—

सुप्रीतस्तेन वाक्येन परिष्वज्य जनार्दनम् ।

बलदेवोऽब्रवीद्वाक्यं चिन्तयित्वा महाबलः ॥ २५

बलदेवः—

आरामे तु वसेद्धीमांश् चतुरो वर्षमासकान् ।

कन्यापुरे सुभद्राया भुक्त्वा भोजनमिष्टतः ॥ २६

लतागृहेषु वसताम् इति मे धीयते मतिः ॥ २६॥

लब्धानुज्ञास्त्वया तत्र मन्यन्ते सर्वयादवाः ॥ २७

वासुदेवः—

बलवान् दर्शनीयश्च वाग्मी श्रीमान् बहुश्रुतः ।

कन्यापुरसमीपे तु न युक्तमिति मे मतिः ॥ २८

गुरुश्शास्ता च नेता च शास्त्रज्ञो धर्मवित्तमः ।
त्वयोक्तं न विरुध्येऽहं करिष्यामि वचस्तव ॥ २९

शुभाशुभस्य विज्ञाने नान्योऽस्ति भुवि कश्चन ॥ २९॥

[1]बलदेवः—

अयं देशातिथिश्श्रीमान् सर्वधर्मविशारदः ।
धृतिमान् विनयोपेतस् सत्यवाग्विजितेन्द्रियः ॥ ३०॥

यतिलिङ्गधरो ह्येष को विजानाति मानसम् ।
त्वमिमं पुण्डरीकाक्ष नीत्वा कन्यापुरं शुभम् ॥ ३१॥

निवेदय सुभद्रायै मद्वाक्यपरिचोदितः ॥ ३२

भक्ष्यैर्भोज्यैश्च पानैश्च अन्यैरिष्टैश्च पूजय[2]* ॥ ३२॥

वैशम्पायनः—

स तथेति प्रतिज्ञाय सहितो यतिना हरिः ।

---

1. घ—निस्सीमतररूपोयं सुभद्राऽपि तथाविधा ।
बलवानिन्द्रियग्रामो न जाने किं भविष्यति ॥ [अधिकः पाठः]

2 घ—सुशीलोऽयं यतिः कृष्ण इति मे निश्चितं मनः ।
श्रीकृष्णः—
कन्यागृहे यतेर्वासः सुखोदर्कोऽथवा भवेत् ।
दुःखोदर्को भवेद्वाऽपि नाहं जाने यदूद्वह ॥
भवता परवानस्मि यावदाचन्द्रतारकम् ॥ [अधिकः पाठः]

* अ-क-ख-ग-ङ—कोशेषु अत्रैवाध्यायसमाप्तिर्दृश्यते ॥

[1]कृत्वा तु संविदं तेन प्रहृष्टः केशवोऽभवत् ॥ ३३॥
पर्वते तौ विहृत्यैव यथेष्टं कृष्णपाण्डवौ ।
तां पुरीं प्रविवेशाथ गृह्य हस्ते च पाण्डवम् ॥ ३४॥
प्रविश्य च गृहं रम्यं सर्वभोगसमन्वितम् ।
पार्थमावेदयामास रुक्मिणीसत्यभामयोः ॥ ३५॥
हृषीकेशवचः श्रुत्वा ते उभे चोचतुर्भृशम् ॥ ३६
मनोरथो महानेष हृदि नः परिवर्तते ।
कदा द्रक्ष्याम बीभत्सुं पाण्डवं गृहमागतम् ॥ ३७
इति चिन्तयमानानां पार्थो दुःखमपानुदत् ॥ ३७॥
प्राप्तमज्ञातरूपाभिर् उत्तमाभिरपूजयन् ॥ ३८
स तं प्रियातिथिं श्रेष्ठं समीक्ष्य यतिमागतम् ।
सोदर्यां भगिनीं कृष्णस् सुभद्रामिदमब्रवीत् ॥ ३९

भगवान्—

अयं देशातिथिर्भद्रे संयतो व्रतवानृषिः ।
प्राप्नोतु सततं पूजां तव कन्यापुरे वसन् ॥ ४०
आर्येण च परिज्ञातः पूजनीयो यतिस्सदा ।

---

1. घ—लब्धानुज्ञास्त्वया तात मन्यन्ते सर्वयादवाः।

श्रीवासुदेवः—

शीलवान् दर्शनीयश्च वाग्मी श्रीमान् बहुश्रुतः।
कन्यापुरसमीपेऽस्य न युक्तमिति मे मतिः॥ [अधिकः पाठः]

हरिः—

तस्मात्त्वरस्व वार्ष्णेयि भक्ष्यैर्भोज्यैर्यतिं सदा ॥ ४१

एष यद्यद्दृषिर्ब्रूयात् कार्यमेव न संशयः ।
सखीभिस्सहिता भद्रे भवास्य वशवर्तिनी ॥ ४२

पुराऽपि यतयो भद्रे ये भैक्षार्थमनुव्रताः ।
ते बभूवुर्दशार्हाणां कन्यापुरनिवासिनः ॥ ४३

तेभ्यो भोज्यानि भक्ष्याणि यथाकालमतन्द्रिताः ।
कन्यापुरगताः कन्याः प्रयच्छन्ति यशस्विनि ॥ ४४

वैशम्पायनः —

सा तथोक्ताऽब्रवीत् कृष्णं करिष्यामि यथाऽऽत्थ माम् ।
तोषयिष्यामि वृत्तेन कर्मणा च द्विजर्षभम् ॥ ४५

एवमेतेन रूपेण कञ्चित् कालं धनञ्जयः ।
उवास भक्ष्यैर्भोज्यैश्च भद्रया परमार्चितः ॥ ४६

तस्य सर्वगुणोपेतां वासुदेवस्य सोदराम् ।
[1]पश्यतस्सततं भद्रां प्रादुरासीन्मनोभवः ॥ ४७

गूहयन्निव चाकारम् आलोक्य वरवर्णिनीम् ।
दीर्घमुष्णं निशश्वास पार्थः कामवशं गतः ॥ ४८

न कृष्णां रूपतो मेने वासुदेवस्य सोदराम् ।

---

1. क-ग-घ—प्राप्ता ह्रदीन्द्रसेनां वा साक्षाद्वा वरुणात्मजाम् ॥
[अधिकः पाठः]

प्राप्तां हृदीन्द्रसेनां वा साक्षाद्वा वरुणात्मजाम् ॥ ४९

अतीतसमये काले सोदर्याणां धनञ्जयः ।
न सस्मार सुभद्रायाः कामाङ्कुशनिवारितः ॥ ५०

क्रीडारतिपरां भद्रां सखीजनशतैर्वृताम् ।
प्रीयते स्मार्जुनः पश्यन् स्वाहामिव हुताशनः ॥ ५१

पाण्डवस्य सुभद्रायास् सकाशे तु यशस्विनः ।
समुत्पत्तिः प्रभावश्च गदेन कथितः पुरा ॥ ५२

श्रुत्वा चाशनिनिर्घोषं केशवेनापि धीमता ।
उपमामर्जुनं कृत्वा विस्तरः कथितः पुरा ॥ ५३

क्रुद्धमत्तप्रलापश्च वृष्णीनामर्जुनं प्रति ।
पौरुषे चोपमां कृत्वा प्रावर्तन्त धनुष्मताम् ॥ ५४

अन्योन्यकलहे चापि विवादे चापि वृष्णयः ।
अर्जुनोऽपि न मे तुल्यः कुतस्त्वमिति तेऽब्रुवन् ॥ ५५

जातांश्च पुत्रान् गृह्णन्त आशिषो वृष्णयोऽब्रुवन् ।
अर्जुनस्य समो वीर्ये भव तात धनुर्धरः ॥ ५६

तस्मात् सुभद्रा चकमे पौरुषात्कुरुतर्षभम् ॥ ५६॥

सत्यसन्धस्य रूपेण चातुर्येण च मोहिता ।
चारणातिथिसङ्घानां गदस्य च निशम्य सा ॥ ५७॥

अदृष्टे कृतभावाऽभूत् सुभद्रा भरतर्षभे ॥ ५८

कीर्तयन् ददृशे यो यः कथञ्चित् कुरुजाङ्गलम् ।
तं तमेव सदा भद्रा बीभत्सुं स्माभिपृच्छति ॥ ५९

अभीक्ष्णशः परिप्रश्नाद् अभीक्ष्णश्रवणात्तथा ।
प्रत्यक्ष इव भद्रायाः पाण्डवस्समपद्यत ॥ ६०

भुजौ भुजगसङ्काशौ ज्याघातेन किणीकृतौ ।
पार्थोऽयमिति पश्यन्त्या निस्संशयमजायत ॥ ६१

यथारूपं हि शुश्राव सुभद्रा भरतर्षभम् ।
तथारूपमवेक्ष्यैनं परां प्रीतिमवाप सा ॥ ६२

सा कदाचिदुपासीनं पप्रच्छ कुरुनन्दनम् ॥ ६२॥

सुभद्रा—

कथं देशाः कथं शैला नानाजनपदाः कथम् ।
सरांसि सरितश्चैव वनानि च कथं यते ॥ ६३॥

दिशः काश्च कथं प्राप्ताश् चरता भवता सदा ॥ ६४

वैशम्पायनः—

स तथोक्तस्तदा भद्रां बहुनर्मानृतं ब्रुवन् ।
उवाच परमप्रीतस् तस्या बहुविधाः कथाः ॥ ६५

निशम्य विविधं तस्य लोके चरितमात्मनः ।
कथापरिगतो भावः कन्यायास्समपद्यत ॥ ६६

पर्वसन्धौ तु कस्मिंश्चित् सुभद्रा भरतर्षभम् ।
रहस्येकान्तमासाद्य हृष्यमाणाऽभ्यभाषत ॥ ६७

सुभद्रा—

यतिना चरता लोकान् खाण्डवप्रस्थवासिनी ।
कच्चिद्भगवता दृष्टा पृथाऽस्माकं पितृष्वसा ॥ ६८

भ्रातृभिः प्रीयते सर्वैः कच्चिदार्यो युधिष्ठिरः ।
कच्चिद्धर्मपरो भीमो धर्मराजस्य धीमतः ॥ ६९

निवृत्तसमयः कच्चिद् अपराधाद्धनञ्जयः ।
नियमे कामभोगानां वर्तमानः प्रियेतरे । ७०

क्व नु पार्थश्चरत्यद्य बह्वीर्दुर्वसतीर्वसन् ।
सुखोचितो ह्यदुःखार्हो दीर्घबाहुररिन्दमः ॥ ७१

कच्चिच्छ्रुतो वा दृष्टो वा पार्थो भगवताऽर्जुनः ॥ ७१॥

वैशम्पायनः—

निशम्य वचनं तस्यास् तामुवाच हसन्निव ॥ ७२

अर्जुनः—

आर्ये पृथा कुशलिनी सहपुत्रा सहस्नुषा ।
प्रीयते पश्यती पुत्रान् खाण्डवप्रस्थ आसते ॥ ७३

अनुज्ञातश्च मात्रा च सोदर्यैश्च धनञ्जयः ।
द्वारकामावसत्येको यतिलिङ्गेन पाण्डवः ॥ ७४

पश्यन्ती सततं कस्मान्नाभिजानासि माधवि ॥　७४॥

वैशम्पायनः—

निशम्य वचनं तस्य वासुदेवसहोदरी ।
निश्वासबहुला तस्थौ क्षितिं विलिखती तदा ॥　७५॥

ततः परमसंहृष्टस् सर्वशस्त्रभृतां वरः ।
अर्जुनोऽहमिति प्रीतस् तामुवाच धनञ्जयः ॥　७६॥

यथा तव गतो भावश् श्रवणान्मयि भामिनि ।
त्वद्गतस्सततं भावस् तथा शतगुणो मम ॥　७७॥

प्रशस्तेऽहनि धर्मेण भद्रे स्वयमहं वृतः ।
सत्यवानिव सावित्र्या भविष्यामि पतिस्तव ॥　७८॥

एवमुक्त्वा ततः पार्थः प्रविवेश लतागृहम् ॥　७९

ततस्सुभद्रा छलिता लज्जाभावसमन्विता ।
सुप्तोह शयने दिव्ये शयाना न तथोचिता ॥　८०

कन्यापुरे च संवृत्तं ज्ञात्वा दिव्येन चक्षुषा ।
शशास रुक्मिणीं कृष्णो भोजनादिकमर्जुने ॥　८१

तदाप्रभृति तां भद्राम् चिन्तयन् वै धनञ्जयः ।
आस्ते स्म स तदाऽऽरामे [1]कार्श्येनेव सहाभिभूः ॥　८२

सुभद्राऽपि न च स्वस्था पार्थे प्रति बभूव सा ।

1. क-ग-ख—कार्येणैव; घ—काइर्यजेन तदा

कृशा विवर्णवदना चिन्ताशोकपरायणा ॥ ८३

निश्वासपरमा भद्रा मानसेन मनस्विनी ।

न शय्यासनभोगेषु रतिं विन्दति केन चित् ॥ ८४

न नक्तं न दिवा शेते बभूवोन्मत्तदर्शना ।

एवं शोकपरां भद्राम् देवकी वाक्यमब्रवीत् ॥ ८५

देवकी—

मा शोकं कुरु वार्ष्णेयि धृतिमालम्ब शोभने ॥ ८५॥

निवेदयिष्ये त्वां रामे कृष्णे चैव नरर्षभे ।

पश्चाज्जानामि ते वार्ताम् मा शोकं कुरु माधवि ॥ ८६॥

वैशम्पायनः—

एवमुक्त्वा च सा माता भद्रायाः प्रियकामिनी ।

निवेदयामास तदा भद्रामानकदुन्दुभेः ॥ ८७॥

रहस्येकासना तत्र भद्राऽस्वस्थेति चाब्रवीत् ।

आरामे तु यतिश्श्रीमान् अर्जुनस्सोऽथ नश्श्रुतः ॥ ८८॥

अक्रूराय च कृष्णाय आहुकाय च सात्यकेः ।

निवेद्यतां महाप्राज्ञ श्रोतव्यं यदि बान्धवैः ॥ ८९॥

वसुदेवस्तु तच्छ्रुत्वा अक्रूराहुकयोस्तदा ।

निवेदयित्वा कृष्णाय मन्त्रयामास नैकधा ॥ ९०॥

इदं कार्यमिदं कृत्यम् इदमेवं विनिश्चितम् ॥ ९१

अक्रूरश्चोग्रसेनश्च सत्यकेन गदेन ह ।
पृथुश्रवाश्च कृष्णश्च सहिताश्शिनिना मुहुः ॥ ९२
रुक्मिणी सत्यभामा च देवकी रेवती तथा ।
वसुदेवेन सहिताः पुरोहितमते स्थिताः ॥ ९३
विवाहं मन्त्रयामासुर् द्वादशेऽहनि भारत ॥ ९३॥
अज्ञातं रौहिणेयस्य उद्धवस्य च भारत ।
विवाहं तु सुभद्रायाः कर्तुकामो गदाग्रजः ॥ ९४॥
उमासखस्य देवस्य ब्रह्मविश्वेशरूपिणः ।
महादेवस्य पूजार्थं व्याजेन मधुसूदनः ॥ ९५॥
[1]नगरे घोषयामास हितार्थं सव्यसाचिनः ॥ ९६
इतश्चतुर्थेऽहनि च अन्तर्द्वीपं च गम्यताम् ।
सदारैस्सानुयात्रैश्च सपुत्रैस्सहबान्धवैः ॥ ९७
गन्तव्यं सर्ववर्णैश्च गन्तव्यं सर्वयादवैः ॥ ९७॥
एवमुक्तास्तु ते सर्वे तथा चक्रुश्च सर्वशः ॥ ९८
ततस्सर्वदशार्हाणाम अन्तर्द्वीपे नरर्षभ ।
चतुस्त्रिंशदहोरात्रं बभूव परमोत्सवः ॥ ९९
कृष्णरामाहुकाक्रूराः प्रद्युम्नश्शिनिसात्यकी ।
समुद्रं प्रययुर्हृष्टाः कुकुरान्धकवृष्णयः ॥ १००

1. क-ग-च – चतुस्त्रिंशदहोरात्रं सुभद्रार्तिप्रशान्तये । [अधिकः पाठः]

युक्तयन्त्रपताकाभिर् वृष्णयो ब्राह्मणैस्सह ।
समुद्रं प्रययुर्नौभिस् सर्वे पुरनिवासिनः ॥ १०१
ततस्त्वरितमागत्य दाशार्हगणपूजितम् ।
सुभद्रा पुण्डरीकाक्षम् अब्रवीद्यतिशासनात् ॥ १०२
कृत्यवान् द्वादशाहानि स्थाता स भगवानिह ।
तिष्ठतस्तस्य कः कुर्याद् उपस्थानविधिं प्रति ॥ १०३
तमुवाच हृषीकेशः कस्त्वदन्यो विशेषतः ।
तमृषिं प्रत्युपस्थातुम् इह नार्हति मानवः ॥ १०४
त्वमेवास्मन्मतेनास्य महर्षेर्वशवर्तिनी ।
कुरु सर्वाणि कार्याणि कीर्तिं धर्ममवेक्ष्य च ॥ १०५
तस्य चातिथिमुख्यस्य सर्वेषां च तपस्विनाम् ।
संविधानपरा भद्रे भव त्वं वशवर्तिनी ॥ १०६

वैशम्पायनः—

एवमादिश्य भद्रां च रक्षां च मधुसूदनः ।
ययौ शङ्खप्रणादेन भेरीणां च महास्वनैः ॥ १०७
ततस्तद् द्वीपमासाद्य दानधर्मपरायणाः ।
उग्रसेनमुखास्सर्वे विजह्रुः कुकुरान्धकाः ॥ १०८
सप्तयोजनविस्तार आयतो दशयोजनम् ।
बभूव स महाद्वीपस् सपर्वतमहावनः ॥ १०९

सेतुपुष्करिणीजालैर् आक्रीडस्सर्वसात्वताम् ।
वापीपल्वलसङ्घैश्च काननैश्च मनोरमैः ॥ ११०
वासुदेवेन च द्वीपस् स सर्वैः कुकुरान्धकैः ।
बभूव परमोपेतस् त्रिविष्टप इवामरैः । १११
चतुस्त्रिंशदहोरात्रं दानधर्मपरायणाः ।
उग्रसेनमुखास्सर्वे विजह्रुः कुकुरान्धकाः ॥ ११२
विचित्रमाल्याभरणाश् चित्रगन्धानुलेपनाः ।
विहाराभिमुखास्सर्वे यादवाः पानगर्विताः ॥ ११३
सुनृत्तगीतवादित्रै रममाणास्तदाऽभवन् ॥ ११३॥
तत्र याते दशार्हाणाम् ऋषभे शार्ङ्गधन्वनि ।
सुभद्रोद्वाहनं पार्थः प्राप्तकालममन्यत ॥ ११४॥

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्याम्
आदिपर्वणि सप्ताधिकद्विशततमोऽध्यायः ॥ २०७ ॥

॥ १७ ॥ सुभद्राहरणपर्वणि द्वितीयोऽध्यायः ॥ २ ॥

[अस्मिन्नध्याये ११४॥ श्लोकाः]

---

## ॥ अष्टाधिकद्विशततमोऽध्यायः ॥

सुभद्राविवाहः ॥ १ ॥ कृष्णरथमास्थाय सुभद्रया सह अर्जुनस्य खाण्डवप्रस्थं गन्तुं यत्नः ॥ २ ॥

वैशम्पायनः—

वृष्ण्यन्धकपुरात् तस्माद् अपयानं च पाण्डवः ।
विनिश्चित्य तदा पार्थस् सुभद्रामिदमब्रवीत् ॥ १

अर्जुनः—

शृणु भद्रे यथाशास्त्रं यथार्थमृषिभिः कृतम् ॥ १॥
[1]कन्यायास्तु पिता भ्राता माता मातुल एव च ।
पितुर्भ्राता गुरुश्चापि दातुं प्रभवतां गताः ॥ २॥
महोत्सवं पशुपतेर् द्रष्टुकामः पिता गतः ।
अन्तर्द्वीपं गतो भद्रे पुत्रैः पौत्रैस्सबान्धवैः ॥ ३॥
मम चैव विशालाक्षि विदेशस्थास्तु बान्धवाः ।
तस्मात् सुभद्रे गान्धर्वो विवाहः पञ्चमो भवेत् ॥ ४॥
समागमे तु कन्यायाः क्रियाः प्रोक्ताश्चतुर्विधाः ।
तासां प्रवृत्तिं साधूनां शृणु माधवि तद्यथा ॥ ५॥
वरमाहूय विधिना पित्रा दत्ता यथाऽर्थिने ।
सा पत्नी तु बुधैरुक्ता सा वश्या तु पतिव्रता ॥ ६॥

1. क-ग-घ—विवाहं बहुधा वत्से वर्णानां धर्मसंयुतम् [अधिकः पाठः]

भृत्यानां भरणार्थाय आत्मनः पोषणाय च ।
दाने गृहीता या नारी सा भार्येति बुधैर्मता ॥ ७॥
धर्मतो वरयित्वा तु आनीय स्वं निवेशनम् ।
न्यायेन दत्ता तारुण्ये दाराः पितृकृता भवेत् ॥ ८॥
जनयेद्या तु भर्तारं जाया इत्येव नामतः ॥ ९
दाराः पत्नी च भार्या च जाया चेति चतुर्विधाः ।
चतस्र एवाग्निसाक्ष्याः क्रियायुक्तास्तु धर्मतः ॥ १०
गान्धर्वेण विवाहेन रागात् पुत्रार्थकारणात् ।
आत्मनाऽनुगृहीता या वश्या सा तु प्रजावती ॥ ११
गान्धर्वस्तु क्रियाहीनो रागादेव प्रवर्तते ।
सकामायास्सकामेन निर्मन्त्रो रहसि स्मृतः ॥ १२
मयोक्तमक्रियं चापि कर्तव्यं माधवि त्वया ॥ १२॥
अयनं चैव मासश्च ऋक्षं पक्षस्तथा तिथिः ।
करणं च मुहूर्तं च लग्नसम्पत् तथाऽद्य वै ॥ १३॥
विवाहस्य विशालाक्षि प्रशस्तं चोत्तरायणम् ।
वैशाखश्चैव मासानां पक्षाणां शुभ्र एव च ॥ १४॥
नक्षत्राणां तथा हस्तस् तृतीया च तिथिष्वपि ।
लग्नो हि मकरश्श्रेष्ठः करणानां बवस्तथा ॥ १५॥
मैत्रो मुहूर्तो वैवाह्य आवयोश्शुभकर्मणि ॥ १६

सर्वसम्पदियं भद्रे अद्य रात्रौ भविष्यति ॥ १६॥

भगवानस्तमभ्येति आदित्यस्तपतां वरः ।
नारायणो हि सर्वज्ञो न च बुध्येत विश्वकृत् ॥ १७॥

धर्मसङ्कटमापन्ने किं नु कृत्वा शुभं भवेत् ॥ १८

मनोभवेन कामेन मोहितं मां प्रलापिनम् ।
प्रतिवाक्यं च मे देवि किं न वक्ष्यासि माधवि ॥ १९

वैशम्पायनः—

अर्जुनस्य वचश्श्रुत्वा चिन्तयन्ती जनार्दनम् ।
[1]नोवाच किञ्चिद्वचनं बाष्पदूषितलोचना ॥ २०

रागोन्मादप्रलापी सन्नर्जुनो जयतां वरः ।
चिन्तयामास पितरं प्रविश्य च लतागृहम् ॥ २१

चिन्तयानं तु कौन्तेयं ज्ञात्वा शच्या शचीपतिः ।
सहितो नारदाद्यैस्तु मुनिसिद्धाप्सरोगणैः ॥ २२

अरुन्धत्या वसिष्ठेन ह्याजगाम कुशस्थलीम् ॥ २२॥

चिन्तितं च सुभद्रायाश् चिन्तयित्वा जनार्दनः ।
निद्रयाऽपहृतज्ञानं रौहिणेयं विना तदा ॥ २३॥

सहाक्रूरेण शिनिना सत्यकेन गदेन च ।

---

1. क-ग-ङ—बहुप्रकारमुक्ताऽपि अर्जुनेन महात्मना ।
तत्सर्वं वितथीकृत्य चिन्तयन्ती जगद्गुरुम् ॥
[अधिकः पाठः]

वसुदेवेन देवक्या आहुकेन च धीमता ॥ २४॥

आजगाम पुरीं रात्रौ द्वारकां स्वजनैर्वृतः ॥ २५

पूजयित्वा तु देवेशं नारदाद्यैर्महर्षिभिः ।

कुशलप्रश्नमुक्त्वा तु देवेन्द्रेणाभियाचितः ॥ २६

वैवाहिकीं क्रियां कृष्णस् तथेत्येवमुवाच ह ॥ २६॥

आहुको वसुदेवश्च सहाक्रूरस्ससात्यकिः ।

अभिप्रणम्य शिरसा पाकशासनमब्रुवन् ॥ २७॥

देवदेव नमस्तेऽस्तु लोकनाथ जगत्पते ।

वयं धन्यास्स्म लोकेषु बान्धवैस्सहिताः प्रभो ॥ २८॥

कृतप्रसादास्तु वयं तव वाक्येन विश्वजित् ॥ २९

एवमुक्त्वा प्रसाद्यैनं पूजयित्वा प्रयत्नतः ।

महेन्द्रशासनात् सर्वे सहिताश्च महर्षिभिः ॥ ३०

विवाहं कारयामासुश् शक्रपुत्रस्य शास्त्रतः ॥ ३०॥

अरुन्धती शची देवी रुक्मिणी देवकी तथा ।

दिव्यस्त्रीभिश्च सहिताः क्रियां भद्रां प्रयोजयन् ॥ ३१॥

महर्षिः काश्यपो होता सदस्या नारदादयः ।

पुण्याशिषः प्रयोक्तारस् सर्वे ह्यासंस्तदाऽर्जुने ॥ ३२॥

अभिषेकं ततः कृत्वा महेन्द्रः पाकशासनिम् ।

लोकपालैस्तु सहितस् सर्वदेवैरभिष्टुतः ॥ ३३॥

किरीटाङ्गदहाराद्यैर् हस्ताभरणकुण्डलैः ।
भूषयित्वा तदा पार्थं द्वितीयमिव वासवम् ॥ ३४॥

पुत्रं परिष्वज्य तदा प्रीतिमाप पुरन्दरः ॥ ३५
शची देवी तदा भद्राम् अरुन्धत्यादिभिस्तथा ।

कारयामास वैवाह्यमङ्गलं यादवस्त्रियः ॥ ३६
सहाप्सरोभिर्मुदिता भूषणैश्चाभ्यभूषयन् ॥ ३६॥

पौलोमीमिव मन्यन्ती सुभद्रां देवयोषितः ॥ ३७
ततो विवाहो ववृधे स्फीतस्सर्वगुणान्वितः ॥ ३७॥

तस्याः पाणिं गृहीत्वाऽसौ मन्त्रहोमपुरस्कृतः ।
यथा तस्यैव हि पिता शच्या इव शतक्रतुः ॥ ३८॥

सा जिष्णुमधिकं भेजे सुभद्रा चारुदर्शना ॥ ३९
पार्थस्य सदृशी भद्रा रूपेण वयसा तथा ।

सुभद्रायाश्च पार्थोऽपि सदृशो रूपलक्षणैः ॥ ४०
इत्यूचुश्च तदा देवाः प्रीतास्सेन्द्रपुरोगमाः ॥ ४०॥

एवं निवेश्य देवास्तु गन्धर्वैस्साप्सरोगणैः ।
आमन्त्र्य यादवांस्सर्वे विप्रजग्मुर्यथागतम् ॥ ४१॥

यादवाः पार्थमामन्त्र्य अन्तर्द्वीपं गतास्तदा ।
वासुदेवस्तदा पार्थम् उवाच यदुनन्दनः ॥ ४२॥

भगवान्—

द्वाविंशद्दिवसान् पार्थ इहोष्य भरतर्षभ ।
मामकं रथमारुह्य शैब्यसुग्रीवयोजितम् ॥ ४३॥

सुभद्रया सुखं पार्थ खाण्डवप्रस्थमाविश ॥ ४४

यादवैस्सहितः पश्चाद् आगमिष्यामि भारत ।
यतिवेषेण निरतो वस त्वं वीरसत्तम ॥ ४५

वैशम्पायनः—

एवमुक्त्वा प्रचक्राम अन्तर्द्वीपं जनार्दनः ।
कृतोद्वाहस्तदा पार्थः कृतकार्योऽभवत्तदा ॥ ४६

तस्यां चोपगतो भावः पार्थस्य सहसा गतः ॥ ४६॥

स तया युयुजे वीरो भद्रया भरतर्षभः ।
अभिनिष्पन्नया रामस् सीतयेव समन्वितः ॥ ४७॥

स हि जिष्णुर्विजज्ञे तां ह्रीं श्रियं सन्नतिक्रियाम् ।
द्वादशानां वरस्त्रीणां रूपेणासदृशीं सतीम् ॥ ४८॥

स प्रकृत्या श्रिया दीप्तस् सन्दिदीपे तयाऽधिकम् ।
उद्यत्सहस्रदीप्तांशुश् शरदीव दिवाकरः ॥ ४९॥

सा तु तं मनुजव्याघ्रम् अनुरक्ता मनस्विनी ।
कन्यापुरगता भूत्वा तत्परा समपद्यत* । ५०॥

---

* अ-क-ख-ग—कोशेष्वेवैवाध्यायसमाप्तिर्दृश्यते ।

वैशम्पायनः—

वृष्ण्यन्धकपुरात् तत्र अपयानं धनञ्जयः ।
विनिश्चित्य तया पार्थस् सुभद्रामिदमब्रवीत् ॥ ५१॥

अर्जुनः—

द्विजानां गणमुख्यानां यथार्हं प्रतिप्रादय ॥
भोज्यैर्भक्ष्यैश्च कामैश्च स्वपुरीं प्रतियास्यताम् ॥ ५२॥
आत्मनश्च समुद्दिश्य महाव्रतसमापनम् । ५३
गच्छ भद्रे स्वयं तूर्णं महाराजनिवेशनम् ॥ ५३॥
तेजोबलजवोपेतैश् श्लक्ष्णैर्हयवरोत्तमैः ।
शैब्यसुग्रीवसंयुक्तं रथं तूर्णमिहानय ॥ ५४॥
क्रीडार्थमिह भाषित्वा सखीभिस्सुभगे सह ।
क्षिप्रमादाय पर्येहि सह सर्वायुधानि च ॥ ५५॥
अनुकर्षन् पताकाश्च तूर्णीरांश्च धनूंषि च ।
सर्वान् रथवरे कुर्यास् सोत्सेधाश्च महागदाः ॥ ५६॥

वैशम्पायनः—

अर्जुनेनैवमुक्ता सा सुभद्रा भद्रभाषिणी ।
जगाम नृपतेर्वेश्म सखीभिस्त्वरिता सह ॥ ५७॥
क्रीडार्थमिति तत्रस्थान् रक्षिणो वाक्यमब्रवीत् ॥ ५८
रथेनानेन यास्यामि महाव्रतसमापनम् ।

शैब्यसुग्रीवयुक्तेन सायुधेन च शार्ङ्गिणः ॥ ५९

सुभद्रयैवमुक्ते तु जनाः प्राञ्जलयोऽभवन् ।
रथेनानेन भद्रे त्वं यथेष्टं क्रियतामिति ॥ ६०

योजयित्वा रथवरं कल्याणैरभिभाष्य ताम् ।
यथोक्तं सर्वमारोप्य आयुधानि च भामिनी ॥ ६१
क्षिप्रमादाय कल्याणी सुभद्राऽर्जुनमब्रवीत् ॥ ६१॥

सुभद्रा—

रथोऽयं रथिनां श्रेष्ठ आनीतस्तव शासनात् ।
स्वस्ति याहि यथाकामं कुरून् कौरवनन्दन ॥ ६२॥

वैशम्पायनः—

निवेद्य तु रथं भर्तुस् सुभद्रा भद्रसम्मता ।
ब्राह्मणानां तदा हृष्टा ददौ सा विविधं वसु ॥ ६३॥

स्नेहवन्ति च भोज्यानि प्रददावीप्सितानि च ।
यथाकामं यथाश्रद्धं वस्त्राणि विविधानि च ॥ ६४॥

तर्पिता विविधैर्भक्ष्यैस् तान्यवाप्य वसूनि च ।
ब्राह्मणास्स्वगृहं जग्मुः प्रयुज्य परमाशिषः ॥ ६५॥

सुभद्रया तु विज्ञप्तः पूर्वमेव धनञ्जयः ।
रश्मिप्रग्रहणे पार्थ न मेऽस्ति सदृशो भुवि ॥ ६६॥

तस्मात् सा पूर्वमारुह्य रश्मीञ्जग्राह माधवी ।

सोदरा वासुदेवस्य कृतस्वस्त्ययना हयान् ॥ ६७॥

व्यत्याययित्वा तु तल्लिङ्गं समुच्छ्रितमहाधनुः ।
आरुरोह रथश्रेष्ठम् शुक्लवासा धनञ्जयः ॥ ६८॥

महेन्द्रदत्तं मकुटं तथा ह्याभरणानि च ।
अलङ्कृत्य तु कौन्तेयः प्रयातुमुपचक्रमे ॥ ६९॥

ततः कन्यापुरे घोषस् तुमुलस्समपद्यत ॥ ७०

दृष्ट्वा रथगतं पार्थं खड्गबाणधनुर्धरम् ।
अभीशुहस्तां सुश्रोणीम् अर्जुनेन रथे स्थिताम् ॥ ७१
ऊचुः कन्यापुरे कन्या वासुदेवसहोदराम् ॥ ७१॥

कन्याः—

सर्वे कामास्समृद्धास्ते सुभद्रे भद्रभाषिणि ।
वासुदेवप्रियं लब्ध्वा भर्तारं वीरमर्जुनम् ॥ ७२॥

सर्वसीमन्तिनीनां त्वं श्रेष्ठा कृष्णसहोदरे ।
यस्मात् सर्वमनुष्याणां श्रेष्ठो भर्ता तवार्जुनः ॥ ७३॥

उपपन्नस्त्वया वीरस् सर्वलोकमहारथः ।
स्वस्ति याहि गृहं भद्रे सुहृद्भिस्सङ्गमोऽस्तु ते ॥ ७४॥

वैशम्पायनः—

एवमुक्ता प्रहृष्टाभिस् सखीभिः प्रतिनन्दिता ।
भद्रा भद्रजवोपेतान् अश्वान् पुनरचोदयत् ॥ ७५॥

ततश्चामरहस्ताऽत्र सखी कुब्जाङ्गनाऽभवत् ॥ ७६

ततः कन्यापुरद्वारि सुघोषमभिनिस्सृतम् ।
ददृशुस्तं रथश्रेष्ठं जना जीमूतनिस्वनम् ॥ ७७

सुभद्रासङ्गृहीतस्य रथस्य महतो रवम् ।
मेघस्वनमिवाकाशे शुश्रुवुः पुरवासिनः ॥ ७८

सुभद्रया च सम्पन्ने तिष्ठन् रथवरेऽर्जुनः ।
प्रबभौ परयोपेतः कैलास इव गङ्गया ॥ ७९

पार्थस्सुभद्रासहितो विरराज महारथः ।
पार्थस्यैव पिता शक्रो यथा शच्या समन्वितः ॥ ८०

सुभद्रां प्रेक्ष्य धर्मेण ह्रियमाणां यशस्विनीम् ।
चक्रुः किलकिलाशब्दम् आसाद्य बहवो जनाः ॥ ८१

दाशार्हाणां कुलस्य श्रीस् सुभद्रा भद्रभाषिणी ।
अभिकामा सकामेन पार्थेन सह गच्छति ॥ ८२

अथापरे तु संक्रुद्धा गृह्णीत घ्नत मा चिरम् ।
[1]इति संवार्यमाणानां सन्नादस्सुमहानभूत् ॥ ८३

स तेन जनघोषेण वीरो गज इवार्दितः ।
ववर्ष शरवर्षाणि न तु कञ्चन रोषयत् ॥ ८४

मुमोच निशितान् बाणान् दीप्यमानान् स्वतेजसा ।

---

1. घ—इति संवार्य शस्त्राणि ववर्षुरभितो दिशम्। [अधिकः पाठः]

प्रासादवरसङ्घेषु हर्म्येषु भवनेषु च ॥ ८५

[1] क्षोभयित्वा पुरश्रेष्ठम् गरुत्मानिव सागरम् ।
प्रेक्षन् रैवतकद्वारं निर्ययौ भरतर्षभः ॥ ८६

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्याम्
आदिपर्वणि अष्टाधिकद्विशततमोऽध्यायः ॥ २०८ ॥
॥ १७ ॥ सुभद्राहरणपर्वणि तृतीयोऽध्यायः ॥ ३ ॥
[अस्मिन्नध्याये ८६ श्लोकाः]

---

## ॥ नवाधिकद्विशततमोऽध्यायः ॥

द्वारकाया बहिर्निर्गच्छतोऽर्जुनस्य विपृथुना युद्धम् ॥ १ ॥ विपृथुं जित्वाऽर्जुनस्य खाण्डवप्रस्थं प्रति गमनम् ॥ २ ॥ युद्धोद्युक्तानां यादवानां बलरामवाक्यान्निवृत्तिः ॥ ३ ॥ बलस्य क्रोधः ॥ ४ ॥

---

वैशम्पायनः—

शासनात् पुरुषेन्द्रस्य बलेन महता बली ।
गिरौ रैवतके नित्यं बभूव विपृथुश्रवाः ॥ १

प्रवासे वासुदेवस्य तस्मिन् हलधरोपमः ।
सम्बभूव तदा गोप्ता पुरस्य पुरवर्धनः ॥ २

---

1. अ-क-ग-घ—प्रासादपङ्क्तिस्तम्भेषु वेदिकासु ध्वजेषु च ।
मुमोच निशितान् बाणान् न तु कञ्चन रोषयत् ॥
[अधिकः पाठः]

प्राप्य पाण्डवनिर्याणं निर्ययौ विपृथुश्रवाः ।
निशम्य पुरनिर्घोषं स्वमनीकमचोदयत् ॥ ३
सोऽभिपत्य तदाऽध्वानं ददर्श पुरुषर्षभम् ।
निस्सृतं द्वारकाद्वाराद् अंशुमन्तमिवाम्बुदात् ॥ ४
सविद्युतमिवाम्भोदं प्रेक्ष्य बाणधनुर्धरम् ।
पार्थमासाद्य योधानां विस्मयस्समपद्यत ॥ ५
उदीर्णरथनागाश्वम् अनीकमभिवीक्ष्य तत् ।
उवाच परमप्रीता सुभद्रा भरतर्षभम् ॥ ६
सङ्गृहीतुमभिप्रायो दीर्घकालकृतो मम ।
युध्यमानस्य सङ्ग्रामे रथं तव नरर्षभ ॥ ७
ओजस्तेजोद्युतिबलैर् अजितस्य महात्मनः ।
पार्थस्य वै सारथित्वे भवेथा इत्यशिक्षयन् ॥ ८
एवमुक्तः प्रियां प्रीतः प्रत्युवाच नरर्षभः । ८॥

अर्जुनः—

चोदयाश्वानसंसक्तान् विशन्तु विपृथोर्बलम् ॥ ९
बहुभिर्युध्यमानस्य तावकानजिघांसतः ।
पश्य बाहुबलं भद्रे शरान् विक्षिपतो मम ॥ १०

वैशम्पायनः—

एवमुक्ता तदा भद्रा पार्थेन भरतर्षभ ।
चुचोद चाश्वान् विस्रब्धा ततस्ते विविशुर्बलम् ॥ ११

---

1. अ—बभूव ।

तदाहतमहावाद्यं समुद्गध्वजायुतम् ।
अनीकं विपृथोर्हृष्टं पार्थमेवान्ववर्तत ॥ १२
रथैर्बहुविधैर्हृष्टा सदश्वैश्च महाजवैः ।
किरन्तश्शरवर्षाणि परिवव्रुर्धनञ्जयम् ॥ १३
तेषामस्त्राणि संवार्य दिव्यैरस्त्रैर्महास्त्रवित् ।
आवृणोन्महदाकाशं शरैः परपुरञ्जयः ॥ १४
तेषां बाणान् महाबाहुर् विसृष्टान् सन्धितानपि ।
चिच्छेद निशितैर्बाणैश् शरांश्चैव धनूंषि च ॥ १५
युगानीषावरूथानि यन्त्राणि त्रिविधानि च ।
अजिघांसन् परान् पार्थश् चिच्छेद निशितैश्शरैः ॥ १६
निर्धनुष्कान् विकवचान् विरथांश्च महारथान् ।
कृत्वा पार्थः प्रियां प्रीतः प्रेक्ष्यतामित्यदर्शयत् ॥ १७
सा दृष्ट्वा महदाश्चर्यं सुभद्रा पार्थमब्रवीत् ।
अवाप्तार्थोऽस्मि भद्रं ते याहि पार्थ यथासुखम् ॥ १८
संसक्तं पाण्डुपुत्रेण समीक्ष्य विपृथुर्बलम् ।
स्वरमाणोऽभिनिष्क्रम्य स्थीयतामित्यभाषत ॥ १९
तत्तु सेनापतेर्वाक्यं नात्यवर्तन्त यादवाः ।
सागरे मारुतोद्धूता वेलामिव महोर्मयः ॥ २०
ततो रथवरात्तूर्णम् अवरुह्य नरर्षभः ।

अभिगम्य नरव्याघ्रं प्रहृष्टः परिषस्वजे ॥ २१

सोऽब्रवीत् पार्थमासाद्य दीर्घकालमिदं तव ।
निवासमभिजानामि शङ्खचक्रगदाधरात् ॥ २२

न चास्त्यविदितं किञ्चिद् यद्यदाचरितं त्वया ।
सुभद्रासम्प्रयोगेन प्रीतस्तव जनार्दनः ॥ २३

प्राप्तस्य यतिलिङ्गेन द्वारकां तु धनञ्जय ।
विसृष्टा सर्ववृष्णीनाम् ऋषभेण च सोदरा ॥ २४

त्वामिमां वीर दाशार्ही शचीमिव शचीपतिः ।
भक्तां गुणवतीं भद्रां सदा सत्कर्तुमर्हसि ॥ २५
बन्धुर्भव सुभद्राया गतिश्च त्वं धनञ्जय ॥ २५॥

बन्धुमानसि रामेण महेन्द्रावरजेन च ॥ २६

मामेव हि सदाऽकार्षीन्मन्त्रिणं मधुसूदनः ।
अन्तरेण सुभद्रां च त्वां च तात धनञ्जय ॥ २७

इमं रथवरं दिव्यं सर्वशस्त्रसमन्वितम् ।
इदमेवानुयात्रं च निर्दिश्य गदपूर्वजः ॥ २८

अन्तर्द्वीपं तदा वीर यातो वृष्णिसुखावहः ॥ २८॥
दीर्घकालावरुद्धं त्वां सम्प्राप्तं प्रियया सह ।

पश्यन्तु भ्रातरस्तत्र वज्रपाणिमिवामराः ॥ २९॥

आगते तु दशार्हाणाम् ऋषभे शार्ङ्गधन्वनि।
भद्रामनुगमिष्यन्ति रत्नानि च वसूनि च ॥ ३०॥
अरिष्टं गच्छ पन्थानं सुखी भव धनञ्जय ।
नष्टशोकैर्विशोकस्य सुहृद्भिस्सङ्गमोऽस्तु ते ॥ ३१॥
ततो विपृथुमामन्त्र्य पार्थः प्रीतोऽभिवाद्य च ।
कृष्णस्य मतमास्थाय कृष्णस्य रथमास्थितः ॥ ३२॥
पूर्वमेव तु पार्थाय कृष्णेन विनियोजितम् ।
सर्वरत्नसुसम्पूर्णम् सर्वभोगसमन्वितम् ॥ ३३॥
रथेन काञ्चनाङ्केन कल्पितेन यथाविधि ।
शैब्यसुग्रीवयुक्तेन किङ्किणीजालमालिना ॥ ३४॥
सर्वशस्त्रोपपन्नेन जीमूतरवनादिना ।
ज्वलिताग्निप्रकाशेन द्विषतां हर्षघातिना ॥ ३५॥
सन्नद्धः कवची खड्गी बद्धगोधाङ्गुलित्रवान् ।
गुप्तसेनानुयात्रेण रथमारोप्य माधवीम् ॥ ३६॥
रथेनाकाशगेनेव प्रययौ स्वपुरं प्रति ॥ ३७
ह्रियमाणां तु तां दृष्ट्वा सुभद्रां सैनिको जनः ।
व्याक्रोशत् प्राद्रवत् सर्वो द्वारकामभितः पुरीम् ॥ ३८
ते समासाद्य सहितास् सुधर्मामभितः पुरीम् ।

सभापालस्य तत् सर्वम् आचख्युः पार्थविक्रमम् ॥ ३९

तेषां श्रुत्वा सभापालो भेरीं सन्नाहयत्तदा ।
समाजघ्ने महाघोषां जाम्बूनदपरिष्कृताम् ॥ ४०

क्षोभितास्तेन शब्देन भोजवृष्ण्यन्धकास्तदा ।

अन्तर्द्वीपात् समुत्पेतुस् सहसा सहितास्तदा ॥ ४१
अन्नपानमपाहाय समापेतुस्समन्ततः ॥ ४१॥

ततो जाम्बूनदाङ्गानि परार्ध्यास्तरणानि च ।
मणिविद्रुमचित्राणि ज्वलिताग्निप्रभाणि च ॥ ४२॥

भेजिरे पुरुषव्याघ्रा वृष्ण्यन्धकमहारथाः ।
सिंहासनानि शतशो धिष्ण्यानीव हुताशनाः ॥ ४३॥

तेषां समुपविष्टानां देवानामुपसङ्गमे ।
आचख्यौ चेष्टितं जिष्णोस् सभापालस्सहानुगः ॥ ४४॥

तच्छ्रुत्वा वृष्णिवीरास्ते मदरक्तान्तलोचनाः ।
अमृष्यमाणाः पार्थस्य समुत्पेतुर्महाबलाः ॥ ४५॥

योजयित्वा रथानाशु नागानश्वांस्तथैव च ।

कवचानहरन् क्षिप्रं प्रासानाहरतेति च ॥ ४६॥
धनूंषि च महार्हाणि कवचानि बृहन्ति च ॥ ४७

सूतान् विचुक्रुशुः केचिद् रथान् योजयतेति च ।

स्वयं च तुरगान् केचित् निन्युर्हेमविभूषितान् ॥ ४८

रथेष्वानीयमानेषु कवचेषु महत्सु च ।
[1]महास्कन्धे नृवीराणां तदासीत्तुमुलं महत् ॥ ४९

वनमाली ततः क्षीबः कैलासशिखरोपमः ।
नीलवासा मदोत्सिक्त इदं वचनमब्रवीत् ॥ ५०

किमिदं चाकृतप्रज्ञास् तूष्णीम्भूते जनार्दने ।
अस्य भावमविज्ञाय सङ्क्रुद्धा मोघगर्जिताः ॥ ५१

एष तावदभिप्रायम् आख्यातु मम यद्धृदि ।
यदस्य सूचितं कर्तुं तत् कुरुध्वमतन्द्रिताः ॥ ५२

ततस्ते वचनं श्रुत्वा ग्राह्यरूपं हलायुधात् ।
तूष्णीम्भूतास्ततस्सर्वे साधु साध्विति चाब्रुवन् ॥ ५३

समवाचस्तु निश्शब्दा बलदेवस्य धीमतः ।
पुनरेव सभामध्ये सर्वे ते समुपाविशन् ॥ ५४

ततोऽब्रवीत् कामपालो वासुदेवं परन्तपम् ॥ ५४॥

बलदेवः—

त्रैलोक्यनाथ भो कृष्ण भूतभव्यभविष्यवित् ।
किमुवाऽत्रोपविष्टोऽसि प्रेक्षमाणो जनाकुलम् ॥ ५५॥

सत्कृतस्सत्कृते पार्थस् सर्वैरस्माभिरच्युत ।

1. क-ग-ङ—यादववीराणां; च—अभिक्रम्यो नृवीराणां

न च सोऽर्हति तां पूजां दुर्बुद्धिः कुलपांसनः ॥ ५६॥
को हि तत्रैव [1]भुक्त्वाऽन्नं भेत्तुमर्हति पापकृत् ।
मन्यमानः कुले जातम् आत्मानं पुरुषः क्वचित् ॥ ५७॥
ईप्समानश्च सम्बन्धं कृतपूर्वं च मानयन् ।
को हि नाम भवेदर्थी साहसेन चरेद्बुधः ॥ ५८॥
सोऽवमत्य च नामास्मान् अवमत्य च केशवम् ।
प्रसह्य हृतवानद्य सुभद्रां मृत्युमात्मनः ॥ ५९॥
कथं हि शिरसो मध्ये कृतं तेन पदं मम ।
त्वया चेदभ्यनुज्ञातो मर्षयिष्यामि माधव ॥ ६०॥
न मर्षयिष्ये गोविन्द पादस्पर्शमिवोरगः ॥ ६१
अद्य निष्कौरवामेकः करिष्यामि वसुन्धराम् ।
न हि मे मर्षणीयोऽयम् अर्जुनस्य व्यतिक्रमः ॥ ६२
तमहं भ्रातृभिस्सार्धं निहन्मि कुलपांसनम् ॥ ६२॥

वैशम्पायनः—
रौहिणेयं गर्जमानं मेघदुन्दुभिनिस्स्वनम् ।
अन्वपद्यन्त ते सर्वे भोजवृष्ण्यन्धकास्तथा ॥ ६३॥

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्याम्
आदिपर्वणि नवाधिकद्विशततमोऽध्यायः ॥ २०९ ॥
॥ १७ ॥ सुभद्राहरणपर्वणि चतुर्थोऽध्यायः ॥ ४ ॥
[अस्मिन्नध्याये ६३॥ श्लोकाः]
(सुभद्राहरणपर्व समाप्तम्)

---

1. क-ग-ङ—भुक्त्वाऽन्नं भोजनं भेत्तुमर्हति ।
ख—तत्रान्नं भोक्तुमर्हति पापकृत् ।
घ—भुक्त्वाऽन्नं भेत्तुमर्हति पापकृत् ।

## ॥ दशाधिकद्विशततमोऽध्यायः ॥

(अथ हरणहारिकपर्व)

कृष्णेन बलरामसान्त्वनम् ॥१॥ अर्जुनं प्रत्यानेतुं यादवानां गमनम् ॥ २ ॥ विपृथुवाक्यादर्जुनं दूरगतं ज्ञात्वा तेषां प्रतिनिवर्तनम् ॥ ३ ॥ सुभद्रया सह अर्जुनस्य खाण्डवप्रस्थगमनम् ॥ ४ ॥ अर्जुनेन सुभद्रायाः गोपीवेषेण द्रौपदीसमीपप्रेषणम् ॥ ५ ॥ कृतनतिं सुभद्रां प्रति पृथाद्रौपदीभ्यां आशीर्वादः ॥ ६॥ स्वपुरं प्रविष्टेनार्जुनेन भ्रातृभ्यः स्वकृततीर्थयात्रावृत्तान्तकथनम् ॥ ७ ॥

---

वैशम्पायनः—

उक्तवन्तो यदा वाक्यम् असकृत् सर्ववृष्णयः ।
ततोऽब्रवीद्वासुदेवो वाक्यं धर्मार्थसंहितम् ॥ १

वासुदेवः—

मयोक्तं न श्रुतं पूर्वं सहितैस्सर्वयादवैः ।
अतिक्रान्तमतिक्रान्तं न निवर्तेति कर्हि चित् ॥ २
शृणुध्वं सहितास्सर्वे मम वाक्यं सहेतुकम् ॥ २॥
नावमानं कुलस्यास्य गुडाकेशः प्रयुक्तवान् ।
सम्मानोऽभ्यधिकस्तेन प्रयुक्तोऽयं न संशयः ॥ ३॥
[1]अर्थान् धर्मांश्च वः पार्थो मन्यते सात्वतां सदा ।
स्वयंवरमनाधृष्यं मन्यते चापि पाण्डवः ॥ ४॥

---

1. क-ख-ग—अर्थलुब्धांश्च वः पार्थो मन्यते सात्वतांस्सदा ।

प्रदानमपि कन्यायाः पशुवत् को नु मंस्यति ।
विक्रयं चाप्यपत्यस्य कः कुर्यात् पुरुषो भुवि ॥ ५॥
एतान् दोषांस्तु कौन्तेयो दृष्टवानिति मे मतिः ॥ ६
क्षत्रियाणां तु वीर्येण प्रशस्तं हरणं बलात् ।
अतः प्रसह्य हृतवान् कन्यां धर्मेण पाण्डवः ॥ ७
उचितश्चैव सम्बन्धस् सुभद्रा च यशस्विनी ।
एतस्यास्सदृशः पार्थः प्रसह्य हृतवानतः ॥ ८
भरतस्यान्वये [1]जातं शत्रुशातनमद्य वै ।
कुन्तिभोजात्मजापुत्रं का बुभूषेत नार्जुनम् ॥ ९
न च पश्यामि यः पार्थं विक्रमेण पराजयेत् ।
अपि सर्वेषु लोकेषु सदेवमनुजेष्वपि ॥ १०
स च नाम रथस्तादृक् मदीयास्ते च वाजिनः ॥ १०॥
मम शस्त्राण्यशेषेण तूणी चाक्षयसायकौ ।
योद्धा पार्थश्च शीघ्रास्त्रः को नु तेन समो भवेत् ॥ ११॥
तमभिद्रुत्य सान्त्वेन परमेण धनञ्जयम् ।
हृष्टास्सर्वे निवर्तध्वं ममैषा परमा मतिः ॥ १२॥
यदि निर्जित्य वः पार्थो बलाद्गच्छेत् स्वकं पुरं ।
विनश्येद्वो यशस्सद्यो न तु सान्त्वे पराजयः ॥ १३॥

1. घ—जातं शन्तनोः पुत्रमद्य वै । क-ग-ङ—जातश्शत्रुशातनकृत्यया ।

पितृष्वसायाः पुत्रो मे सम्बन्धं नार्हति द्विषाम् ॥ १४

वैशम्पायनः—

तच्छ्रुत्वा वासुदेवस्य तथा कर्तुं जनाधिप ।
उद्योगं कृतवन्तस्ते भेरीं सन्नाद्य यादवाः ॥ १५

अर्जुनस्तु तदा श्रुत्वा भेरीसन्नादनं महत् ।
अर्जुनस्त्वरमाणस्तु सुभद्रामभ्यभाषत ॥ १६

अर्जुनः—

आयान्ति वृष्णयस्सर्वे ससुहृज्जनबान्धवाः ।
त्वदर्थे योद्धुकामास्ते मदरक्तान्तलोचनाः ॥ १७

प्रमत्तानशुचीन् मूढान् सुरामत्तान् नराधमान् ।
वमनं पानशीलांस्तान् करिष्यामि शरोत्तमैः ॥ १८
उताहो वा मदोन्मत्तान् नयिष्यामि यमक्षयम् ॥ १८॥

वैशम्पायनः—

एवमुक्त्वा प्रियां पार्थो न्यवर्तत महाबलः ॥ १९
निवर्तमानं दृष्ट्वैव सुभद्रा त्रस्ततां गता ।
एवं मा वद पार्थेति पादयोः पतिता तदा ॥ २०

सुभद्रा—

सुभद्रा तु कलिर्जाता वृष्णीनां निधनाय च ।
एवं ब्रुवन्ति पौरास्ते जनवादं जनाः प्रभो ॥ २१
मम शोकं वर्धयन्ति तस्मात् पापं न चिन्तय ।

परिवादभयान्मुक्ता त्वत्प्रसादाद्भवाम्यहम् ॥ २२

वैशम्पायनः—

एवमुक्तस्ततः पार्थः प्रियया भद्रया तदा ।
गमनाय मतिं चक्रे पार्थस्सत्यपराक्रमः ॥ २३
स्मितपूर्वं तदाऽऽभाष्य परिष्वज्य प्रियां तदा ।
उत्थाप्य च पुनः पार्थो याहि याहीति चाब्रवीत् ॥ २४
ततस्सुभद्रा त्वरिता रश्मीन्सङ्गृह्य पाणिना ।
चोदयामास जवनान् शीघ्रमश्वान् कृतत्वरा ॥ २५
ततस्तु कृतसन्नाहा वृष्णिवीरास्समाहिताः ।
प्रत्यानयार्थं पार्थस्य जवनैस्तुरगोत्तमैः ॥ २६
राजमार्गमनुप्राप्ता दृष्ट्वा पार्थस्य विक्रमम् ॥ २६॥
प्रासादपङ्क्तिस्तम्भेषु वेदिकासु ध्वजेषु च ।
अर्जुनस्य शरान् दृष्ट्वा विस्मयं परमं गताः ॥ २७॥
केशवस्य वचस्तथ्यं मन्यमानास्तु यादवाः ।
अतीत्य तं रैवतकं श्रुत्वा तु विप्रुथोर्वचः ॥ २८॥
अर्जुनेन कृतं श्रुत्वा गन्तुकामास्तु वृष्णयः ।
श्रुत्वा [1]दीर्घं गतं पार्थं न्यवर्तन्त नराधिपाः ॥ २९॥
पुरोद्यानमतिक्रम्य विशालं च गिरिव्रजम् ।

1. क-ग-ख-ङ—दूरगतं

[1]सानुमुञ्जावतं चैव वनान्युपवनानि च ॥ ३०॥
पुण्येष्वानर्तराष्ट्रेषु वापीपद्मसरांसि च ।
प्राप्य धेनुमतीतीर्थम् अश्वरोधसरः प्रति ॥ ३१॥
प्रेक्ष्यावर्तं ततश्शैलम् अम्बुदं च नगोत्तमम् ।
आराच्छृङ्गमथासाद्य तीर्त्वा कारवतीं नदीम् ॥ ३२॥
प्राप्य साल्वेयराष्ट्राणि [2]निषादानप्यतीत्य च ।
देवापृथुपुरं पश्यन् सर्वतस्सुसमाहितः ॥ ३३॥
तमतीत्य महाबाहुर् देवारण्यमपश्यत ॥ ३४
पूजयामासुरायान्तं देवारण्ये महर्षयः ॥ ३४॥
स वनानि नदीश्शैलान् गिरिप्रस्रवणानि च ।
अतीत्य च तदा पार्थस् सुभद्रासारथिस्तदा ॥ ३५॥
कौरवं विषयं प्राप्य विशोकस्समपद्यत ॥ ३६
सोऽपश्यन्महाबाहुस् सिंहाशयमिवाशयम् ।
आरादुपवनोपेतां दाशार्हप्रतिमां पुरीम्* ॥ ३७
क्रोशमात्रे पुरस्यासीद् गोष्ठं पार्थस्य शोभनम् ।
तत्राभीयात् स बीभत्सुर् निविष्टो यदुकन्यया ॥ ३८

---

1. ग-क—सानूम्मुआवतं । घ—सानूम्युज्जयिनीं चैव
2. क-ग-ब-क—निषादानभ्यतीत्य च । घ—निषधानप्यतीत्य च
* अ-क-ख-ग—कोशेष्वत्रैवाध्यायसमाप्तिर्दृश्यते ।

अर्जुनः—

ततस्सुभद्रां सत्कृत्य पार्थो वचनमब्रवीत् ।

गोपालिकानां वेषेण गच्छ त्वं वृजिनं पुरम् ॥ ३९

कामव्याहारिणी कृष्णा रोचतां ते वचो मम ॥ ३९॥

दृष्ट्वा तु परुषं ब्रूयात् सह तत्र मया गताम् ॥ ४०

अन्यवेषेण तु गतां दृष्ट्वा सा त्वां प्रियं वदेत् ॥ ४०॥

यत्तु सा प्रथमं ब्रूयान्न तस्यास्ति [1]निवर्तनम् ।

तस्मान्मानं च दर्पं च व्यपनीय स्वयं व्रज ॥ ४१॥

वैशम्पायनः—

तस्य तद्वचनं श्रुत्वा सुभद्रा प्रत्यभाषत ॥ ४२

सुभद्रा—

एवमेतत् करिष्यामि यथा त्वं पार्थ भाषसे ॥ ४२॥

वैशम्पायनः-

सुभद्रावचनं श्रुत्वा सुप्रीतः पाकशासनिः ।

गोपालांस्स समानीय त्वरितो वाक्यमब्रवीत् । ४३॥

अर्जुनः—

तरुण्यस्सन्ति यावन्त्यस् तास्सर्वा व्रजयोषितः ।

आगच्छन्तु गमिष्यन्त्या भद्रया सह सङ्गताः ॥ ४४॥

इन्द्रप्रस्थं पुरवरं कृष्णां द्रष्टुं यशस्विनीम् ॥ ४५

वैशम्पायनः—

एतच्छ्रुत्वा तु गोपालैर् आनीता व्रजयोषितः ॥ ४५॥

---

1. क-ग-रू—व्यतिक्रमः

ततस्ताभिः परिवृतां प्रजस्त्रीभिरनिन्दिताम् ।
सुभद्रां त्वरमाणश्च रक्तकौशेयवासिनीम् ॥ ४६॥
पार्थः प्रस्थापयामास कृत्वा [1]गोपालिकावपुः ॥ ४७

साऽधिकं तेन रूपेण शोभमाना यशस्विनी ।
गोपालिकामध्यगता प्रययौ वृजिनं पुरम् ॥ ४८

ततः पुरवरश्रेष्ठम् इन्द्रप्रस्थं यशस्विनी ।
त्वरिता खाण्डवप्रस्थम् आससाद विवेश च ॥ ४९

सा गृहश्रेष्ठमासाद्य वीरपत्नी यशस्विनी ।
ववन्दे पृथुताम्राक्षी पृथां भद्रा पितृष्वसाम् ॥ ५०

ततोऽभिगम्य त्वरिता पूर्णेन्दुसदृशानना ॥
ववन्दे द्रौपदीं भद्रा प्रेष्याऽहमिति चाब्रवीत् ॥ ५१

प्रत्युत्थाप्य तु तां देवीं कृष्णा कृष्णसहोदरीम् ।
सस्वजे चाभवत् प्रीता निस्सपत्नोऽस्तु ते पतिः ॥ ५२

वीरसूर्भव भद्रे त्वं भव भर्तृप्रिया तथा ॥ ५२॥
ओजसा [2]निर्मिता बह्वीर् उवाच परमाशिषः ॥ ५३

तथैव मुदिता भद्रा तामुवाच तथाऽस्त्विति ॥ ७३॥
ततस्सुभद्रां वार्ष्णेयीं परिष्वज्य शुभाननाम् ।

1. क-ख-ग-घ-ङ—गोपालिकं वपुः
2. क-ग-ङ—निभृता

अङ्के निवेश्य मुदिता वासुदेवं प्रशस्य च ॥ ५४॥
ततः किलकिलाशब्दः क्षणेन समपद्यत ।
हर्षादानर्तयोधानाम् आसाद्य वृजिनं [1]पुरम् ॥ ५५॥
देवपुत्रप्रकाशास्ते जाम्बूनदमयध्वजाः ।
पृष्ठतोऽनुययुः पार्थं पुरुहूतमिवामराः ॥ ५६॥
गोभिरुष्ट्रैस्सदश्वैश्च युक्तानि बहुला जनाः ।
ददृशुर्यानमुख्यानि दाशार्हपुरवासिनाम् ॥ ५७॥
ततः पुरवरे यूनां प्रहर्षस्समजायत ।
प्रवासादागतं पार्थं दृष्ट्वा स्वामिव बान्धवम् । ५८॥
सोऽभिगम्य नरश्रेष्ठो दाशार्हगणसंवृतः ।
पौरैः पुरवरैःप्रीत्या परया चाभिनन्दितः ॥ ५९॥
प्राप्य चान्तःपुरद्वारम् अवरुह्य रथोत्तमात् ।
ववन्दे धौम्यमासाद्य मातरं च धनञ्जयः ॥ ६०॥
स्पृष्ट्वा च चरणौ राज्ञो भीमस्य च धनञ्जयः ।
यमाभ्यां वन्दितो [2]हृष्टस् सस्वजे तौ ननन्द च ॥ ६१॥
ब्राह्मणप्रमुखांत्सर्वान् भ्रातृभिस्सह सङ्गतः ।
यथार्हं मानयामास पौरजानपदानपि ॥ ६२॥

---

1. क-ग-ङ—नीं पुरीम्। च—नां पुरम्
2. क-ग-ङ—हृष्टः परिष्वज्य च पाण्डवः

तत्रस्थान्यनुयातानि प्रदाय गुरवे वधूम् ।
पूजयाञ्चक्रुरासाद्य कुन्तीपुत्रं युधिष्ठिरम् ॥ ६३॥
पुरस्तादेव तेषां तु स महात्मा महायशाः ।
पूजनार्होऽभवद्राजा यथा वै गदपूर्वजः ॥ ६४॥
पाण्डवेन यथार्हं ते पूजार्हेण सुपूजिताः ।
न्यविशन्ताभ्यनुज्ञाता राज्ञा तुष्टा यशस्विना ॥ ६५॥
तामदीनामदीनार्हां सुभद्रां प्रीतिवर्धिनीम् ।
साक्षाच्छ्रियममन्यन्त पार्थाः कृष्णसहोदराम् ॥ ६६॥
[1]गुरूणां श्वशुराणां च देवराणां तथैव च ।
सुभद्रा स्वेन वृत्तेन बभूव परमप्रिया ॥ ६७॥
ततस्ते हृष्टमनसः पाण्डवेया महारथाः ।
युधिष्ठिरमुखाः प्रीता बभूवुर्जनमेजय ॥ ६८॥
कुन्ती च सततं प्रीता कृष्णा च सततं तथा[2] ॥ ६९

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्याम्
आदिपर्वणि दशाधिकद्विशततमोऽध्यायः ॥ २१० ॥
॥ १८ ॥ हरणहारिकपर्वणि प्रथमोऽध्यायः ॥ १ ॥
[अस्मिन्नध्याये ६९ श्लोकाः]

---

1. ङ—ते उभे रूपसम्पन्ने कृष्णाभद्रे पुरौकसः ।
रूपमेतादृशं लोके विद्यते न विसिस्मिरे ॥ [अधिकः पाठः]
2. क-ख-ग-ङ—तथा

## ॥ एकादशाधिकद्विशततमोऽध्यायः ॥

कृष्णानुमत्याऽर्जुनः सुभद्रां जहारेति पौराणामूहः ॥ १ ॥ अर्जुनं इन्द्रप्रस्थं प्राप्तं ज्ञात्वा यादवैस्सह श्रीकृष्णस्य इन्द्रप्रस्थं प्रत्यागमनम् ॥ २ ॥ आगतान्श्रीकृष्णादीन्श्रुत्वा युधिष्ठिरस्य प्रत्युद्गमनं तेषां सत्कारश्च ॥ ३ ॥ वैवाहिकमहोत्सवकरणम् ॥ ४ ॥ पारिबर्हदानम् ॥ ५ ॥ कञ्चित्कालं तत्रोषितानां कुरुभिः पूजितानां बलरामादीनां द्वारकां प्रति गमनम् ॥६॥

---

वैशम्पायनः—

अथ शुश्राव निर्वृत्ते वृष्णीनां परमोत्सवे ।
अर्जुनेन हृतां भद्रां शङ्खचक्रगदाधरः ॥ १

पुरस्तादेव पौराणां संशयस्समजायत ।
जानता वासुदेवेन वासितो भरतर्षभः ॥ २

लोकस्य विदितं ह्यासीत् पूर्वं विपृथुना यथा ।
सान्त्वयित्वाऽभ्यनुज्ञातो भद्रया सह सङ्गतः ॥ ३

दित्सता सोदरां तस्मै पतत्त्रिवरकेतुना ।
अर्हते पुरुषेन्द्राय पार्थायायतलोचनाम् ॥ ४

सत्कृत्य [1]पाण्डवश्रेष्ठो जयेन जयतां वरः ।
भद्रया सह बीभत्सुः प्रापितो वृजिनं पुरम् ॥ ५

---

1. क-ख-ग-च-ङ—चतुरङ्गेण बलेन जयतां

श्रुत्वा तु पुण्डरीकाक्षस् सम्प्राप्तं स्वपुरोत्तमम् ।
अर्जुनं पाण्डवश्रेष्ठम् इन्द्रप्रस्थगतं तथा ॥ ६

यियासुः खाण्डवप्रस्थम् अमन्त्रयत केशवः ।
पूर्वं सत्कृत्य राजानम् आहुकं मधुसूदनः ॥ ७

तथा विपृथुमक्रूरं सङ्कर्षणविडूरथौ ।
पित्रा च पुरुषेन्द्रेण पुरस्तादनुमोदितः ॥ ८

सम्प्रीतः प्रीयमाणेन वृष्णिराज्ञा जनार्दनः ।
अभिमन्त्र्याभ्यनुज्ञातो योजयामास वाहिनीम् ॥ ९

ततस्तु यानान्यासाद्य दाशार्हपुरवासिनाम् ।
सिंहनादः प्रहृष्टानां क्षणेन समपद्यत ॥ १०

योजयन्तस्सदश्वांस्तु यानयुग्यं रथांस्तथा ।
गजांश्च परमप्रीतास् समपद्यन्त वृष्णयः ॥ ११

वृष्ण्यन्धकमहामात्रैस् सह वीरैर्महारथैः ।
भ्रातृभिश्च कुमारैश्च योधैश्च शतशो वृतः ॥ १२

सैन्येन महता शौरिर् अभिगुप्तः परन्तपः ।
तत्र दान[1]परश्श्रीमान् जगाम स महायशाः ॥ १३

अक्रूरो वृष्णिवीराणां सेनापतिररिन्दमः ।

1. क-ग-ङ—पतिः श्रीमानाजगाम महा
च—पतिः श्रीमान् जगाम सुमहायशाः

[1]अनाधृष्णिर्महातेजा उद्धवश्च महायशाः ॥ १४
साक्षाद्बृहस्पतेश्शिष्यो महाबुद्धिर्महायशाः ॥ १४॥
सात्यकिश्च महेष्वासः कृतवर्मा महारथः ॥ १५
प्रद्युम्नश्चैव साम्बश्च निशठश्शङ्कुरेव च ।
चारुदेष्णश्च विक्रान्तो झिल्लिर्विपृथुरेव च ॥ १६
सारणश्च महातेजा गदश्च विदुषां वरः ।
एते चान्ये च बहवो वृष्णिभोजान्धकास्तथा ॥ १७
आजग्मुः खाण्डवप्रस्थम् आदाय हरणं बहु ॥ १७॥
[2]अन्वाहारं समादाय पृथुवृष्णिपुरोगमाः ।
प्रययुस्सिंहनादेन सुभद्रामवलो[3]ककाः ॥ १८॥
ते त्वदीर्घेण कालेन कृष्णेन सह यादवाः ।
पुरमासाद्य पार्थानां परां प्रीतिमवाप्नुवन् ॥ १९॥
ततो युधिष्ठिरो राजा श्रुत्वा माधवमागतम् ।
प्रतिग्रहार्थे कृष्णस्य यमौ प्रास्थापयद्गृहात् ॥ २०॥
ताभ्यां प्रतिगृहीतं तु वृष्णिचक्रं समृद्धिमत् ।
विवेश खाण्डवप्रस्थं पताकाध्वजशोभितम् ॥ २१॥
चन्दनस्य रसैश्शीतैः पुण्यगन्धैर्निषेवितम् ।

1. क-ग-ङ—अनाधृष्यो महा। च—अनाधृतिर्महा
2. क-ग-ङ—उपहारं। च—अन्वाहार्यं
3. क-ग-ङ—कितुम्

दह्यताऽगुरुणा चैव देशे देशे सुगन्धिनम् ॥ २२॥

सुसंहृष्टजनाकीर्णं वणिग्भिरुपशोभितम् ।
प्रतिपेदे महाबाहुस् सह रामेण केशवः ॥ २३॥

वृष्ण्यन्धकैस्तथा भोजैस् समेतः पुरुषोत्तमः ।
सम्पूज्यमानः पौरैश्च ब्राह्मणैश्च सहस्रशः ॥ २४॥

विवेश भवनं राज्ञः पुरन्दरगृहोपमम् ॥ २५

युधिष्ठिरस्तु रामेण समागच्छद्यथाविधि ।
मूर्ध्नि केशवमाघ्राय पर्यष्वजत बाहुना ॥ २६

तं प्रीयमाणः कृष्णस्तु विनयेनाभिपूजयन् ।
भीमं च पुरुषव्याघ्रं विधिवत् प्रत्यपूजयत् ॥ २७

तांश्च वृष्ण्यन्धकश्रेष्ठान् धर्मराजो युधिष्ठिरः ।
प्रतिजग्राह सत्कारैर् यथाविधि यथोचितम् ॥ २८

गुरुवत् पूजयामास कांश्चित् कांश्चिद्वयस्यवत् ।
कांश्चिदभ्यवदत् प्रेम्णा कैश्चिदप्यभिवादितः ॥ २९

ततः पृथा च पार्थाश्च [1]मुदिताः कृष्णया सह ।
पुण्डरीकाक्षमासाद्य बभूवुर्मुदितेन्द्रियाः ॥ ३०

हर्षोदभिगतौ दृष्ट्वा सङ्कर्षणजनार्दनौ ।
बन्धुमन्तं पृथा पार्थं युधिष्ठिरममन्यत ॥ ३१

1. क-ख-ग-घ-ङ—सहिताः

ततस्सङ्कर्षणाक्रूरावप्रमे[1]यावदीनवत् ।
भद्रवत्यै सुभद्रायै धनौघमुपजह्रतुः ॥ ३२

प्रवालानि च [2]हाराणि भूषणानि सहस्रशः ।
कुथास्तरपरिस्तोमान् व्याघ्राजिनपुरस्कृतान् ॥ ३३

तथाऽऽभरणरत्नौघैर् दीप्तप्रभमजायत ।
शयनासनयानैश्च युधिष्ठिरनिवेशनम् ॥ ३४

ततः प्रीतिकरो यूनां विवाहपरमोत्सवः ।
भद्रवत्यै सुभद्रायै सप्तरात्रमवर्तत ॥ ३५

ततो ददौ वासुदेवः कन्यार्थे धनमुत्तमम् ।
हरणं वै सुभद्राया ज्ञातिदेयं महायशाः ॥ ३६

रथानां काञ्चनाङ्गानां किङ्किणीजालमालिनाम् ।
चतुर्युजामुपेतानां सूतैः कुशलसम्मितैः ॥ ३७

[3]सहस्रं प्रददौ कृष्णो गवां नियुतमेव च ।
उपपाद्य तु वश्यानां दोग्ध्रीणां पुण्यवर्चसाम् ॥ ३८

गजानां तु प्रभिन्नानां त्रिधा प्रस्रवतां मदम् ।
गिरिकूटनिकाशानां समरेष्वनिवर्तिनाम् ॥ ३९

---

1. क-ख-ग-घ-ङ—यमदीनवत्
2. क-ङ—वस्त्राणि । ख-ग—यम्साणि । घ—वस्त्राणि
3. घ—बाह्लीकसिन्धुजातानां काम्भोजानां शतं शतम् ।
हरणार्थं ददौ कृष्णस् तुरगाणां जनेश्वर ॥ [अधिकः पाठः]

सुवर्ण[1]कक्ष्याग्रैवेयसुवर्णाङ्कुशभूषितम् ।
[2]कूप्तानां पटुघण्टानां चारूणां हेममालिनाम् ॥ ४०
हस्त्यारोहैरुपेतानां सहस्रं साहसप्रियः ।
प्रददौ वासुदेवस्तु वसुदेवाज्ञया तदा ॥ ४१
बडवानां च शुभ्राणां चन्द्रांशुसमवर्चसाम् ।
ददौ जनार्दनः प्रीत्या सहस्रं हेममालिनाम् ॥ ४२
काम्भोजारट्टबाह्लीकसिन्धुजानां च भारत ।
सुवर्णकृतसन्नाहघण्टारावविनादिनाम् ॥ ४३
श्वेतचामरसंच्छन्नांत्सर्वशस्त्रैरलङ्कृतान् ।
जात्यश्वानां सहस्राणि पञ्चाशत् प्रददौ तदा ॥ ४४
हयानां चन्द्रकाशानां श्यामकर्णं ददौ शतम् ॥ ४४॥
तथैवाश्वतरीणां च दान्तानां वातरंहसाम् ।
शतान्यञ्जनकेशानां श्वेतानां पञ्च पञ्च च ॥ ४५॥
शिबिकानां सहस्रं च प्रददौ मधुसूदनः ॥ ४६
कृष्णानामपि चाश्वानां बाह्लीकानां जनार्दनः ।
ददौ शतसहस्रं वै कन्याधनमनुत्तमम् ॥ ४७
स्नापनाच्छादने चैव भोजने पाचने तथा ।

---

1. क-ग-ब-ङ—कक्ष्यान् ग्रैवेयान्
2. क-ग—कूप्तानां परवाहानां वराणां । घ—द्विपानां स्वर्णघण्टानां

आदानोद्वासने चैव प्रेषणे यत्र कुत्र चित् ॥ ४८
अनुलेपने च गन्धानां पेषणे च विचक्षणम् ।
सर्वकर्मणि निष्णातं युक्तं च वयसाऽन्वितम् ॥ ४९
स्त्रीणां सहस्रं गौरीणां सुवेषाणां सुवर्चसाम् ।
सुवर्णशतकीर्णानाम् अरोगाणां सुवर्चसाम् ॥ ५०
परिचर्यासु दक्षाणां प्रददौ पुष्करेक्षणः ॥ ५०॥
कृताकृतस्य मुख्यस्य कनकस्य सुवर्चसः ।
[1]महार्हभारान् दाशार्हः प्रददौ प्रयुतं तदा ॥ ५१॥
भूषणानां च मुख्यानां शतभारं ददौ धनम् ॥ ५२
मुक्ताहाराणि शुभ्राणि शतसङ्ख्यानि केशवः ।
प्रवालानां सहस्रं च तथा वै शयनासनान् ॥ ५३
सुवर्णपादपीठानां महार्हास्तरणांस्तथा ।
पर्यङ्काणां सहस्रं तु ददौ कन्याधनं तथा ॥ ५४
रामः [2]पाणिग्राहणिकं ददौ पार्थाय लाङ्गली ।
प्रीयमाणो हलधरस् सम्बन्धं प्रेम कामयन् ॥ ५५
स महाधनरत्नौघो वस्त्रकम्बलफेनवान् ।
महारथगजग्राहो महाश्वैश्शैवलाकुलः ॥ ५६
पाण्डुसागरमाविद्धं प्रविवेश महानदः ॥ ५६॥

1. अ-ख-ब—मनुष्य ।　2. अ-ख-ब—पाद्ग्राहनीकम् ।

पूर्णमापूरयंस्तेषाम् अभीष्टस्सर्वभोगवत् ।
प्रतिजग्राह तत्सर्वं धनौघं वै युधिष्ठिरः ॥ ५७॥
पूजयामास तांश्चैव वृष्ण्यन्धकमहारथान् ॥ ५८
ते समेता महात्मानः कुरुवृष्ण्यन्धकोत्तमाः ।
विजह्रुरमरावासे नरास्सुकृतिनो यथा ॥ ५९
तत्र तत्र महापानैर् आसवैश्च महाधनैः ।
पीत्वा पीत्वा च मैरेयान् उत्कृष्टतलनादितैः ॥ ६०
यथायोगं यथाप्रीति विजह्रुः कुरुवृष्णयः । ६०॥
एवमुत्तमवीर्यास्ते विहृत्य दिवसान् बहून् ।
पूज्य पार्थान् पृथां चैव भद्रां च यदुपुङ्गवाः ॥ ६१॥
केशवेनाभ्यनुज्ञाता गन्तुकामाः पुरं प्रति ।
पूजिताः कुरुभिर्जग्मुः पुनर्द्वारवतीं प्रति ॥ ६२॥
रत्नान्यादाय शुभ्राणि दत्तानि कुरुसत्तमैः ।
रामं पुरस्कृत्य ययुर् यादवानां महारथाः ॥ ६३॥
रामस्सुभद्रां सम्पूज्य परिष्वज्य [1]स्वसां तदा ।
न्यासेति द्रौपदीमुक्त्वा परिदाय महाबलः ॥ ६४॥
पितृष्वसायाश्चरणावभिवाद्य ययौ तदा ॥ ६५
तस्मिन् काले पृथा प्रीता पूजयामास तं तथा ॥ ६५॥

1. अ-क-ख-ग—प्रियां ।

स वृष्णिवीरः पार्थैश्च पौरैश्च परमार्चितः ।
ययौ द्वारवतीं रामो वृष्णिभिस्सह संयुतः ॥ ६६॥

वासुदेवस्तु पार्थेन तत्रैव सह भारत ।
चतुस्त्रिंशदहोरात्रं रममाणो महाबलः ॥ ६७॥
उवास नगरे रम्ये शक्रप्रस्थे [1]महात्मना ॥ ६८
व्यचरद्यमुनाकूले पार्थेन सह भारत ॥ ६८॥

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्याम्
आदिपर्वणि एकादशाधिकद्विशततमोऽध्यायः ॥ २११ ॥
॥ १८ ॥ हरणहारिकपर्वणि द्वितीयोऽध्यायः ॥ २ ॥
[अस्मिन्नध्याये ६८॥ श्लोकाः]

---

## ॥ द्वादशाधिकद्विशततमोऽध्यायः ॥

अभिमन्यूत्पत्तिः ॥१॥ द्रौपद्याः युधिष्ठिरादिभ्यः पञ्चपुत्रोत्पत्तिः ॥२॥ तेषां विद्याभ्यासश्च ॥ ३ ॥

---

वैशम्पायनः—
ततस्सुभद्रा सौभद्रं केशवस्य प्रिया स्वसा ।
जयन्तमिव पौलोमी द्युतिमन्तमजीजनत् ॥ १
दीर्घबाहुं [2]महोरस्कं वृषभाक्षमरिन्दमम् ।

---

1. क-ख-ग-घ-ङ—महामनाः　　2. क-ख-ग-घ-ङ—महासत्वं

सुभद्रा सुषुवे वीरम् अभिमन्युं नरर्षभम् ॥ २
अभीश्च मन्युमांश्चैव ततस्तमरिमर्दनम् ।
अभिमन्युरिति प्राहुर् आर्जुनिं ब्राह्मणर्षभाः ॥ ३
स सात्वत्यामतिरथस् सम्बभूव धनञ्जयात् ।
मखे निर्मथ्यमानात्तु शमीगर्भाद्धुताशनः ॥ ४
यस्मिञ्जाते महाबाहुः कुन्तीपुत्रो युधिष्ठिरः ।
[1]अयुतं गा द्विजातिभ्यः प्रादान्निष्कांश्च तावतः ॥ ५
लालितो वासुदेवस्य बाल्यात्प्रभृति चाभवत् ।
पितृणां चैव सर्वेषां प्रजानामिव चन्द्रमाः ॥ ६
जन्मप्रभृति कृष्णश्च चक्रे तस्य क्रियाश्शुभाः ।
स चापि ववृधे बालश् शुक्लपक्षे यथा शशी ॥ ७
चतुष्पादं दशविधं धनुर्वेदमरिन्दमः ।
अर्जुनाद्वेद [2]वेदज्ञात् सकलं दिव्यमानुषम् ॥ ८
[3]विज्ञानेष्वपि चास्त्राणां सौष्ठवे च महाबलः ।
क्रियास्वपि च सर्वासु विशेषानभ्यशिक्षयत् ॥ ९
आगमे च प्रयोगे च चक्रे तुल्यमिवात्मना ।

---

1. च—अतिप्रीतो द्विजातिभ्यः प्रादान्निष्कं तथैव च ।
2. अ-ख—वेदज्ञः
3. क-ख-ग-ङ—ज्ञानेष्वपि च शस्त्राणां सौष्ठवेषु

तुतोष पुत्रं सौभद्रं प्रेक्षमाणो धनञ्जयः ॥ १०
सर्वसंहननोपेतं सर्वलक्षणलक्षितम् ।
दुर्धर्षमृषभस्कन्धं व्यात्ताननमिवान्तकम् ॥ ११
सिंहदर्पं महेष्वासं मत्तमातङ्गविक्रमम् ।
मेघदुन्दुभिनिर्घोषं पूर्णचन्द्रनिभाननम् ॥ १२
कृष्णस्य सदृशं शौर्ये वीर्ये रूपे तथाऽऽकृतौ ।
ददर्श पुत्रं बीभत्सुर् जयन्तं मघवानिव ॥ १३
[1]पूर्वमेव तु पाञ्चाली पञ्चभिः पतिभिश्शुभा ।
लेभे पञ्च सुतान् वीरान् छ्रेष्ठान् पञ्चानलानिव ॥ १४
युधिष्ठिरात् प्रतिविन्ध्यं सुतसोमं वृकोदरात् ।
अर्जुनाच्छ्रुतकर्माणं शतानीकं च नाकुलिम् ॥ १५
सहदेवाच्छ्रुतसेनम् एतान् पञ्च महारथान् ।
पाञ्चाली सुषुवे वीरान् आदित्यानदितिर्यथा ॥ १६
शाश्वतः प्रतिविन्ध्यं तम् ऊचुर्विप्रा युधिष्ठि[2]रम् ॥
परप्रहरणज्ञाने प्रतिविन्ध्यो भवत्वयम् ॥ १७
सुते सोमसहस्रे तु सोमार्कसमतेजसम् ।
सुतसोमं महाप्राज्ञं सुषुवे भीमसेनतः ॥ १८

---

1. च—पाञ्चाल्यपि च पञ्चभ्यः पतिभ्यश्शुभलक्षणा ।
2. क-ख-ग-च-ङ—रात्

श्रुतं कर्म महत् कृत्वा निवृत्तेन किरीटिना ।
जातः पुत्रस्तथेत्येवं श्रुतकर्मा ततोऽभवत् ॥ १९

शतानीकस्य राजर्षेः कौरव्यः कुरुनन्दनः ।
चक्रे पुत्रं सनामानं नकुलः कीर्तिवर्धनः ॥ २०

ततस्त्वजीजनत् कृष्णा नक्षत्रे वह्निदैवते ।
सहदेवात् सुतं तस्माच् छ्रुतसेनेति तं विदुः ॥ २१

एकवर्षान्तरास्त्वेते द्रौपदेया यशस्विनः ।
अन्वजायन्त राजेन्द्र परस्परहितैषिणः ॥ २२

जातकर्माण्यानुपूर्व्याच् चूडोपनयनानि च ।
चकार विधिवद्धौम्यस् तेषां भरतसत्तम ॥ २३

कृत्वा च वेदाध्ययनं ततस्सुचरितव्रताः ।
जगृहुस्सर्वमिष्वस्त्रम् अर्जुनाद्दिव्यमानुषम् ॥ २४

दिव्यगर्भोपमैः पुत्रैर् व्यूढोरस्कैर्महाबलैः ।
अन्विता राजशार्दूल पाण्डवा मुदमाप्नुवन् ॥ २५

इति श्रीमहाभारते शतसाहस्रिकायां संहितायां वैयासिक्याम्
आदिपर्वणि द्वादशाधिकद्विशततमोऽध्यायः ॥ २१२ ॥
॥ १८ ॥ हरणहारिकपर्वणि तृतीयोऽध्यायः ॥ ३ ॥

[समाप्तं च हरणहारिकपर्व]

[अस्मिन्नध्याये २५ श्लोकाः]

---

## ।। त्रयोदशाधिकद्विशततमोऽध्यायः ।।

(अथ खाण्डवदाहपर्व)

युधिष्ठिरस्य राज्यपरिपालनप्रकारवर्णनम् ॥ १ तत्रैव निवसता श्रीकृष्णेन सहार्जुनस्य जलक्रीडार्थं यमुनां प्रति गमनम् ॥ २ ॥

---

वैशम्पायनः—

इन्द्रप्रस्थे वसन्तस्ते जघ्नुरन्यान् नराधिपान् ।
शासनाद्धृतराष्ट्रस्य राज्ञश्शान्तनवस्य च ।। १

आश्रित्य धर्मराजानं सर्वलोकोऽवसत् सुखम् ।
पुण्यलक्षणकर्माणं स्वदेहमिव देहिनः ।। २

स समं धर्मकामार्थान् सिषेवे भरतर्षभ ।
त्रीनिवात्मसमान् बन्धून् बन्धुमानिव मानयन् ।। ३

तेषां समविभक्तानां क्षितौ देहवतामिव ।
बभौ धर्मार्थकामानां चतुर्थ इव पार्थिवः ।। ४

अध्येतारं परं [1]वेदाः प्रयोक्तारं महाध्वराः ।
रक्षितारं [2]शुभा वर्णा लेभिरे तं जनाधिपम् ।। ५

[3]अधिष्ठानवती लक्ष्मीः परायणवती मही ।

---

1. अ—वेदान् प्रयोक्तारं महाध्वरे ।
2. अ-ब-शुभांल्लोकांल्लेभिरे
3. ब—चत्वार इव ते वर्णा रेमिरे तं जनाधिपम् । [अधिकः पाठः]

बन्धुमानखिलो लोकस् तेनासीत् पृथिवी[1] क्षिता ॥ ६
भ्रातृभिस्सहितो राजा चतुर्भिरधिकं बभौ ।
प्रयुज्यमानैर्विततो वेदैरिव महाध्वरः ॥ ७
तं तु धौम्यादयो विप्राः परिवार्योपतस्थिरे ।
बृहस्पतिसमा [2]मुख्याः प्रजापतिमिवाध्वरे ॥ ८
धर्मराजे ह्यतिप्रीत्या पूर्णचन्द्र इवामले ।
प्रजानां रेमिरे तुल्यं नेत्राणि हृदयानि च ॥ ९
न तु केवलदैवेन प्रजा भावेन रेमिरे ॥ ९॥
यद्बभूव मनःकान्तं कर्मणा स चकार तत् ॥ १०
न ह्ययुक्तं न चापथ्यं नानृतं न च विप्रियम् ।
भाषितं चारुभाषस्य जज्ञे पार्थस्य धीमतः ॥ ११
स हि सर्वस्य लोकस्य हितमात्मन एव च ।
चिकीर्षुस्सुमहातेजा रेमे भरतसत्तम ॥ १२
तथा तु मुदितास्सर्वे पाण्डवा विगतज्वराः ।
अजयत् पृथिवीपालांस् त्रासयन्तस्स्वतेजसा ॥ १३
ततः कतिपयाहस्सु बीभत्सुः कृष्णमब्रवीत् । १३॥

अर्जुनः—

उष्णानि कृष्ण वर्तन्ते गच्छाव यमुनां प्रति ॥ १४
सुहृज्जनवृतो तत्र विहृत्य मधुसूदन ।

---

1. अ-ख—क्षिताम् 2. ब-मुख्या

सायाह्ने [1]विनिवर्तावो रोचतां ते जनार्दन ॥ १५

वासुदेवः—

कुन्तीसुत ममाप्येष रोचते यद्वयं जले ।
सुहृज्जनवृताः पार्थ विहरेम यथासुखम् ॥ १६

वैशम्पायनः—

आमन्त्र्य तौ धर्मराजम् अनुज्ञाप्य च भारत ।
जग्मतुः पार्थगोविन्दौ सुहृज्जनवृतौ ततः ॥ १७

विहरन् खाण्डवप्रस्थे काननेषु च माधवः ।
पुष्पितोपवनां रम्यां ददर्श यमुनां नदीम् ॥ १८

आलयं सर्वभूतानां खाण्डवं खड्गचर्मभृत् ।
ददर्श स तु तं देशं सहितस्सव्यसाचिना ॥ १९

ऋक्षगोमायुसङ्घुष्टं हंससारसनादितम् ।
शाखामृगगणैर्जुष्टं निकेतं सर्वरक्षसाम् ॥ २०

द्वीपिगोमायुसिंहर्क्षवराहरुरुवारणैः ।
नानामृगसहस्रैश्च पक्षिभिश्च समावृतम् ॥ २१

[2]मानार्हं तच्च सर्वेषां देवदानवरक्षसाम् ।
आलयं पन्नगेन्द्रस्य तक्षकस्य महात्मनः ॥ २२

वेणु[3]शाल्मलितालिङ्गैर् उपेतं वेत्रसंवृतम् ।

---

1. अ—विनिवर्तामः । घ—विचरिष्यावो
2. क-ग-ङ—माननार्हं च सर्वेषां । ख—माननार्हस्य ।
घ—मानार्हाणां च
3. ख—शल्तमालिङ्गैरुपेतं । ग—वेत्तसंवृते ।
घ—शाल्मलिमाल्यङ्गैः कुकुभिः ।

[1]शाकपद्मकतालैश्च शतशाखैश्च रौहिणैः ॥ २३

निरुद्देशं समप्रख्यम् आवृतं गजसंस्थितैः ।

गुल्मैः कीचकवेणूनाम् आशीविषनिषेवितम् ॥ २४

[2]विगतार्कं महाभोगविततद्रुमसङ्कटम् ।

स्नुहीवेत्रकुलिङ्गाक्षैर् हिन्तालैश्च समावृतम् ॥ २५

[3]व्यालदंष्ट्रिगणाकीर्णं वर्जितं सर्वमानुषैः ।

रक्षसां भुजगेन्द्राणां पक्षिणां च महालयम् । २६

देवेशस्सर्वभूतेशस् सर्वलोकविभागवित् ।

पीताम्बरधरो देवस् तद्वनं बहुधा चरन् ॥ २७

सद्रुमस्य सयक्षस्य सभूतगणपक्षिणः ।

खाण्डवस्य विनाशं तं ददर्श मधुसूदनः ॥ २८

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्याम्
आदिपर्वणि त्रयोदशाधिकद्विशततमोऽध्यायः ॥ २१३ ॥

॥ १९ ॥ खाण्डवदाहपर्वणि प्रथमोऽध्यायः ॥ १ ॥

[अस्मिन्नध्याये २८ श्लोकाः]

---

1. क-ग-ङ—एकपद्मकतालैश्च शतसंख्यैश्च ।
   घ—अशोकधवतालैश्च शतसंख्यैश्च

2. घ—विहगौघसमाकीर्णं पृतनाद्रुमसङ्कटम् । [अधिकः पाठः]

3. घ—नानाकण्टकवृक्षैश्च यथा कण्टककुञ्जकैः ।
   कण्टकीकुञ्जगुल्मैश्च कण्टकावृतभूतृणैः ॥
   निम्नोन्नतप्रदेशैश्च तीक्ष्णपाषाणसङ्कटम् ।
   अत्यगाधमहागर्तैर् वनापगमहाभयम् ॥ [अधिकः पाठः]

4. अ-क-ख-ग-ङ—भूतानां सर्वदेवेशस्

## ॥ चतुर्दशाधिकद्विशततमोऽध्यायः ॥

ब्राह्मणरूपस्याग्नेः तत्रागमनम् ॥ १ ॥ खाण्डववनदहनार्थं कृष्णार्जुनौ प्रति अग्नेः प्रार्थना ॥ २ ॥ किमर्थमग्नेः खाण्डवदिधक्षेति जनमेजयेन प्रश्ने वैशम्पायनेन श्वेतक्युपाख्यानकथनम् ॥ ३ ॥ अर्जुनेन दिव्यानां रथाश्वधनुरादीनां याचनम् ॥ ४ ॥ अग्निना वरुणादाहृतानां रथादीनां अर्जुनाय दानम् ॥ ५ ॥ श्रीकृष्णाय सुदर्शनकौमोदक्योश्च दानम् ॥ ५ ॥ अग्नेः खाण्डवदाहारम्भः ॥ ६ ॥

---

वैशम्पायनः—

विहारदेशं सम्प्राप्य नानाद्रुममनुत्तमम् ।
गृहैरुच्चावचैर्युक्तं पुरन्दरपुरोपमम् ॥ १

भक्ष्यैर्भोज्यैश्च पेयैश्च रसवद्भिर्महाधनैः ।
माल्यैश्च विविधैर्युक्तं तथा वार्ष्णेयपाण्डवौ ॥ २

[1]आविविशतुरापूर्णं रत्नैरुच्चावचैश्शुभैः ।
यथोपजोषं सर्वश्च जनश्चिक्रीड भारत ॥ ३

वने काश्चिज्जले काश्चित् काश्चिद्वेश्मसु चाङ्गनाः ।
यथादेशं यथाप्रीति चिक्रीडुः कृष्णपार्थयोः ॥ ४

वासुदेवप्रिया नित्यं सत्यभामा च भामिनी ।
द्रौपदी च सुभद्रा च वासांस्याभरणानि च ॥ ५

प्रायच्छतां महार्हाणि स्त्रीणां तास्स्म मदोत्कटाः ।

---

1. क-ख-ग-घ-ङ—आविवेशतुः

काश्चित् प्रहृष्टा ननृतुश् चुक्रुशुश्च तथाऽपराः ॥ ६
जहसुश्च परा नार्यः पपुश्चान्या वरासवम् ।
रुरुधुश्चापरास्तत्र प्रजघ्नुश्च परस्परम् ॥ ७
मन्त्रयामासुरन्याश्च रहस्यानि परस्परम् ।
केचिन्माल्यानि चिन्वन्तीः केचिन्माल्यानि दध्रिरे ॥ ८
वेणुवीणामृदङ्गानां मनोज्ञानां च सर्वशः ।
शब्देन पूर्यते हर्म्यं तद्वनं सुमहर्द्धिमत् ॥ ९
[1]तस्मिंस्तदा वर्तमाने कुरुदाशार्हनन्दनौ ।
समीपं जग्मतुः कश्चिद् उद्देशं सुमनोहरम् ॥ १०
तत्र गत्वा महात्मानौ कृष्णौ परपुरञ्जयौ ।
महार्हासनयो राजंस् ततस्तौ सन्निषीदतुः ॥ ११
तत्र पूर्वव्यतीतानि विक्रान्तानीतराणि च ।
बहूनि कथयित्वा तौ रेमाते जिष्णुमाधवौ ॥ १२
तत्रोपविष्टौ मुदितौ नाकपृष्ठेऽश्विनाविव ।
अभ्यागच्छत्तदा विप्रो वासुदेवधनञ्जयौ ॥ १३
बृहत्सालप्रतीकाशः प्रतप्तकनकप्रभः ।
[2]हरिपिङ्गोज्ज्वलश्मश्रुः प्रमाणायामतस्समः ॥ १४

1. क-ग-ङ—तस्मादावर्तमानौ तु
2. क-ख-ग-घ-ङ—हरिपिङ्गो हरिश्मश्रुः

तरुणादित्यसङ्काशश् [1]चीरवासा जटाधरः ।
पद्मपत्राननः पिङ्गस् तेजसा प्रज्वलन्निव ॥ १५

जगाम तौ कृष्णपार्थौ दिधक्षुः खाण्डवं वनम् ॥ १५॥
उपसृष्टं तु तं कृष्णो भ्राजमानं द्विजोत्तमम् ।

दृष्ट्वा जगाम मनसा पावकोऽयमिति प्रभुः ॥ १६॥
अर्जुनो वासुदेवश्च तूर्णमुत्पत्य तस्थतुः* ॥ १७

सोऽब्रवीदर्जुनं चैव वासुदेवं च सात्वतम् ।
लोकप्रवीरौ तिष्ठन्तौ खाण्डवस्य समीपतः ॥ १८

ब्राह्मणः—

ब्राह्मणो बहुभोक्ताऽस्मि भुञ्जेऽपरिमितं सदा ।
भिक्षे वार्ष्णेयपार्थौ वाम् एकां तृप्तिं प्रयच्छतम् ॥ १९

वैशम्पायनः—

एवमुक्तौ तमब्रूतां ततस्तौ कृष्णपाण्डवौ ।
केनान्नेन भवांस्तृप्येत् तस्यान्नस्य यतावहे ॥ २०

एवमुक्तस्स भगवान् अब्रवीत्तावुभौ ततः ।
भाषमाणौ तदा वीरौ किमन्नं क्रियतामिति ॥ २१

ब्राह्मणः—

नाहमन्नं बुभुक्षे वै पावकं मां निबोधतम् ।

---

1. कृष्णवासाः
*अ-क-ख-ग-ङ—कोशेषु अत्रैवाध्यायसमाप्तिर्दृश्यते

यदन्नमनुरूपं मे तद्युवां संप्रयच्छतम् ॥ २२

इदमिन्द्रस्सदा दावं खाण्डवं परिरक्षति ।
न च शक्नोम्यहं दग्धुं रक्ष्यमाणं महात्मना ॥ २३

वसत्यत्र सखा तस्य तक्षकः पन्नगस्सदा ।
सगणस्तत्कृते दावं परिरक्षति वज्रभृत् ॥ २४

तत्र भूतान्यनेकानि रक्ष्यन्तेऽस्य प्रसङ्गतः ।
तं निर्दग्धुं न शक्नोमि दावं शक्रस्य तेजसा ॥ २५

स मां प्रज्वलितं दृष्ट्वा मेघैरद्भिः प्रवर्षति ।
अतो दग्धुं न शक्नोमि दिधक्षुर्दावमीप्सितम् ॥ २६

स युवाभ्यां सहायाभ्याम् अस्त्रविद्भ्यां समागतः ।
दहेयं खाण्डवं दावम् एतदन्नं वृतं मया ॥ २७

युवां ह्युदकधारास्ता भूतानि च समन्ततः ।
उत्तमास्त्रविदौ सम्यक् सर्वतो वारयिष्यथः ॥ २८

*जनमेजयः—

किमर्थं भगवानग्निः खाण्डवं दग्धुमिच्छति ।
रक्ष्यमाणं महेन्द्रेण नानासत्त्वसमायुतम् ॥ २९

---

* अष्टाविंशश्लोकात् परं सार्धाष्टनवतितमश्लोकपर्यन्तमुपवर्णितं श्वेतक्युपाख्यानं अ-ख-घ—कोशेषु नोपलभ्यते; तथाऽपि, क-ग-ङ—कोशेषु पूर्वोक्तोपाख्यानान्तर्गतश्लोका विच्छिन्ना एव कतिचन दृश्यन्ते; अतः मद्रपुरराजकीयप्राच्यपुस्तकभाण्डागारस्थविशालार्हतालपत्रकोशादुद्धृत्य उपाख्यानमिदं यथावन्मुद्रितम् ॥

(Madras Catalogue D. No. 1918.)

न ह्येतत्कारणं ब्रह्मन्नल्पं संप्रतिभाति मे ।
यद्ददाह सुसंक्रुद्धः खाण्डवं हव्यवाहनः ॥ ३०

एतद्विस्तरशो ब्रह्मन् श्रोतुमिच्छामि तत्त्वतः ।
खाण्डवस्य पुरा दाहो यथा समभवन्मुने ॥ ३१

वैशम्पायनः-

हन्त ते कथयिष्यामि पौराणीमृषिसंस्तुताम् ।
कथामिमां नरश्रेष्ठ खाण्डवस्य विनाशनीम् ॥ ३२

पौराणश्श्रूयते तात राजा हरिहयोपमः ।
श्वेतकिर्नाम विख्यातो बलविक्रमसंयुतः ॥ ३३

यज्वा दानपतिर्धीमान् यथा नान्योऽस्ति कश्चन ।
ईजे च स महायज्ञैः क्रतुभिश्चाप्तदक्षिणैः ॥ ३४

तस्य नान्याऽभवद्बुद्धिर् दिवसे दिवसे नृप ।
सत्रे क्रियासमारम्भे दानेषु विविधेषु च ॥ ३५

तस्यैवं वर्तमानस्य कदाचित् कालपर्यये ।
सत्रमाहर्तुकामस्य संवत्सरशतं किल ॥ ३६
ऋत्विजो नाभ्यपद्यन्त समाहर्तुं महात्मनः ॥ ३६॥
स तु राजाऽकरोद्यत्नं महान्तं ससुहृज्जनः ॥ ३७
प्रणिपातेन सान्त्वेन दानेन च महायशाः ।
ऋत्विजोऽनुनयामास भूयो भूयस्त्वतन्द्रितः ॥ ३८

ते चास्य तममभिप्रायं न चक्रुरमितौजसः ॥ ३८॥

स चाश्रमस्थान् राजर्षिस् तानुवाच रुषाऽन्वितः ॥ ३९
यद्यहं पतितो विप्राश् शुश्रूषायां न च स्थितः ।
आशु त्याज्योऽस्मि युष्माभिर् ब्राह्मणैश्च जुगुप्सितः ॥ ४०
तन्नार्हत क्रतुश्रद्धां व्याघातयितुमुत्तमाम् ।
अस्थाने वा परित्यागं कर्तुं मे द्विजसत्तमाः ॥ ४१
प्रपन्न एव वो विप्राः प्रसादं कर्तुमर्हथ ।
सान्त्वदानादिभिर्वाक्यैस् तत्त्वतः कार्यवत्तया ॥ ४२
प्रसादयित्वा वक्ष्यामि यन्नः कार्यं द्विजोत्तमाः ॥ ४२॥
अथवाऽहं परित्यक्तो भवद्भिर्द्वेषकारणात् ।
ऋत्विजोऽन्यान् गमिष्यामि याजनार्थं द्विजोत्तमाः ॥ ४३॥
एतावदुक्त्वा वचनं विरराम स पार्थिवः ॥ ४४
यदा न शेकू राजानं याजनार्थं परन्तपाः ।
ततस्ते याजकाः क्रुद्धास् तमूचुर्नृपसत्तमम् ॥ ४५

ऋत्विजः—

तव कर्माण्यजस्रं वै वर्तन्ते पार्थिवोत्तम ।
ततो वयं परिश्रान्तास् सततं कर्मवाहिनः ॥ ४६
श्रमादस्मात् परिश्रान्तांस्त्स त्वं नस्त्यक्तुमर्हसि ॥ ४६॥
बुद्धिमोहं समास्थाय त्वरासम्भावितोऽनघ ।

गच्छ रुद्रसकाशं त्वं स हि त्वां याजयिष्यति ॥ ४७॥

वैशम्पायनः—

साधिक्षेपं वचश्श्रुत्वा सक्रुद्धश्श्वेतकिर्नृपः ।
कैलासपर्वतं गत्वा तप उग्रं समास्थितः ॥ ४८॥

आराधयन् महादेवं नियतस्संशितव्रतः ।
उपवासपरो राजन् दीर्घकालमातिष्ठत ॥ ४९॥

कदाचिद्द्वादशे काले कदाचिदपि षोडशे ।
आहारमकरोद्राजा मूलानि च फलानि च ॥ ५०॥

ऊर्ध्वबाहुस्त्वनिमिषस् तिष्ठन् स्थाणुरिवाचलः ।
षण्मासानभवद्राजा श्वेतकिस्सुसमाहितः ॥ ५१॥

तं तथा नृपशार्दूलं तप्यमानं महत्तपः ।
शङ्करः परमप्रीत्या दर्शयामास भारत ॥ ५२॥

शङ्करः—

प्रीतोऽस्मि नरशार्दूल तपसा ते परन्तप ।
वरं वृणीष्व भद्रं ते यं त्वमिच्छसि पार्थिव ॥ ५३॥

वैशम्पायनः—

एतच्छ्रुत्वा तु वचनं रुद्रस्यामिततेजसः ।
प्रणिपत्य महात्मानं राजर्षिः प्रत्यभाषत ॥ ५४॥

श्वेतकिः—

यदि मे भगवन् प्रीतस् सर्वलोकनमस्कृतः ।
स्वयं मां देवदेवेश याजयस्व सुरेश्वर ॥ ५५॥

वैशम्पायनः—

एतच्छ्रुत्वा तु वचनं राज्ञा तेन प्रभाषितम् ।

उवाच भगवान् प्रीतस् स्मितपूर्वमिदं वचः ॥ ५६॥

रुद्रः—

नास्माकमेतद्विषये वर्तते याजनं प्रति ।

त्वया च सुमहत् तप्तं तपो राजन् वरार्थिना ॥ ५७॥

याजयिष्यामि राजंस्त्वां समयेन परन्तप ॥ ५८

समा द्वादश राजेन्द्र ब्रह्मचारी समाहितः ।

सततं त्वाज्यधाराभिर् यदि तर्पयसेऽनलम् ॥ ५९

कामं प्रार्थयसे यं त्वं मत्तः प्राप्स्यसि तं नृप ॥ ५९॥

वैशम्पायनः—

एवमुक्तस्तु रुद्रेण श्वेतकिर्मनुजाधिपः ।

तथा चकार तत् सर्वं यथोक्तं शूलपाणिना ॥ ६०॥

पूर्णे तु द्वादशे वर्षे पुनरायान्महेश्वरम् ॥ ६१

दृष्ट्वैव स च राजानं शङ्करो लोकभावनः ।

उवाच परमप्रीतश् श्वेतकिं नृपसत्तमम् ॥ ६२

रुद्रः—

तोषितोऽहं नृपश्रेष्ठ त्वयेहाद्येन कर्मणा ।

याजनं ब्राह्मणानां तु विधिदृष्टं परन्तप ॥ ६३

अतोऽहं त्वां स्वयं नाद्य याजयामि परन्तप ॥ ६३॥

ममांशस्तु क्षितितले महाभागो द्विजोत्तम ।

दुर्वासा इति विख्यातस् स हि त्वां याजयिष्यति ॥ ६४॥

मन्नियोगान्महातेजास् सम्भारास्सम्भ्रियन्तु ते ॥ ६५

वैशम्पायनः—

एतच्छ्रुत्वा तु वचनं रुद्रेण समुदाहृतम् ।

स्वपुरं पुनरागम्य सम्भारान् पुनरार्जयत् ॥ ६६

ततस्सम्भृतसम्भारो भूयो रुद्रमुपागमत् ॥ ६६॥

सम्भृता मम सम्भारास् सर्वोपकरणानि च ॥ ६७

त्वत्प्रसादान्महादेव श्वो मे दीक्षा भवेदिति ॥ ६७॥

एतच्छ्रुत्वा तु वचनं तस्य राज्ञो महात्मनः ।

दुर्वाससं समाहूय रुद्रो वचनमब्रवीत् ॥ ६८॥

रुद्रः—

एष राजा महाभागश् श्वेतकिर्द्विजसत्तम ।

एनं याजय विप्रेन्द्र मन्नियोगेन भूमिपम् ॥ ६९॥

वैशम्पायनः—

बाढमित्येव वचनं रुद्रं त्वृषिरुवाच ह ॥ ७०

ततस्सत्रं समभवत् तस्य राज्ञो महात्मनः ।

यथाकामं यथोक्तञ्च सत्रं सुबहुदाक्षिणम् ॥ ७१

तस्मिन् परिसमाप्ते तु राज्ञस्सत्रे महात्मनः ।

दुर्वाससाऽभ्यनुज्ञाता विप्रतस्थुस्स्म याजकाः ॥ ७२

ये तत्र दीक्षितास्सर्वे सदस्याश्च महौजसः ॥ ७२॥

सोऽपि राजा महाभागस् स्वपुरं प्राविशत् तदा ॥ ७३

ततो भगवतो वह्नेर् विकारस्समजायत ।

तेजसा विप्रहीणश्च ग्लानिश्चैनं समाविशत् ॥ ७४

स लक्षयित्वा चात्मानं तेजोहीनं हुताशनः ।

जगाम सदनं पुण्यं ब्रह्मणो लोकपूजितम् ॥ ७५

तत्र ब्रह्माणमासीनम् इदं वचनमब्रवीत् ॥ ७५॥

अग्निः—

तेजसा विप्रहीणोऽस्मि बलेन च जगत्पते ।

इच्छेयं त्वत्प्रसादेन आत्मनः प्रकृतिं स्थिराम् ॥ ७६॥

वैशम्पायनः—

एतच्छ्रुत्वा तु वचनं भगवांत्सर्वलोककृत् ।

हव्यवाहमिदं वाक्यम् उवाच प्रहसन्निव ॥ ७७॥

ब्रह्मा—

त्वया द्वादशवर्षाणि वसोर्धाराकृतं हविः ।

उपयुक्तं महाभाग तेन त्वां ग्लानिराविशत् ॥ ७८॥

तेजसा विप्रहीणत्वात् सहसा हव्यवाहन ।

मा गमस्त्वं यथा वह्ने प्रकृतिस्थो भविष्यसि ॥ ७९॥

अरुचिं नाशयिष्ये ते समयं प्रतिपद्य तु ॥ ८०

पुरा देवनियोगेन यत् त्वया भस्मसात्कृतम् ।

आलयं देवशत्रूणां सुघोरं खाण्डवं वनम् ॥ ८१

तत्र सर्वाणि सत्त्वानि निवसन्ति विभावसो ।

तेषां त्वं मेदसा तृप्तः प्रकृतिस्थो भविष्यसि ॥ ८२

मत्प्रसादाद्रुचिस्सम्यक् त्वयि वह्ने भविष्यति ।

गच्छ शीघ्रं प्रदग्धुं त्वं ततो मोक्ष्यसि किल्बिषात् ॥ ८३

वैशम्पायनः—

एतच्छ्रुत्वा तु वचनं परमेष्ठिमुखाच्च्युतम् ।
उत्तमं जवमास्थाय प्रदुद्राव हुताशनः ॥ ८४
आगम्य खाण्डवं दावम् उत्तमं जवमास्थितः ।
सहसा प्रज्वलत्यग्निः क्रुद्धो वायुसमीरितः ॥ ८५
प्रदीप्तं खाण्डवं दृष्ट्वा ये स्युस्तत्र निवासिनः ।
परमं यत्नमातिष्ठन् पावकस्य प्रशान्तये ॥ ८६
करैस्तु करिणश्शीघ्रं जलमादाय सत्वराः ।
सिषिचुः पावकं क्रुद्धाश् शतशोऽथ सहस्रशः ॥ ८७
बहुशीर्षास्तथा नागाश् शिरोभिर्जलसन्ततिम् ।
मुमुचुः पावकाभ्याशे सत्वराः क्रोधमूर्छिताः ॥ ८८
तथैवान्यानि सत्त्वानि नानाप्रहरणोद्यमैः ।
विलयं पावकं शीघ्रम् अनयन् भरतर्षभ ॥ ८९
अनेन तु प्रकारेण भूयो भूयश्च प्रज्वलन् ।
सप्तकृत्वः प्रशमितः खाण्डवे हव्यवाहनः ॥ ९०
स तु नैराश्यमापन्नस् सदा ग्लानिसमन्वितः ।
पितामहमुपागच्छत् सङ्क्रुद्धो हव्यवाहनः ॥ ९१
तच्च सर्वं यथान्यायं ब्रह्मणे स न्यवेदयत् ।
उवाच चैनं भगवान् मुहूर्तं स विचिन्त्य तु ॥ ९२

ब्रह्मा—

उपायः परिदृष्टो मे यथा त्वं धक्ष्यसेऽनघ ।
खाण्डवं दावमद्यैव मिषतोऽस्य शचीपतेः ॥ ९३
नरनारायणौ यौ तौ पूर्वदेवौ विभावसो ।
सम्प्राप्तौ मानुषौ लोके कार्यार्थे हि दिवौकसाम् ॥ ९४
अर्जुनं वासुदेवं च यौ तौ लोकोऽभिमन्यते ।
तावेतौ सहितावेहि खाण्डवस्य समीपतः ॥ ९५
तौ त्वं याचस्व साहाय्ये दाहार्थे खाण्डवस्य च ।
ततो धक्ष्यसि तं दावं रक्षितं त्रिदशैरपि ॥ ९६
तौ तु सत्त्वानि सर्वाणि यत्नतो वारयिष्यतः ।
देवराजं च सहितौ तत्र मे नास्ति संशयः ॥ ९७

वैशम्पायनः—

एतच्छ्रुत्वा तु वचनं त्वरितो हव्यवाहनः ।
कृष्णपार्थावुपागम्य यमर्थं प्रत्यभाषत ॥ ९८
तं ते कथितवानस्मि पूर्वमेव नृपोत्तम ॥ ९८॥
तच्छ्रुत्वा वचनं त्वग्नेर् बीभत्सुर्जातवेदसम् ।
दिधक्षुं खाण्डवं दावम् अकामस्य शतक्रतोः ॥ ९९॥

अर्जुनः—

उत्तमास्त्राणि मे सन्ति दिव्यानि च बहूनि च ।
यैरहं शक्नुयां योद्धुम् अपि वज्रधरान् बहून् ॥ १००॥

धनुर्मे नास्ति भगवन् बाहुवीर्येण सम्मितम् । *
कुर्वतस्समरे यत्नं वेगं यद्विषहेत वै ॥ १०१॥

शरैस्त्वदर्थे बहुभिर् अक्षयैः क्षिप्रमस्यतः ।
न हि वोढुं रथश्शक्तश् शरान् मम यथेप्सितान् ॥ १०२॥

अश्वांश्च दिव्यानिच्छेयं पाण्डुरान् वातरंहसः ।
रथं च मेघनिर्घोषं सूर्यप्रतिमतेजसम् ॥ १०३॥

तथा कृष्णस्य वीर्येण नायुधं विद्यते समम् ।
येन नागान् पिशाचांश्च निहन्यान्माधवो रणे ॥ १०४॥

उपायं कर्मणस्सिद्धौ भगवन् वक्तुमर्हसि ।
निवारयेयं येनेन्द्रं वर्षमाणं महाशनिम् ॥ १०५॥

पौरुषेण तु यत् कार्यं तत् कर्ताऽहं स्म पावक ।
करणानि समर्थानि भगवन् दातुमर्हसि* ॥ १०६॥

वैशम्पायनः—

एवमुक्तस्स भगवान् धूमकेतुर्हुताशनः ।
चिन्तयामास वरुणं लोकपालं दिदृक्षया ॥ १०७॥

[1]आदित्यमुदके देवं निवसन्तं जलेश्वरम् ॥ १०८

स च सञ्चिन्तितं ज्ञात्वा दर्शयामास पावकम् ।
तमब्रवीद्धूमकेतुः प्रतिपूज्य जलेश्वरम् ॥ १०९

---

* अ-क-ख-ग-ङ—कोशेषु अत्रैवाध्यायसमाप्तिर्दृश्यते।
1. ख—श्वेतकुण्डलिनं देवं सर्वाभरणभूषितम् ।

चतुर्थं लोकपालानां रक्षितारं महेश्वरम् ॥ १०९॥

अग्निः—

[1]सोमेन राज्ञा यद्दत्तं धनुश्चैवेषुधी च ये ।

तत् प्रयच्छोभयं शीघ्रं त्वमस्मै सव्यसाचिने ॥ ११०॥

दिव्यैरश्वैस्समायुक्तं रथं च कपिलक्षणम् ।

कार्यं च सुमहत् पार्थो गाण्डीवेन करिष्यति ॥ १११॥

चक्रेण वासुदेवश्च तन्मदर्थे प्रदीयताम् ॥ ११२

वैशम्पायनः—

ददानीत्येव वरुणः पावकं प्रत्यभाषत ॥ ११२॥

तदद्भुतं महावीर्यं यशःकीर्तिविवर्धनम् ।

सर्वशस्त्रैरनाधृष्यं सर्वशस्त्रप्रमाथिनम् ॥ ११३॥

सर्वायुधमहामात्रं परसैन्यप्रधर्षणम् ।

एकं शतसहस्रेण सम्मितं राष्ट्रवर्धनम् ॥ ११४॥

चित्रमुच्चावचैर्वर्णैश् शोभितं श्लक्ष्णमव्रणम् ।

देवगन्धर्वऋषिभिः पूजितं शाश्वतीस्समाः ॥ ११५॥

प्रादाच्चैव धनूरत्नम् अक्षय्यौ च महेषुधी ॥ ११६

रथं च दिव्याश्वयुजं कपिप्रवरलक्षणम् ।

उपेतं कामगैरश्वैर् गान्धर्वैर्हेममालिभिः ॥ ११७

पाण्डुराभ्रप्रतीकाशैर् मनोवायुसमैर्जवे ।

सर्वोपकरणैर्युक्तम् अजय्यं देवदानवैः ॥ ११८

1. क-ग-छ—सोमेन दत्तं तु धनुस् त्वथ ते इषुधी शुभे ।

भानुमन्तं महाघोषं सर्वभूतमनोहरम् ।
ससर्ज [1]यं सुतपसा भुवने भुवनप्रभुः ॥ ११९
प्रजापतिरनिर्देश्यं यस्य रूपं रवेरिव ।
यं स्म सोमस्समारुह्य दानवानजयत् प्रभुः ॥ १२०
[2]नवमेघप्रतीकाशं ज्वलन्तमिव च श्रिया ।
[3]आश्रिता तं रथश्रेष्ठं शक्रायुधसमा बभौ ॥ १२१
तापनीया सुरुचिरा ध्वजयष्टिरनुत्तमा । १२१॥
तस्यां तु वानरो दिव्यस् सिंहलाङ्गूललक्षणः ।
[4]निर्दहन्निव तत्र [5]स्थस् संस्थितो मूर्ध्न्यशोभत ॥ १२२॥
[6]ध्वजे भूतानि तत्रासन् विविधानि महान्ति च ।
नादेन परसैन्यानां येषां संज्ञा प्रणश्यति ॥ १२३॥
स तं नानापताकाभिश् शोभितं रथसत्तमम् ।
प्रदक्षिणमुपावृत्य दैवतेभ्यः प्रणम्य च ॥ १२४॥
सन्नद्धः कवची खड्गी बद्धगोधाङ्गुलित्रवान् ।

---

1. ग-ङ—यत्स्वतपसा । घ—यं स्वतपसा भुवनैर्भुवनेश्वरम्
2. घ—सुरारियोषित्सौवर्णश्रुतिताटङ्कनाशनम् ॥ [अधिकः पाठः]
3. क-ख-ग-घ—आश्रित्य तं रथश्रेष्ठं शक्रध्वजसमं बभौ।
4. घ—यः पुरा वायुसंभूतो रक्षोगणविनाशनः ॥ [अधिकः पाठः]
5. क-ख-ग-ङ—स्थः संस्थिते मूर्ध्नि शोभते ।
घ—तम्मूर्ध्नि संस्थितो भीमो विनर्दन् बह्वशोभत ।
6. घ—हनुमान् परितस्तत्र भूतानि विविधानि च ॥

आरुरोह तदा पार्थो विमानं सुकृती यथा ॥ १२५॥
तच्च दिव्यं धनुःश्रेष्ठं ब्रह्मणा निर्मितं पुरा ।
गाण्डीवमुपसङ्गृह्य बभूव मुदितोऽर्जुनः ॥ १२६॥
हुताशनं नमस्कृत्य ततस्तदतिवीर्यवान् ।
जग्राह बलमास्थाय ज्यया च युयुजे धनुः ॥ १२७॥
मौर्व्यां तु युज्यमानायां बलिना पाण्डवेन ह ।
येऽशृण्वन् कूजितं तस्य तेषां वै व्यथितं मनः ॥ १२८॥
लब्ध्वा रथं धनुश्चैव तथाऽक्षय्ये महेषुधी ।
बभूव कल्यः कौन्तेयः प्रहृष्टस्साह्यकर्मणि ॥ १२९॥
वज्रनाभं ततश्चक्रं ददौ कृष्णाय पावकः ।
आग्नेयमस्त्रं दयितं स च कल्योऽभवत्तदा ॥ १३०॥
अब्रवीत् पावकश्चैनम् एतेन मधुसूदन ।
अमानुषानपि रणे विजेष्यसि न संशयः ॥ १३१॥
अनेन त्वं मनुष्याणां देवानामपि चाहवे ।
रक्षःपिशाचदैत्यानां नागानां चाधिकस्तथा ॥ १३२॥
भविष्यसि न सन्देहः प्रवरारिनिवारणे ॥ १३३
तवैतच्चक्रमस्त्रं यत् सुदर्शनं नाम नामतः ।
तच्चास्मिन्नर्पय विभो दैत्यघाते यथा पुरा ॥ १३४
क्षिप्तं क्षिप्तं रणे चैतत् त्वया माधव शत्रुषु ।

हत्वाऽप्रतिहतं सङ्ख्ये पाणिमेष्यति ते पुनः ॥ १३५

वरुणश्च ददौ तस्मै गदामशनिनिस्स्वनाम् ।
दैत्यान्तकरणीं घोरां नाम्ना कौमोदकीं हरेः ॥ १३६

ततः पावकमब्रूतां [1]प्रहृष्टावर्जनाच्युतौ ॥ १३६॥

अर्जुनाच्युतौ—

कृतास्त्रौ शस्त्रसम्पन्नौ रथिनौ ध्वजिनावपि ।
कल्यौ स्वो भगवन् योद्धुम् अपि सर्वैस्सुरासुरैः ॥ १३७॥

किं पुनर्वज्रिणैकेन पन्नगार्थे युयुत्सता ॥ १३८

अर्जुनः—

चक्रमस्त्रं हि वार्ष्णेयो विसृजन् युधि वीर्यवान् ।
त्रिषु लोकेषु तन्नास्ति यन्न जीयाज्जनार्दनः ॥ १३९

गाण्डीवं धनुरादाय तथाऽक्षय्ये महेषुधी ।
अहमप्युत्सहे लोकान् विजेतुं युधि पावक ॥ १४०

सर्वतः परिवार्यैनं नादेन महता प्रभो ।
कामं सम्प्रज्वलाद्यैव कल्यौ स्वस्साह्यकर्मणि ॥ १४१

यदि खाण्डवमेष्यति प्रमादात्
सगणो वा परिरक्षितुं महेन्द्रः ।
शरताडितखण्डकुण्डलानां
कदनं द्रक्ष्यति देववाहिनीनाम् ॥ १४२

---

1. क-ख-ग-ब-ङ—प्रहृष्टौ कृष्णपाण्डवौ ।

वैशम्पायनः—

एवमुक्तस्स भगवान् [1]दाशार्हेणार्जुनेन ह ।
तैजसं रूपमास्थाय दावं दग्धुं प्रचक्रमे ॥ १४३

सर्वतः परिवार्याथ सप्तार्चिर्ज्वलनस्तथा ।
ददाह खाण्डवं क्रुद्धो युगान्तमिव दर्शयन् ॥ १४४

परिगृह्य समाविष्टस् तद्वनं मनुजर्षभ ।
मेघस्तनितनिर्घोषस् सर्वभूतानि निर्दहन् ॥ १४५

दह्यतस्तस्य च बभौ रूपं दावस्य भारत ।
मेरोरिव महीध्रस्य काञ्चनस्य महाद्युतेः ॥ १४६

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्याम्
आदिपर्वणि चतुर्दशाधिकद्विशततमोऽध्यायः ॥ २१४ ॥
॥ १९ ॥ खाण्डवदाहपर्वणि द्वितीयोऽध्यायः ॥ २ ॥
[अस्मिन्नध्याये १४६ श्लोकाः]

## ॥ पञ्चदशाधिकद्विशततमोऽध्यायः ॥

खाण्डवदाहं दृष्ट्वा त्रस्तैर्देवैः प्रार्थितेनेन्द्रेण जलवर्षणम् ॥ १ ॥ इन्द्राभिवृष्टस्य जलस्यार्जुनेन निवारणम् ॥ २ ॥ पुत्रं निगीर्याकाशमुत्पतन्त्याः तक्षकभार्यायाः अर्जुनेन शिरश्छेदः ॥ ३ ॥ इन्द्रेण स्वकृतवायुवर्षमोहितादर्जुनात्तक्षकपुत्रस्याश्वसेनस्य मोचनम् ॥ ४ ॥ अर्जुनेन पावकान्मुमुक्षूणां नागादीनां मारणम् ॥ ५ ॥ इन्द्रस्य कृष्णार्जुनाभ्यां युद्धम् ॥ ६ ॥

वैशम्पायनः—

तौ रथाभ्यां सुयुक्ताभ्यां दावस्योभयतस्स्थितौ ।
दिक्षु सर्वासु भूतानां चक्राते कदनं तदा ॥ १

1. अ-क-ख-ग-ङ—सहायेना

यत्र यत्र हि दृश्यन्ते प्राणिनः खाण्डवालयाः ।
पलायन्तस्तत्र तत्र तौ वीरौ पर्यधावताम् ॥ २

छिद्रं न स्म प्रपश्यन्ति रथयोराशुविक्रमात् ।
आविद्धाविव दृश्येते रथिनौ तौ रथोत्तमे ॥ ३

खाण्डवे दह्यमाने तु भूतान्यथ सहस्रशः ।
उत्पेतुर्भैरवान्नादान् विनदन्तो दिशो दश ॥ ४

दग्धैकदेशा बहवो निष्टप्ताश्च तथाऽपरे ।
स्फुटिताक्षा विशीर्णाश्च [1]विप्लुताक्षा विचेतसः ॥ ५

समालिङ्ग्य सुतानन्ये पितॄन् भ्रातॄंस्तथाऽपरे ।
त्यक्तुं न शेकुस्स्नेहेन तत्रैव निधनं गताः ॥ ६

विकृतैर्दशनैरन्ये खमुत्पेतुस्सहस्रशः ।
तत्र तत्र विधून्वन्तः पुनरग्नौ प्रपेदिरे ॥ ७

दग्धपक्षाक्षिचरणा विवेष्टन्तो महीतले ।
तत्र तत्र प्रदृश्यन्ते विनश्यन्तश्शरीरिणः ॥ ८

जलस्थानेषु तप्तेषु क्वाथ्यमानेषु वह्निना ।
गतसत्त्वास्स्म दृश्यन्ते कूर्ममत्स्यास्सहस्रशः ॥ ९

शरीरैस्सम्प्रदीप्तैश्च देहवन्त इवाग्नयः ।
अदृश्यन्त वने तत्र प्राणिनः प्राणिसंक्षये ॥ १०

1. क-ग-ङ—विप्लुष्टाश्च विशेषतः ।

तांस्तथोत्पततः पार्थश् शरैस्सञ्छिद्य खण्डशः ।
दीप्यमाने ततः प्रास्यत् प्रहसन् कृष्णवर्त्मनि ॥ ११
ते शराचितसर्वाङ्गा निनदन्तो महारवान् ।
ऊर्ध्वमुत्पत्य वेगेन निपेतुः पावके पुनः ॥ १२
शरैरभ्याहतानां च दह्यतां च वनौकसाम् ।
विरावश्श्रूयते हि स्म समुद्रस्येव मथ्यतः ॥ १३
वह्नेश्चापि प्रवृद्धस्य समुत्पेतुर्महार्चिषः ।
जनयामासुरुद्वेगं सुमहान्तं दिवौकसाम् ॥ १४
ततो जग्मुर्महात्मानस् सर्वे एव दिवौकसः ।
शरणं देवराजं तं सहस्राक्षं पुरन्दरम् ॥ १५

देवाः—

किमिदं मानवास्सर्वे दह्यन्ते कृष्णवर्त्मना ।
कच्चिन्न संक्षयः प्राप्तो लोकानाममरेश्वर ॥ १६

1वैशम्पायनः—

तच्छ्रुत्वा वृत्रहा तेभ्यस् स्वयमेवान्ववेक्ष्य च ।
खाण्डवस्य विमोक्षार्थं प्रययौ हरिवाहनः ॥ १७
महता मेघजालेन नानारूपेण वज्रभृत् ।
आकाशं तमसाऽऽस्तीर्य प्रववर्ष सुरेश्वरः ॥ १८

1. अ—इत्याक्रोशमकुर्वंस्ते लोकास्सर्वे भयान्विताः । [अधिकः पाठः]

ततोऽक्षमात्रा विसृजन् धाराश्शतसहस्रशः ।
अभ्यवर्षत् सहस्राक्षः पावकं खाण्डवं प्रति ॥ १९

असम्प्राप्तास्तु ता धारास् तेजसा जातवेदसः ।
ख एव समशुष्यन्त न काश्चित् पावकं गताः ॥ २०

ततो नमुचिहा क्रुद्धो भृशमर्चिष्मतस्तदा ।
[1]पुनरेवातिवर्षेण ववर्ष बलवृत्रहा ॥ २१

[2]सन्तताभिश्च धाराभिश् चण्डधूमसमाकुलम् ।
बभूव तद्वनं घोरं स्तनयित्नुसुघोषवत्* ॥ २२

तस्याभिवर्षतो धाराः खाण्डवं प्रत्यवारयत् ।
शरवर्षेण बीभत्सुर् उत्तमास्त्राणि दर्शयन् ॥ २३

शरैस्समन्ततस्सर्वं खाण्डवं चापि पाण्डवः ।
छादयामास तद्वर्षम् [3]अपकृत्य ततो वनात् ॥ २४

न च स्म किञ्चिच्छक्नोति भूतं निश्चरितुं ततः ।
सञ्छाद्यमाने गगने अस्यता सव्यसाचिना ॥ २५

---

1. घ—पुनरेवाभ्यवर्षन्तम् अम्भः प्रविविशुस्सृजन् ।
2. घ—अर्चिर्धाराभिसम्बन्धं सघोषस्स्तनयित्नुवत् ।
* अ-क-ख-ग-ङ—कोशेषु अत्रैवाध्यायसमाप्तिर्दृश्यते ।
3. क-ग—अपाकृष्य ततो घनात् ।　घ—अपकृष्याततो वनात् ।
ङ—अपकृष्य ततो घनात्

तक्षकस्तु न तत्रासीन्नागराजो महाबलः ।
दह्यमाने तु तस्मिंस्तु कुरुक्षेत्रे तदाऽभवत् ॥ २६

अश्वसेनोऽभवत्तत्र तक्षकस्य सुतो बली ।
स यत्नमकरोत्तीव्रं मोक्षार्थे हव्यवाहनात् ॥ २७

न शशाक स निर्गन्तुं कौन्तेयशरपीडितः ।
[1]मोक्षयामास तं माता निगीर्य भुजगात्मजा ॥ २८

तस्य पूर्वं शिरो ग्रस्तं पुच्छमस्य निगीर्यते ।
ऊर्ध्वमभ्यगमत् सा तु पन्नगी पुत्र[2]गृध्नुनी ॥ २९

तस्यास्तीक्ष्णेन भल्लेन पृथुधारेण पाण्डवः ।
शिरश्चिच्छेद गच्छन्त्यास् तामपश्यत् सुरेश्वरः ॥ ३०

तं मुमोचयिषुर्वज्री वातवर्षेण पाण्डवम् ।
मोहयामास तत्काले ह्यश्वसेनस्त्वमुच्यत ॥ ३१

तां च मायां तदा दृष्ट्वा घोरां नागेन वञ्चितः ।
द्विधा त्रिधा च चिच्छेद खगतां भरतर्षभ ॥ ३२

शशाप तु ततः क्रुद्धो बीभत्सुर्जिह्मगामिनम् ।
पावको वासुदेवश्चाप्यप्रतिष्ठो भविष्यसि ॥ ३३

ततो जिष्णुस्सहस्राक्षं खं विततैषुभिश्शतैः ।

---

1. क-ग-ङ—मोचयामास
2. क-ख-ग—गृद्धिनी । च-ङ—गर्धिनी

योधयामास सङ्क्रुद्धो वज्रिनां तामनुस्मरन् ॥ ३४
देवराजोऽपि तं दृष्ट्वा संरब्धमिति फल्गुनम् ।
[1]दिव्यास्त्रमसृजद्दीप्तं विततानाकुलं नभः ॥ ३५
[2]ततो वायुर्महाघोरः क्षोभयामास सागरान् ।
वियत्स्थो जनयन् मेघान् जलधारामुचोऽतुलान् ॥ ३६
तद्विघातार्थमसृजद् अर्जुनोऽप्यस्त्रमद्भुतम् ।
वायव्यमेवाभिमन्त्र्य अस्त्रं प्रति विशारदः ॥ ३७
तेनेन्द्राशनिमेघानां वीर्यौजस्तद्विनाशितम् ॥ ३७॥
[3]जलधाराश्च ताश्शोषं जग्मुर्नेशुश्च विद्युतः ।
क्षणेन चाभवद्व्योम सम्प्रशान्तरजस्तमः ॥ ३८॥
[4]शुभशीतानिलगुणं प्रकृतिस्थार्कमण्डलम् ॥ ३९
निष्प्रतीकारहृष्टश्च हुतभुग्विविधाकृतिः ।
प्रजज्वालाथ सोऽर्चिष्मान् स्वनादैः पूरयन् दिशः ॥ ४०
कृष्णाभ्यां रक्षितं दृष्ट्वा तं च दावमहङ्कृताः ।

---

1. क-ग—दिव्यमस्त्रं च विसृजन् वितत्वानाकुलं नभः ।
वायव्यमस्त्रं विसृजन् विततानाखिलं नभः ॥
2. क-ग—सुभद्रजवमादीप्तं तदा वायुं विसर्ज ह ।　[अधिकः पाठः]
3. घ—जलधाराश्च्युतास्तेन जग्मुश्शोषं सविद्युतः ।
4. क-ग-ङ—सुखी शीतानिलगुणः प्रसन्नश्चार्कमण्डलः ।
ख-घ—सुखशीतानिलगुणं

समुत्पेतुरथाकाशं सुपर्णाद्याः पतत्रिणः ॥ ४१
गरुडा वज्रसदृशैः पक्षतुण्डनखैस्तथा ।
प्रहर्तुकामास्सम्पेतुर् आकाशात् कृष्णपाण्डवौ ॥ ४२
तथैवोरगसङ्घाश्च पाण्डवस्य समीपतः ।
उत्सृजन्तो विषं घोरं विपेरुर्ज्वलिताननाः ॥ ४३
[1]तांश्चकर्त शरैः पार्थस् सरोषान् दृश्य खेचरान् ।
विविशुश्चापि तं दीप्तं देहाभावाय पावकम् ॥ ४४
ततस्सुरास्सगन्धर्वा यक्षराक्षसपन्नगाः ।
उत्पेतुर्नादमतुलम् उत्सृजन्तो रणार्थिनः ॥ ४५
अयःकणकचक्रासिमुसलोद्यतपाणयः ।
कृष्णपार्थौ जिघांसन्तः क्रोधसम्मूर्छितौजसः ॥ ४६
तेषामपि प्रहरतां शस्त्रवर्षं च मुञ्चताम् ।
प्रममाथोत्तमाङ्गानि बीभत्सुर्निशितैश्शरैः ॥ ४७
कृष्णश्च सुमहातेजाश् चक्रेणारिविघातिना ।
दैत्यदानवसङ्घानां चकार कदनं महत् ॥ ४८
अपरे तु शरैर्विद्धाश् चक्रवेगेरितास्तथा ।
वेलामिव समासाद्य व्यवेष्टन्त महौजसः ॥ ४९
ततश्शक्रोऽतिसङ्क्रुद्धस् त्रिदशानां महेश्वरः ।

---

1. क-ग-ङ—तांश्चार्कसदृशैरश्वैस् सरोषान् दृश्य खेचरान् ।

पाण्डुरं गजमास्थाय तावुभौ समुपाद्रवत् ॥ ५०

अशनिं गृह्य तरसा वज्रं चोद्यम्य चाहवे ।
निहतेति च तौ प्राह सुराञ्छत्रुनिषूदनः ॥ ५१

ततस्समुद्यतां दृष्ट्वा देवेन्द्रेण महाशनिम् ।
जगृहुस्सर्वशस्त्राणि स्वानि स्वानि ततस्तथा ॥ ५२

कालदण्डं यमो राजन् गदां चैव धनेश्वरः ।
[1]पाशांश्च तत्र वरुणस् त्रिशूलं च तथा शिवः ॥ ५३

[2]स्कन्दश्शक्तिं समादाय तस्थौ मेरुरिवाचलः ।
ओषधीर्दीप्यमानाश्च जगृहातेऽश्विनावपि ॥ ५४

जगृहे च धनुर्धाता मुसलं तु जयस्तथा ।
[3]पर्वतं चापि जग्राह क्रुद्धस्त्वष्टा महाबलः ॥ ५५

अंशस्तु शक्तिं जग्राह मृत्युर्देवः परश्वधम् ।
प्रगृह्य परिघं घोरं विचचारार्यमाऽपि च ॥ ५६

मित्रश्च क्षुरपर्यन्तं चक्रं गृह्य व्यवस्थितः ।
पूषा भगश्च सङ्क्रुद्धस् सविता च विशाम्पते ॥ ५७

आत्तकार्मुकनिस्त्रिंशाः कृष्णपार्थावभिद्रवन् ।

---

1. ध—च—पाशी पाशं त्रिशूलं च तथेशानस्तनूनपात् ।
2. ध—शक्तिं खड्गं यातुराजस् समीरोऽङ्कुशमेव च ।
3. ध—जग्राह भूधरं त्वष्टा क्रुद्धोऽयोधीन्महाबलः ।

रुद्राश्च वसवश्चैव मरुतश्च महाबलाः ॥ ५८

विश्वे देवास्तथा साध्या दीप्यमानास्स्वतेजसा ॥ ५८॥

एते चान्ये च बहवो देवास्तौ पुरुषोत्तमौ ।
कृष्णपार्थौ जिघांसन्तः प्रतीयुर्विविधायुधाः ॥ ५९॥
तत्राद्भुतान्यदृश्यन्त निमित्तानि महावने ।
युगान्तसमरूपाणि भूतोत्पातानि भारत ॥ ६०॥
तथा दृष्ट्वा सुसंरब्धं शक्रं देवैस्सहाच्युतौ ।
अभीतौ युधि दुर्धर्षौ तस्थतुस्सज्जकार्मुकौ ॥ ६१॥
आगतांश्चैव तान् दृष्ट्वा देवानेकैकशस्तथा ।
वारयेतां सुसङ्क्रुद्धौ शरैर्वज्रोपमैस्तदा ॥ ६२॥
असकृद्भग्नसङ्कल्पास् सुराश्शरबहुक्षताः ।
भयाद्रणं परित्यज्य शक्रमेवाभिशिश्रियुः ॥ ६३॥
दृष्ट्वा निवारितान् देवान् माधवेनार्जुनेन च ।
आश्चर्यमगमंस्तत्र मुनयो [1]नभसि स्थिताः ॥ ६४॥
शक्रश्चापि तयोर्वीर्यम् उपलभ्यासकृद्रणे ।
बभूव परमप्रीतो भूयश्चैतावयोधयत् ॥ ६५॥
ततोऽश्मवर्षं सुमहद् व्यसृजत् पाकशासनः ।
भूय एव तदा वीर्यं जिज्ञासुस्सव्यसाचिनः ॥ ६६॥

1. क-ख-ग-घ-ङ—दिवि विष्ठिताः

तच्छरैरर्जुनो वर्षं प्रतिजघ्नेऽत्यमर्षणः ॥ ६७

विफलं क्रियमाणं तत् सम्प्रेक्ष्य च शतक्रतुः ।

भूयस्संवर्धयामास तद्वर्षं देवराडपि ॥ ६८

सोऽश्मवर्षं महावेगैर् इषुभिः पाकशासनिः ।

विलयं गमयामास हर्षयन् पितरं तथा ॥ ६९

समुत्क्षिप्य तु पाणिभ्यां मन्दराच्छिखरं महत् ।

सद्रुमं व्यसृजच्छक्रो जिघांसुः पाण्डुनन्दनम् ॥ ७०

ततोऽर्जुनो वेगवद्भिर् ज्वलितानलसन्निभैः ।

बाणैर्विध्वंसयामास गिरेश्शृङ्गं सहस्रशः ॥ ७१

गिरेर्विशीर्यमाणस्य तस्य रूपं तदा बभौ ।

[1]सार्कचन्द्रग्रहस्येव नभसः प्रविशीर्यतः ॥ ७२

तेन [2]चापतता देशे शैलेन महता भृशम् ।

भूय एव ततस्तत्र प्राणिनां प्राणसंक्षयः ॥ ७३

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्याम्
आदिपर्वणि पञ्चदशाधिकद्विशततमोऽध्यायः ॥ २१५ ॥

॥ १९ ॥ खाण्डवदाहपर्वणि तृतीयोऽध्यायः ॥ ३ ॥

[समाप्तं च खाण्डवदाहपर्व]

[अस्मिन्नध्याये ७३ श्लोकाः]

1. ब—सङ्कीर्णैश्शृङ्गपाषाणैः पतद्भिस्तैस्समन्ततः ।
एक एवाहतास्तत्र प्राणिनः खाण्डवालयाः ॥ [पाठान्तरम्]

2. क-ग-ङ—तेनावाकपतता ग्रावे

## ॥ षोडशाधिकद्विशततमोऽध्यायः ॥

(अथ मयदर्शनपर्व)

देवेषु पराजितेषु अशरीरवाणीश्रवणेन इन्द्रस्य निवृत्तिः ॥ १ ॥ पलायमानं मयं हन्तुमुद्युक्ते श्रीकृष्णे अर्जुनं शरणं गताय मयाय तेन अभयदानम् ॥ २ ॥ खाण्डवदाहेऽपि अश्वसेनादीनामदाहस्य वैशम्पायनेन कथनम् ॥ ३ ॥ शार्ङ्गकाणां मोचनकारणे जनमेजयेन पृष्टे वैशम्पायनेन मन्दपालोपाख्यानकथनारम्भः ॥ ४ ॥ तपसा पितृलोकं गतस्याप्यनवाप्ततपःफलस्य मन्दपालस्य देवाज्ञया प्रजोत्पादनार्थं पुनर्भूमावागमनम् ॥ ५ ॥ तत्र शार्ङ्ग्यां जरितायां पुत्रचतुष्टयोत्पादनम् ॥ ६ ॥ सपुत्रां जरितां खाण्डवे विसृज्य लपितानाम्न्याऽन्यया शार्ङ्ग्या सङ्गतस्य मन्दपालस्य विप्ररूपाग्निदर्शनम् ॥ ७ ॥ तस्य खाण्डवदिधक्षां ज्ञात्वा पुत्ररक्षणार्थं स्तुतादग्नेर्वरलाभः ॥८॥ प्रज्वलदग्निदर्शनेन जरितायाः स्वपुत्रैस्संवादः ॥ ९ ॥

---

वैशम्पायनः—

तथा शैलनिपातेन धर्षिताः खाण्डवालयाः ।
दानवा राक्षसा नागास्तरक्ष्वृक्षवनौकसः ॥ १
द्विपाः प्रभिन्नाश्शार्दूलास्सिंहाः केसरिणस्तथा ।
मृगाश्च महिषाश्चैव शतशः पक्षिणस्तथा ॥ २
समुद्विग्ना विससृपुस्तथाऽन्या भूतजातयः ॥ २॥
[1]ह्रदं समुदैक्षन्त कृष्णं चाभ्युद्यतायुधम् ॥ ३
[2]उत्पातितेन शब्देन त्रासिता इव चाभवन् ॥ ३॥

---

1. क-ग-घ-ङ—तथाऽर्जुनं समुद्वीक्ष्य
2. क-ग-घ-ङ—उत्पातनादशब्देन

स्वतेजोभास्वरं चक्रम् उत्ससर्जातिवेगवत् ।
तेनार्ता जातयः क्षुद्रास् सदानवनिशाचराः ॥ ४॥
निकृत्ताश्शतशस्सर्वा निपेतुरनले क्षणात् ॥ ५
न्यपतन् राक्षसास्तत्र कृष्णचक्रविदारिताः ।
वसारुधिरसम्पृक्तास् सन्ध्यायामिव तोयदाः ॥ ६
पिशाचान् पक्षिणो नागान् पशूंश्चैव सहस्रशः ।
निघ्नंश्चरति वार्ष्णेयः कालवत्तत्र भारत ॥ ७
[1]क्षिप्तं क्षिप्तं पुनश्चक्रं कृष्णस्यामिततेजसः ।
हत्वाऽनेकानि सत्वानि पाणिमेति पुनः पुनः ॥ ८
तथा तु निघ्नतस्तस्य सर्वभूतानि भारत ।
बभूव रूपमत्युग्रं सर्वभूतात्मनस्तदा ॥ ९
समेतानां हि देवानां दानवानां च सर्वशः ।
विजेता नाभवत् कश्चित् कृष्णपाण्डवयोर्मृधे ॥ १०
तयोर्बलात् परित्रातुं तं च दावं यदा सुराः ।
ना शक्नुवञ्छमयितुं तदाऽभूवन् पराङ्मुखाः ॥ ११
शतक्रतुस्तु सम्प्रेक्ष्य विमुखान् देवतागणान् ।
बभूवावस्थितः प्रीतः प्रशंसन् कृष्णपाण्डवौ ॥ १२
विनिवृत्तेषु देवेषु वागुवाचाशरीरिणी ।

1. अ—क्षिप्तं क्षिप्तं हि यच्चक्रम्

शतक्रतुमभिप्रेक्ष्य तदा गम्भीरनिस्स्वना ॥ १३

आकाशवाणी—

न ते सखा सन्निहितस् तक्षकः पन्नगोत्तमः ।
दाहकाले खाण्डवस्य कुरुक्षेत्रं गतो ह्यसौ ॥ १४

न च शक्यौ त्वया जेतुं युद्धेऽस्मिन् समवस्थितैः ।
वासुदेवार्जुनौ शक्र निबोधेदं वचो मम ॥ १५
नरनारायणावेतौ तावेतौ लोकभावनौ ॥ १५॥

भवानप्यभिजानाति यद्वीर्यौ यत्पराक्रमौ ॥ १६

नैतौ शक्यौ दुराधर्षौ विजेतुममरैरपि ।
अपि सर्वेषु लोकेषु पुराणावृषिसत्तमौ ॥ १७

पूजनीयतमावेतावपि सर्वैस्सुरासुरैः ।
यक्षराक्षसगन्धर्वनरकिन्नरपन्नगैः ॥ १८

तस्मादितस्सुरैस्सार्धं गन्तुमर्हसि वासव ।
[1]दिष्टं चाप्यनुपश्यैतत् खाण्डवस्य विनाशनम् ॥ १९

वैशम्पायनः—

इति वाक्यमुपश्रुत्य तथ्यमित्यमरेश्वरः ।
क्रोधामर्षौ समुत्सृज्य सम्प्रतस्थे दिवं तदा ॥ २०

सम्प्रस्थितं महात्मानं सर्वे एव दिवौकसः ।

---

1. क-ग—दृष्टं चाप्यनुपश्यैनं । ङ—दृष्टिं चाप्यनुपश्यैनं

त्वरितास्सहिता राजन् अनुजग्मुश्शतक्रतुम् ॥ २१

देवराजं तदा यान्तं सह देवैरवेक्ष्य तु ।
वासुदेवार्जुनौ वीरौ सिंहनादं विनेदतुः ॥ २२

देवराजे गते राजन् प्रहृष्टौ कृष्णपाण्डवौ ।
निर्विशङ्कौ पुनर्दावं दाहयामासतुस्तदा ॥ २३

स मारुत इवाभ्राणि नाशयित्वाऽर्जुनस्सुरान् ।
व्यधमच्छरसम्पातैः प्राणिनः खाण्डवालयान् ॥ २४

न च स्म किञ्चिच्छक्तोऽभूद् भूतं निश्चरितुं ततः ।
सञ्छाद्यमानमिषुभिर् अस्यता सव्यसाचिना ॥ २५

नाशकंश्चापि भूतानि महान्त्यपि रणेऽर्जुनम् ।
निरीक्षितुममोघेषुं करिष्यन्ति कुतो रणम् ॥ २६

शतेनैकं च विव्याध शतं चैकेन पत्रिणा ।
व्यसवस्ते पतन्त्यग्नौ साक्षात् कालहता इव ॥ २७

न चालभन्त ते शर्म रोधस्सु विषमेषु च ।
पितृदेवनिवासेषु सन्तापश्चोपजायते ॥ २८

भूतसङ्घसहस्राणि दीनाश्चक्रुर्महास्वनम् ।
रुरवो वारणाश्चैव तथैव मृगपक्षिणः ॥ २९

तेन शब्देन वित्रेसुर् गङ्गोदधिचरा झषाः ।
अप्सु न व्यचरंश्चैव तथाऽन्ये मृगपक्षिणः ॥ ३०

न त्वर्जुनं महाबाहुं नापि कृष्णं जगत्पतिम् ।
निरीक्षितुं च शक्नोति कश्चिद्योद्धुं कुतः पुनः ॥ ३१

एकायनगता येऽपि न्यविशंस्तत्र केचन ॥
राक्षसान् दानवान् नागान् जघ्ने चक्रेण तान् हरिः ॥ ३२

ते तु भिन्नशिरोदेहाश् चक्रवेगाद्गतासवः ।
पेतुरास्ये महाकायाः दीप्तस्य वसुरेतसः ॥ ३३

समांसरुधिरौघैश्च मेदौघैश्च समीरिताः ॥ ३३॥

उपर्याकाशगो वह्निर् विधूम इव दृश्यते ।
दीप्ताक्षो दीप्तजिह्वश्च दीप्तव्यात्तमहाननः ॥ ३४॥

दीप्तोर्ध्वकेशः पिङ्गाक्षो विष्वक् प्राणभृतां वरः ॥ ३५

तां स कृष्णार्जुनकृतां सुधां प्राप्य हुताशनः ।
बभूव मुदितस्सद्यः परां निर्वृतिमागतः ॥ ३६

तथाऽसुरं मयं नाम तक्षकस्य निवेशनात् ।
विप्रद्रवन्तं सहसा ददर्श मधुसूदनः ॥ ३७

तमग्निः प्रार्थयामास दिधक्षुर्वातसारथिः ।
देहवान् वै जटी भूत्वा नदन् स जलदो यथा ॥ ३८

जिघांसुर्वासुदेवस्तं चक्रमुद्यम्य विष्ठितः ॥ ३८॥

[1]स चक्रमुद्यतं दृष्ट्वा दिधक्षुं च हुताशनम् ।

---

1. ब—जिह्वया लेलिहानोऽग्निर् मयं दग्धुं तमन्वगात् । [अधिकः पाठः]

अभिधायार्जुनेत्येवं मयश्चुक्रोश पाण्डवम् ॥ ३९॥

तस्य भीतस्वनं श्रुत्वा मा भैरिति धनञ्जयः ।

प्रत्युवाच मयं पार्थो जीवयन्निव भारत ॥ ४०॥

यं न भेतव्यमित्याह मयं पार्थो दयापरः ॥ ४१

तं पार्थेनाभये दत्ते नमुचेर्भ्रातरं मयम् ।

न हन्तुमैच्छद्दाशार्हः पावको न ददाह च ॥ ४२

तद्वनं पावको धीमान् दिनानि दश पञ्च च ।

ददाह कृष्णपार्थाभ्यां रक्षितः पाकशासनात् ॥ ४३

तस्मिन् वने दह्यमाने षडग्निर्न ददाह च ।

अश्वसेनं मयं चैव चतुरश्शार्ङ्गकांस्तथा * ॥ ४४

जनमेजयः—

किमर्थं शार्ङ्गकानग्निर् न ददाह तथा गते ।

तस्मिन् वने दह्यमाने ब्रह्मन्नेतत् प्रचक्ष्व मे ॥ ४५

नागस्याप्यश्वसेनस्य दानवस्य मयस्य च ।

कारणं कीर्तितं ब्रह्मन् शार्ङ्गकाणां न कीर्तितम् ॥ ४६

तदेतदद्भुतं ब्रह्मन् शार्ङ्गकाणामनाशनम् ।

कीर्तयस्वाग्निसम्मर्दे कथं ते न विनाशिताः ॥ ४७

वैशम्पायनः—

यदर्थं शार्ङ्गकानग्निर् न ददाह तथा गते ।

---

* अ-क-ख-ग-ङ—कोशेषु अत्रैवाध्यायसमाप्तिर्दृश्यते ।

तत् ते सम्यग्यथावृत्तं कीर्तयिष्यामि भारत ॥ ४८

धर्मज्ञानां मुख्यतमस् तपस्वी संशितव्रतः ।
आसीन्महर्षिश्श्रुतवान मन्दपाल इति श्रुतः ॥ ४९

मार्गे समास्थितो राजन् ऋषीणामूर्ध्वरेतसाम् ।
स्वाध्यायवान् धर्मरतस् तपस्वी विजितेन्द्रियः ॥ ५०

स गत्वा तपसः पारं देहमुत्सृज्य भारत ।
जगाम पितृलोकाय न लेभे तत्र तत्फलम् ॥ ५१

स लोकानफलान् दृष्ट्वा तपसा निर्जितानपि ।
पप्रच्छ धर्मराजस्य समीपस्थान् दिवौकसः ॥ ५२

मन्दपालः—

किमर्थमावृता लोका मयेह तपसाऽर्जिताः ।
किं मया न कृतं तत्र यस्यैतत् कर्मणः फलम् ॥ ५३

तत्राहं तत् करिष्यामि [1]यदर्थमिदमावृतम् ।
[2]फलमेतस्य तपसः कथयध्वं दिवौकसः ॥ ५४

देवाः—

ऋणिनो मानवा ब्रह्मन् सर्वे जायन्ति तच्छृणु ॥ ५४॥

[3]ब्रह्मचर्येण यज्ञेन प्रजया च न संशयः ।

---

1. अ-ख—यदर्थमिह आवृतम् । घ—येनेमानागतः पुनः ।
2. घ—आप्नोति सकलानेतान् तत्कर्म ब्रूत मा चिरम् । [अधिकः पाठः]
3. क-ग-ङ—प्रजाभिर्ब्रह्मचर्येण स्वाध्यायतपसा तथा ।
घ—ब्रह्मचर्येण यज्ञेयं

[1]तदपाक्रियते सर्वं यज्ञेन तपसा सुतैः ॥ ५५॥

तपस्वी यज्ञकृच्चासि न च ते विद्यते प्रजा ।
त इमे प्रसवस्यार्थे तव लोकास्समावृताः ॥ ५६॥

प्रजायस्व ततो लोकान् उपभोक्तासि शाश्वतान् ॥ ५७

पुन्नाम्नो नरकात् पुत्रस्त्रायते हि पुरा मतम् ।
तस्मादपत्यं सन्ताने यतस्व ब्रह्मसत्तम ॥ ५८

वैशम्पायनः—

[2]स एवमुक्तो धर्मात्मा मन्दपालो महानृषिः ।
क नु [3]शीघ्रमपत्यं स्याद् बहुलं चेत्यचिन्तयत् ॥ ५९

स चिन्तयन्नभ्यगच्छत् प्रबलप्रसवान् खगान् ।
शार्ङ्गिकां शार्ङ्गको भूत्वा जरितां समुपेयिवान् ॥ ६०

[4]स तस्यां जनयामास चतुरश्शार्ङ्गकानृषीन् ।
तानपास्य च तत्रैव जगाम लपितां प्रति ॥ ६१

बालान् स तानण्डगतान् सह मात्रा मुनिर्वने ॥ ६१॥

तस्मिन् गते महाभागे लपितां प्रति भारत ।
अपत्यस्नेहसंविग्ना जरिता बह्वचिन्तयत् ॥ ६२॥

---

1. क-ग-ङ—तदेव क्रियते । घ—तपसा क्रियते
2. क-ग-घ-ङ—तच्छ्रुत्वा मन्दपालस्तु तेषां वाक्यं दिवौकसाम् ।
3. क-ग-ङ—शीघ्रं तु भगवान् अपत्यं दापयिष्यति ।
4. क-घ-ङ—तस्यां पुत्रानजनयच् चतुरो ब्रह्मवादिनः ।

तेन त्यक्तानसन्त्याज्यान् ऋषीनण्डगतान् वने ।
नाजहात् पुत्रकानार्ताम् जरिता खाण्डवे नृप ॥ ६३॥
बभार चैतान् सञ्जातान् स्व[1]प्रीत्या स्नेहवद्द्विज ॥ ६४
ततोऽग्निं खाण्डवं दग्धुम् आयान्तं दृष्टवानृषिः ।
मन्दपालश्चरंस्तस्मिन् वने लपितया सह ॥ ६५
तं सङ्कल्पं विदित्वाऽग्नेर् ज्ञात्वा बालांश्च पुत्रकान् ।
महर्षिर्मन्दपालोऽसौ वह्निं स्तोतुं प्रचक्रमे ॥ ६६
सोऽभितुष्टाव विप्रर्षिर् ब्राह्मणो जातवेदसम् ।
पुत्रान् प्रति वदन् भीतो लोकपालं महौजसम् ॥ ६७

मन्दपालः—

त्वमग्ने सर्वलोकानां मुखं त्वमसि हव्यवाट् ।
त्वमन्तस्सर्वभूतानां गूढश्चरसि पावक ॥ ६८
त्वामेकमाहुर्मुनयस् त्वामेवाहुस्त्रिधा पुनः ।
त्वामष्टधा कल्पयित्वा यज्ञवाटमकल्पयन् ॥ ६९
त्वया सृष्टमिदं सर्वं वदन्ति परमर्षयः ॥ ६९॥
त्वदृते हि जगत् कृत्स्नं सद्यो नश्येद्धुताशन ॥ ७०
तुभ्यं कृत्वा नमो विप्राः स्वकर्मविहितां गतिम् ।
गच्छन्ति सह पत्नीभिस् सुतैरपि च शाश्वतीम् ॥ ७१

---

1. क-ख-ग-ङ—स्वप्रीत्या स्नेहविक्लवा

त्वामग्ने जलदानाहुः खे विषक्तान् सविद्युतः ।
दहन्ति सर्वभूतानि त्वत्तो निष्क्रम्य हायनाः ॥ ७२

जातवेदस्त्वयैवेदं विश्वं सृष्टं महाद्युते ।
तवैव कर्म विहितं भूतं सर्वं चराचरम् ॥ ७३

त्वयाऽऽपो विहिताः पूर्वं त्वयि सर्वमिदं जगत् ।
त्वयि हव्यं च कव्यं च यथावत् सम्प्रतिष्ठितम् ॥ ७४

त्वमेव दहनो देव त्वं धाता त्वं बृहस्पतिः ।
त्वमश्विनौ यमौ मित्रस् सोमस्त्वमसि चानिलः ॥ ७५

[1]वैशम्पायनः—

एवं स्तुतस्तदा तेन मन्दपालेन पावकः ।
तुतोष तस्य नृपते मुनेरमिततेजसः ॥ ७६

उवाच चैनं प्रीतात्मा किमिष्टं करवाणि ते ॥ ७६॥

तमब्रवीन्मन्दपालः प्राञ्जलिर्हव्यवाहनम् ।
[2]सन्दहन् खाण्डवं दावं मम पुत्रान् विसर्जय ॥ ७७॥

तथेति तत् प्रतिश्रुत्य भगवान् हव्यवाहनः ।

---

1. ब—मम पुत्रांश्च पौत्रांश्च पत्नीं रक्ष हुताशन ।
गृहं क्षेत्रं पशून् रक्ष रक्ष मां सर्व सर्वदा ॥ [अधिकः पाठः]

2. ब—भार्यां रक्ष गृहं रक्ष पशून् मे रक्ष सर्वदा ।
तपन्तु हेतयस्सर्वे हम्यादस्मात्तवाभिभो ।
सर्वत्र सर्वदाऽस्माकं शिवो भव हुताशन ॥ [अधिकः पाठः]

खाण्डवे तेन कालेन प्रजज्वाल दिधक्षया * ॥ ७८॥

वैशम्पायनः—

ततः प्रज्वलिते शुक्रे शार्ङ्गकास्ते सुदुःखिताः ।
बभूवुः परमोद्विग्ना नागच्छन्त परायणम् ॥ ७९॥

निशम्य पुत्रकान् बालान् माता तेषां तपस्विनी ।
जरिता पुत्रशोकार्ता विललाप सुदुःखिता ॥ ८०॥

जरिता—

अयमग्निर्दहन् कक्षम् इत आयाति भीषणः ।
जगत् सन्दीपयन् भीमो मम दुःखविवर्धनः ॥ ८१॥

इमे च कर्षयन्तीह शिशवो मन्दचेतसः ।
अबर्हाश्चरणैर्हीनाः पूर्वेषां नः परायणाः ॥ ८२॥

त्रासयंश्चायमायाति लेलिहानो महीरुहान् ।
अशक्तिमत्त्वाच्च सुता न शक्ताः सरणे मम ॥ ८३॥

[1]आदाय तानशक्ताऽस्मि पुत्रांस्तरितुमन्ततः ।
न च त्यक्तुमहं शक्ता हृदयं दूयतीव मे ॥ ८४॥

कं नु त्यजाम्यहं पुत्रं कमादाय व्रजाम्यहम् ।
किं नु मे स्यात् कृतं कृत्वा मन्यध्वं पुत्रकाः कथम् ॥ ८५॥

---

* अ-क-ख-ग-छ -कोशेष्वत्रैवाध्यायसमाप्तिर्दृश्यते ।
1. क-ग-छ—आदातुं च न शक्ताऽस्मि पुत्रान् सरितुमन्ततः ।

चिन्तयानाऽपि मोक्षं वै नाधिगच्छामि किञ्चन ।
छादयित्वा हि वो गात्रैः करिष्ये मरणं सह ॥ ८६॥

जरितारौ कुलं ह्येतज् ज्येष्ठ त्वेवं प्रतिष्ठितम् ।
शारिसृक्कः प्रजायेत पितॄणां कुलवर्धनः ॥ ८७॥

स्तम्बमित्रस्तपः कुर्याद् द्रोणो ब्रह्मविदुत्तमः ॥ ८८

इत्येवमुक्त्वा प्रययौ पिता वो निर्घृणः पुरा ।
सहैव चरितुं बालैर् न शक्नोमि तपोवनात् ॥ ८९

कमुपादाय शक्येयं गन्तुं कष्टाऽऽपदुत्तमा ॥ ८९॥

वैशम्पायनः —

किं नु कृत्वा कृतं कार्यं भवेदिति च विह्वला ।
नापश्यत् स्वधिया मोक्षं स्वसुतानां तदाऽनलात् ॥ ९०॥

एवं ब्रुवन्तीं शार्ङ्गास्ते प्रत्यूचुश्च स्वमातरम् ॥ ९१

शार्ङ्गकाः —

स्नेहमुत्सृज्य मातस्त्वं पत यत्र न हव्यवाट् ॥ ९१॥

अस्मास्विह विनष्टेषु भवितारस्सुतास्तव ।
त्वयि मातर्विनष्टायां न नस्स्यात् कुलसन्ततिः ॥ ९२॥

अन्ववेक्ष्यैतदुभयं क्षेमं स्याद्यत् कुलस्य नः ।
तद्वै कर्तुं परं कामो मातरेष भवेत्तव ॥ ९३॥

मा वै कुलविनाशाय स्नेहं कार्षीस्सुतेषु ते ।
न हीदं कर्म मोघं स्याल् लोककामस्य नः पितुः ॥ ९४॥

जरिता—

इदमाखोर्बिलं भूमौ वृक्षस्यास्य समीपतः ।

तदाविशध्वं त्वरिता वह्नेरत्र [1]न नो भयम् ॥ ९५॥

ततोऽहं पांसुना च्छिद्रम् अपिधास्यामि पुत्रकाः ।

एवं प्रतिकृतं मन्ये ज्वलतः कृष्णवर्त्मनः ॥ ९६॥

तत एष्याम्यतीतेऽग्नौ विहन्तुं पांसुसञ्चयम् ।

रोचतामेष वो योगो विमोक्षाय हुताशनात् ॥ ९७॥

शार्ङ्गकाः—

अबर्हान् मांसभूतान् नः क्रव्यादाखुर्विनाशयेत् ।

पश्य मातर्भयमिदं न शक्ष्याम निषेवितुम् ॥ ९८॥

कथमग्निर्न नो हन्यात् कथमाखुर्न भक्षयेत् ।

कथं न स्यात् पिता मोघः कथं माता ध्रियेत नः ॥ ९९॥

बिल आखोर्विनाशस्स्याद् अग्नेराकाशचारिणाम् ।

अन्ववेक्ष्यैतदुभयं श्रेयान् दाहो न भक्षणम् ॥ १००॥

गर्हितं मरणं नस्स्याद् आखुना तु तदा बिले ।

शिष्टदृष्टः परित्यागश् शरीरस्य हुताशने ॥ १०१॥

अग्निदाहे तु नियतं ब्रह्मलोके ध्रुवा गतिः ॥ १०२

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्याम्
आदिपर्वणि षोडशाधिकद्विशततमोऽध्यायः ॥ २१६ ॥
॥ २० ॥ मयदर्शनपर्वणि प्रथमोऽध्यायः ॥ १ ॥
[अस्मिन्नध्याये १०२ श्लोकाः]

---

1. क-ग-घ-ङ—न वो

## ।। सप्तदशाधिकद्विशततमोऽध्यायः ।।

पुत्रैस्सह संवादानन्तरं जरितायाः स्थानान्तरगमनम् ॥ १ ॥ जरितार्यादीनां चतुर्णां शार्ङ्गकाणां परस्परं संवादः ॥ २ ॥ स्तुत्वा प्रसन्नेनाग्निना तेभ्योऽभयदानम् ॥ ३ ॥ शार्ङ्गकाणां प्रार्थनया अग्निना मार्जाराणां दाहः ॥ ४ ॥

---

जरिता—

अस्माद्बिलान्निष्पतितम् आखुं श्येनो जहार तम् ।
क्षुद्रं गृहीत्वा पादाभ्यां भयं न भविता ततः ॥ १

शार्ङ्गकाः—

[1]नापाहृतं वयं विद्मश् श्येनेनाखुं कथञ्चन ।
अन्येऽपि भवितारोऽत्र तेभ्योऽपि भयमेव नः ॥ २

संशयो वह्निरागच्छेद् दृष्टं वायोर्निवर्तनम् ।
मृत्युर्नो बिलवासिभ्यो भवेन्मातरसंशयः ॥ ३

निस्संशयात् संशयितो मृत्युर्मातर्विशिष्यते ।
चर खे त्वं यथान्यायं पुत्रानाप्स्यसि शोभनान् ॥ ४

जरिता—

अहं वै श्येनमायान्तम् अद्राक्षं बिलमन्तिकात् ।
सञ्चरन्तं समादाय जहाराखुं बिलाद्बली ॥ ५

---

1. ग-ङ—एकमेव हृतं विद्मः । च—न हृतं तं वयं

तं पतन्तमहं श्येनं त्वरिता पृष्ठमन्वगाम् ।
आशिषोऽस्य प्रयुञ्जाना हरतो मूषिकं बिलात् ॥ ६

यो नो द्वेष्टारमादाय श्येनराज प्रधावसि ।
भव त्वं दिवमास्थाय निरमित्रो हिरण्मयः ॥ ७

स यदा भक्षितस्तेन क्षुधितेन पतत्रिणा ।
तदाऽहं तमनुज्ञाप्य प्रत्युपायां पुनर्गृहम् ॥ ८

प्रविशध्वं बिलं पुत्रा विस्रब्धा नास्ति वो भयम् ।
श्येनेन मम पश्यन्त्या हृत आखुरसंशयम् ॥ ९

शार्ङ्गकाः—

न विद्महे वयं मातर् हृतमाखुमितः पुरा ।
अविज्ञाय न शक्ष्यामः प्रवेष्टुं विवरं भुवः ॥ १०

जरिता—

अहं तमभिजानामि हृतं श्येनेन मूषिकम् ।
अत एव भयं नास्ति क्रियतां वचनं मम ॥ ११

शार्ङ्गकाः—

न त्वं मिथ्योपचारेण मोक्षयेथा भयाद्धि नः ।
समाकुलेषु ज्ञानेषु न बुद्धिकृतमेव तत् ॥ १२

न चोपकृतमस्माभिर् न चास्मान् वेत्थ ये वयम् ।
पीड्यमाना [1]स्मरस्यस्मान् का सती के वयं तव ॥ १३

---

1. क-ग—भरस्य; घ—हरस्य

तरुणी दर्शनीयाऽसि समर्था भर्तुरेषणे ।
अनुगच्छस्व भर्तारं पुत्राँल्लप्स्यसि शोभने ॥ १४

वयमग्निं समाविश्य लोकान् प्राप्स्यामहे [1]शुभे ।
अथास्मान् न दहेदग्निर् [2]अम्बाऽभूः पुनरेव नः ॥ १५

वैशम्पायनः—

एवमुक्ता ततश्शार्ङ्गी पुत्रानुत्सृज्य खाण्डवे ।
जगाम त्वरिता देशं क्षेममग्नेरनाश्रयम् ॥ १६

ततस्तीक्ष्णार्चिरभ्यागाज् ज्वलितो हव्यवाहनः ।
यत्र शार्ङ्गा बभूवुस्ते मन्दपालस्य पुत्रकाः ॥ १७

[3]ततस्तं ज्वलितं दृष्ट्वा ज्वलनं ते विहङ्गमाः ।
व्यथिताः करुणा वाचश् श्रावयामासुरन्तिकात् ॥ १८
जरितारिस्ततो वाक्यं श्रावयामास पावकम्* ॥ १८॥

जरितारिः—

पुरतः कृच्छ्रकालस्य धीमाञ्जागर्ति पूरुषः ।
स कृच्छ्रकालं सम्प्रेक्ष्य व्यथां नैवैति कर्हिचित् ॥ १९॥

यस्तु कृच्छ्रमसम्प्राप्तं विश्वासान्नावबुध्यते ।
स कृच्छ्रकाले व्यथितो [4]न श्रेयो विन्दते महत् ॥ २०॥

---

1. क-ख-ग-ङ—शुभान् । घ—प्राप्स्याम शोभनान्
2. अ—रम्बायाः  3. क-ग-घ-ङ—शार्ङ्गका
* अ-क-ख-ग-ङ—कोशेषु अत्रैवाध्यायसमाप्तिर्दृश्यते ।
4. क-ग-घ-ङ—न प्रजानाति किञ्चन

शारिसृक्कः—

धीरस्त्वमसि मेधावी प्राणकृच्छ्रमिदं च नः ।
नमस्तेऽस्तु बहूनां हि भवत्येको गुणाधिकः ॥ २१॥

स्तम्बमित्रः—

ज्येष्ठस्त्राता भवति वै ज्येष्ठो मुञ्चति कृच्छ्रतः ।
ज्येष्ठश्चेन्न प्रजानाति कनीयान् किं करिष्यति ॥ २२॥

द्रोणः—

हिरण्यरेतास्त्वरितो ज्वलन्नायाति नः क्षयम् ।
सप्तजिह्वोऽनलः क्रूरो लेलिहानो विसर्पति ॥ २३॥

वैशम्पायनः

एवमुक्तो भ्रातृभिस्तु जरितारिर्विभावसुम् ।
तुष्टाव प्राञ्जलिर्भूत्वा यथा तच्छृणु पार्थिव ॥ २४॥

जरितारिः—

आत्माऽसि वायोर्ज्वलन शरीरमसि वीरुधाम् ।
योनिरापश्च ते शुक्र योनिस्त्वमसि चाम्भसः ॥ २५॥

ऊर्ध्वं चाधश्च गच्छन्ति विसर्पन्ति च शाश्वताः ।
अर्चिषस्ते महावीर्य रश्मयस्सवितुर्यथा ॥ २६॥

शारिसृक्कः—

माता प्रपन्ना पितरं [1]न विद्मः
पक्षा जाता नैव नो धूमकेतो ।

1. क-ग-छ—विपक्षा वयं कृशा भगवन् नः प्रसीद ।

न नस्त्राता विद्यते वै त्वदन्यस्
तस्मादस्मान् परिपाह्येकवीर ॥ २७॥

यदग्ने ते शिवं रूपं ये च ते सप्त हेतयः ।
तेन नः परिरक्षेथाः पीडितान् शरणैषिणः ॥ २८॥

त्वमेवैकस्तपसे जातवेदो
नान्यस्तप्ता विद्यते गोषु देव ।
ऋषीनस्मान् बालकान् पालयस्व
परेणास्मान् प्रेहि वै हव्यवाह ॥ २९॥

स्तम्बमित्रः—
सर्वमग्ने त्वमेवैकस् त्वयि सर्वमिदं जगत् ।
त्वं धारयासि भूतानि भुवनं त्वं बिभर्षि च ॥ ३०॥

द्रोणः—
त्वमग्निर्हव्यवाहस्त्वं त्वमेव परमा गतिः ।
मनीषिणस्त्वां यजन्ते बहुधा चैकधाऽपि च ॥ ३१॥

सृष्ट्वा लोकांस्त्रीनिमान् हव्यवाह
काले प्राप्ते पचसि पुनस्समिद्धः ।
त्वं सर्वस्य भुवनस्य प्रसूतिस्
त्वमेवाग्ने भवसि पुनः प्रतिष्ठा ॥ ३२॥

त्वमन्नं प्राणिनां भुङ्क्षे अन्तर्भूतो जगत्पते ।
नित्यप्रवृद्धः पचसि त्वयि सर्वं प्रतिष्ठितम् ॥ ३३॥

सूर्यो भूत्वा रश्मिभिर्जातवेदो
भूमेरम्भो भूमिजातान् रसांश्च ।
विश्वं चादाय पुनरुत्सृज्य काले
सृष्ट्वा [1]वृष्ट्या भावयसीह शुक्र ॥ ३४॥

त्वत्त एताः पुनश्शुक्र वीरुधो हरितच्छदाः ।
जायन्ते पुष्करिण्यश्च सुभद्रश्च महोदधिः ॥ ३५॥

शोभनं सद्म तिग्मांशो वरुणस्य परायणम् ।
शिवस्त्राता भवास्माकं माऽस्मानद्य विनाशय ॥ ३६॥

पिङ्गलाक्ष हयग्रीव कृष्णवर्त्मन् हुताशन ।
परेण प्रेहि मुञ्चास्मान सागरस्य गृहानिव ॥ ३७॥

वैशम्पायनः—

एवमुक्तो जातवेदा द्रोणेनाक्लिष्टकर्मणा ।
द्रोणमाह प्रतीतात्मा मन्दपालप्रतिज्ञया ॥ ३८॥

अग्निः—

ऋषिर्द्रोणस्त्वमासि वै ब्रह्मैतद्व्याहृतं त्वया ।
ईप्सितं ते करिष्यामि न च ते विद्यते भयम् ॥ ३९॥

मन्दपालेन वै यूयं मम पूर्वं निवेदिताः ।
वर्जयेः पुत्रकान् मह्यं दहन् दावमिति स्म ह ॥ ४०॥

1. क–ख–ग–घ– दृष्ट्वा भावयसीव शुक्र ।

यच्च तद्वचनं तस्य त्वया यच्चेह भाषितम् ।
[1]उभयं मे गरीयस्तु ब्रूहि किं करवाणि ते ॥ ४१॥

भृशं प्रीतोऽस्मि भद्रं ते ब्रह्मन् स्तोत्रेण ते विभो ॥ ४२

द्रोणः—

[2]इमे मार्जारकाश्शुक्र नित्यमुद्वेजयन्ति नः ।
एतान् कुरुष्व दंष्ट्रासु हव्यवाट् त्वं सबान्धवान् ॥ ४३

वैशम्पायनः—

तथा तत् कृतवानग्निर् अभ्यनुज्ञाय शार्ङ्गकान् ।
ददाह खाण्डवं [3]सर्वं समिद्धो जनमेजय ॥ ४४

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्याम्
आदिपर्वणि सप्तदशाधिकद्विशततमोऽध्यायः ॥ २१७ ॥

॥ २० ॥ मयदर्शनपर्वणि द्वितीयोऽध्यायः ॥ २ ॥

[अस्मिन्नध्याये ४४ श्लोकाः]

---

1. क-ग-ङ—उभयस्य गरीयस्त्वात् । ख-घ—उभयं मे गरीयस्त्वात्
2. क-ग-ङ—त्वमस्मान् सर्वदेवेश जातवेदो महायशाः ।
[अधिकः पाठः]
3. अ-क-ख-ग—चापि संप्रेक्ष्य

## ॥ अष्टादशाधिकद्विशततमोऽध्यायः ॥

पुत्रांश्चिन्तयन्तं मन्दपालं प्रति लपितायाः सासूयवचनम् ॥ १ ॥ अग्निशाम्यनन्तरं आत्मदिदृक्षयाऽऽगतं मन्दपालं प्रति भार्यया पुत्रैश्च उपालम्भः ॥ २ ॥ मन्दपालस्य पुत्राश्वासनपूर्वकं सर्वैस्सहान्यत्र गमनम् ॥ ३ ॥ देवगणैस्सहागतस्येन्द्रस्य कृष्णार्जुनवरदानपूर्वकं स्वलोकगमनम् ॥ ४ ॥ अग्नेः स्वस्थानगमनानन्तरं कृष्णार्जुनमयानां नदीकूल उपवेशनम् ॥

वैशम्पायनः—

मन्दपालोऽपि कौरव्य चिन्तयानस्सुतान् सदा ।
उक्तवानप्यशीतांशुं स नैव स्म न तप्यते ॥ १

स तप्यमानः पुत्रार्थे लपितामिदमब्रवीत् ॥ १॥

मन्दपालः—

कथं नु शक्ताः पतने लपिते मम पुत्रकाः ।
वर्धमाने हुतवहे वाते शीघ्रं प्रवायति ॥ २॥

असमर्था विमोक्षाय भविष्यन्ति ममात्मजाः ॥ ३

कथं नु शक्ता त्राणाय माता तेषां तपस्विनी ।
भविष्यत्यसुखाविष्टा पुत्रत्राणमपश्यती ॥ ४

कथं संक्षरणेऽशक्तान् पतने च ममात्मजान् ।
सन्तप्यमाना भीता वा गमनायाभिधावती ॥ ५

जरितारिः कथं पुत्रश्शारिसृक्कः कथं च मे ।

स्तम्बमित्रः कथं द्रोणः कथं सा च तपस्विनी ॥ ६

वैशम्पायनः—

लालप्यमानं तमृषिं मन्दपालं तथा वने ।
लपिता प्रत्युवाचेदं सासूयमिव भारत ॥ ७

लपिता—

न ते पुत्रेष्ववेक्षाऽस्ति यानृषीनुक्तवानसि ।
तेजस्विनो वीर्यवन्तो न तेषां ज्वलनाद्भयम् ॥ ८

दावाग्नेः परिदत्ताश्च त्वया हि मम सन्निधौ ।
प्रतिश्रुतं तथा तेन ज्वलनेन महात्मना ॥ ९

लोकपालोऽनृतां वाचं न च वक्ता कथञ्चन ।
[1]समर्थस्त्वं च वक्ता वै न हि ते स्वस्ति मानसम् ॥ १०

तामेव तु ममामित्रां चिन्तयन् परितप्यसे ।
ध्रुवं मयि न ते स्नेहो यथा तस्यां पुराऽभवत् ॥ ११

न हि पक्षवता भाव्यं निस्स्नेहेन सुहृज्जने ।
[2]पीड्यमान उपस्रष्टुं शक्यो नात्मा कथञ्चन ॥ १२

गच्छ त्वं जरितामेव यस्यार्थे परितप्यसे ।
चरिष्याम्यद्य चैवैका यथा कापुरुषे रता ॥ १३

---

1. अ-ख—न समर्थस्त्वया वक्ता न हि
2. ख—वध्यमान। ग—पीड्यमान उपस्रष्टं।
घ—पीड्यमान उपस्पृष्टमशक्तानां

मन्दपालः—

नाहमेवं चरे लोके यथा त्वमभिमन्यसे ।
अपत्यहेतोर्विचरे तच्च कृच्छ्रतरं मम ॥ १४

भूतं हित्वा भविष्यं वै यो रमेत स मन्दधीः ।
अवमत्य तथा लोकान् यथेच्छसि तथा कुरु ॥ १५

एष हि ज्वलमानोऽग्निर् लेलिहानो महीरुहान् ।
द्वेष्यं हि हृदि सन्तापं जनयत्यशिवं मम ॥ १६

वैशम्पायनः—

तस्माद्देशादतिक्रान्ते ज्वलने जरिता ततः ।
जगाम पुत्रकानेव जरिता पुत्रगृद्धिनी ॥ १७

सुतान् कुशलिनस्सर्वान् विमुक्ताञ्जातवेदसः ।
रोरूयमाणान् कृपणान् सुतान् दृष्टवती वने ॥ १८

न श्रद्धेयं ततस्तेषां दर्शनं सा पुनः पुनः ।
एकैकशश्च पुत्रांस्तान् क्रोशमानाऽन्वपद्यत ॥ १९
जरिता तु परिष्वज्य पुत्रस्नेहाच्चुचुम्ब ह ॥ १९॥

ततोऽभ्यगच्छत् सहसा मन्दपालोऽपि भारत ।
अथ ते सर्व एवैनं नाभ्यनन्दन्त वै सुताः ॥ २०॥

गुरुत्वान्मन्दपालस्य तपसश्च विशेषतः ।
अभिवादयामहे सर्वे जातपक्षाः प्रसादतः ॥ २१॥

एवमुक्तवतां तेषां प्रतिनन्द्य महातपाः ।
परिष्वज्य च तान् सर्वान् मूर्ध्न्युपाघ्राय बालकान् ॥ २२॥
पुत्रस्पर्शात्तु या प्रीतिस् तामवाप स गौतमः ॥ २३
लालप्यमानमेकैकं जरितां च पुनः पुनः ।
उच्यते वचनं किञ्चिन्न स्म तैस्साध्वसाधु वा ॥ २४

मन्दपालः—

ज्येष्ठस्सुतस्ते कतमस् तदनुज्येष्ठ एव च ।
मध्यमः कतमः पुत्रः कनीयान् कतमश्च ते ॥ २५
एवं ब्रुवन्तं दुःखार्तं किं मां न प्रतिभाषसे ।
कृतवानस्मि हव्याशे नैव शान्तिमितो लभे । २६

वैशम्पायनः—

[1]एवं जरां तु तां पत्नीं मन्दपालस्तदाऽस्पृशत् ॥ २६॥

जरिता—

किं ते ज्येष्ठसुते कार्यं किमनन्तरजेन वा ।
किं च ते मध्यमे कार्यं किं कनिष्ठे तपस्विनि ॥ २७॥
यत्र मां सर्वतो हीनाम् उत्सृज्यासि गतः पुरा ।
तामेव लपितां गच्छ तरुणीं चारुहासिनीम् ॥ २८॥

---

1. क-ग—एवमुक्त्वा।
घ—भर्त्रैवमुक्ता सा पत्नी मन्दपालं तदाऽब्रवीत्।

मन्दपालः—

न स्त्रीणां विद्यते किञ्चिद् अन्यत्र पुरुषान्तरात् ।
सापत्नकमृते लोके भवितव्यं हि तत्तथा ॥ २९॥

सुव्रता चापि कल्याणी सर्वलोकपरिश्रुता ।
अरुन्धती पर्यशङ्कद् वसिष्ठमृषिसत्तमम् ॥ ३०॥

विशुद्धभावमत्यन्तं सदा प्रियहिते रतम् ।
सप्तर्षिमध्यगं विप्रम् अवमेने च तं मुनिम् ॥ ३१॥

अपध्याता च सा तेन [1]ततो धूम्रारुणाकृतिः ।
[2]लक्ष्यालक्ष्या नाभिरूपा निमित्तमिव लक्ष्यते ॥ ३२॥

अपत्यहेतोस्सम्प्राप्तं तथा त्वमपि मामिह ।
इष्टमेवं [3]गतं हित्वा सा तथैव च वर्तसे ॥ ३३॥

न वै भार्येति विश्वासः कार्यः पुंसा कथञ्चन ।
न हि कार्यमनुध्याति भार्या पुत्रवती सती ॥ ३४॥

वैशम्पायनः—

ततस्ते सर्व एवैनं पुत्रास्सम्यगुपासते ।
स च तानात्मजान् राजन्नाश्वासयितुमारभत्* ॥ ३५॥

---

1. ट-ग-ब-ड—धूम्रारुणसमप्रभा
2. क-ग-ड—लक्ष्यालक्ष्या नाति ।
   ब—लक्ष्यालक्ष्याधिरूढा च तदाप्रभृति लक्ष्यते
3. क-ग-ब-ड—गते हित्वा सा तथा त्वं च वर्तसे ।
* अ-क-ख-ग-ड—कोशेष्वेतावाध्यायसमाप्तिर्दृश्यते ।

मन्दपालः—

युष्माकं परिरक्षार्थं विज्ञप्तो ज्वलनो मया ।
अग्निना च तथेत्येवं पूर्वमेव प्रतिश्रुतम् ॥ ३६॥

अग्नेर्वचनमादाय मातुर्धर्मज्ञतां च वः ।
युष्माकं च परं वीर्यं पूर्वं नाहमिहागतः ॥ ३७॥

न सन्तापो हि वः कार्यः पुत्रका मरणं प्रति ।
ऋषीन् वेद हुताशोऽपि ब्रह्मैतद्विदितं च वः ॥ ३८॥

वैशम्पायनः—

एवमाश्वास्य पुत्रांश्च भार्यामादाय भारत ।
मन्दपालस्ततो देशाद् अन्यं देशं जगाम ह ॥ ३९॥

भगवानपि तिग्मांशुस् समिद्धः खाण्डवं वनम् ।
ददाह परमप्रीतः कृष्णाभ्यां परिरक्षितः ॥ ४०॥

वसामेदोवहाः कुल्यास् तत्र पीत्वा च पावकः ।
अगच्छत् परमां तृप्तिं दर्शयामास चार्जुनम् ॥ ४१॥

ततोऽन्तरिक्षाद्भगवान् अवतीर्य शतक्रतुः ।
मरुत्परिवृतः पार्थं माधवं चाब्रवीदिदम् ॥ ४२॥

इन्द्रः—

कृतं युवाभ्यां कर्मेदम् अमरैरपि दुष्करम् ।
वरान् वृणीतं तुष्टोऽस्मि दुर्लभानप्यमानुषान् ॥ ४३॥

वैशम्पायनः—

पार्थस्तु वरयामास शक्रादस्त्राणि सर्वशः ।
गृहीतुं तच्च शक्रस्तु ददौ कालं च कर्म च ॥ ४४॥

इन्द्रः—

यदा प्रसन्नो भगवान् महादेवो भविष्यति ।
तदा तुभ्यं प्रदास्यामि पाण्डवास्त्राणि सर्वशः ॥ ४५॥

अहमेव च तं कालं वेत्स्यामि कुरुनन्दन ।
तपसा महता चापि तव दास्यामि तानहम् ॥ ४६॥

आग्नेयानि च सर्वाणि वायव्यानि धनञ्जय ।
मदीयानि च सर्वाणि ग्रहीष्यसि धनञ्जय ॥ ४७॥

वैशम्पायनः—

वासुदेवोऽपि पार्थेन प्रीतिं वव्रे च शाश्वतीम् ।
[1]ददौ च तस्मै देवेन्द्रस् तं वरं प्रीतिमांस्तदा ॥ ४८॥

पावकश्चापि तं दावं दग्ध्वा समृगपक्षिगम् ।
अहोभिरेकविंशद्भिर् विरराम सुतर्पितः ॥ ४९॥

जग्ध्वा मांसानि पीत्वा च मेदांसि रुधिराणि च ।
युक्तः परमया प्रीत्या तावुवाच विशाम्पते ॥ ५०॥

अग्निः—

युवाभ्यां पुरुषाग्र्याभ्यां तर्पितोऽस्मि यथासुखम् ।

---

1. क-ग-घ—दत्त्वा ताभ्यां वरं प्रीतस् सह देवैर्मरुत्पतिः ।
हुताशनमनुज्ञाप्य जगाम त्रिदिवं पुनः ॥ [अधिकः पाठः]

अनुजानामि वां वीरौ भविता यत्र वाञ्छितम् ॥ ५१॥

एवं तौ समनुज्ञातौ पावकेन महात्मना ।
अर्जुनो वासुदेवश्च दानवश्च मयस्तथा ॥ ५२॥

परिक्रम्य ततस्सर्वे त्रयोऽपि भरतर्षभ ।
रमणीये नदीकूले सहितास्समुपाविशन् ॥ ५३॥

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्याम्
आदिपर्वणि अष्टादशाधिकद्विशततमोऽध्यायः ॥ २१८ ॥

॥ २० ॥ मयदर्शनपर्वणि तृतीयोऽध्यायः ॥ ३ ॥

[अस्मिन्नध्याये ५३॥ श्लोकाः]

॥ समाप्तं मयदर्शनपर्व ॥

---

आदिपर्वणि ९९८४॥ श्लोकाः—२३३ वाक्यानि ॥

---

## ॥ आदिपर्व च समाप्तम् ॥

---

इतः परं सभापर्व भविष्यति तस्यायमाद्यः श्लोकः ।

जनमेजयः—

अर्जुनो जयतां श्रेष्ठो मोक्षयित्वा मयं तदा ।
किं चकार महातेजास् तन्मे ब्रूहि द्विजोत्तम ॥

॥ शुभमस्तु ॥

---

॥ श्रीरस्तु ॥

# महाभारतस्य आदिपर्वद्वितीयसम्पुटस्थानां विषयाणाम

# अक्षरमातृकाक्रमेण सूचनम्

अध्यायः-पुटम्

# अक्षरमातृकाक्रमेण विषयसूचनम्

अध्यायः—पृष्ठम्

अध्यायः-पृष्ठम्

॥ श्रीरस्तु ॥

महाभारतस्य आदिपर्वद्वितीयसम्पुटस्थानाम्

## ॥ अशुद्धानां शोधनम् ॥

| पृष्ठ | पङ्क्ति | अशुद्धम् | शोधनम् |
|---|---|---|---|
| ९१९ | २ | अष्टत्रिंश | अष्टात्रिंश |
| ९२५ | ५ | युमाभि | युष्माभि |
| ९२७ | १० | अष्टत्रिंश | अष्टात्रिंश |
| ९३४ | १० | विन्दतेऽनिशम् | विन्दते दिशम् |
| ९३५ | ५ | बोद्व्यं | बोद्धव्यं |
| | २१ | बोद्धृव्यं | बोद्धव्यं |
| ९३६ | ३ | वारणवतगा | वारणावतगा |
| | ८ | विविशुवारणा | विविशुर्वारणा |
| ९४० | १४ | कश्चित्क्वचित् | कश्चित्कश्चित् |
| | १६ | पलायतां | पलायताम् |
| ९४७ | १ | महाबलै | महाबलौ |
| | ४ | शतहस्त्रि | शतसहस्त्रि |
| ९५० | १३ | मन्दिरम् | मन्दरम् ? |
| ९५२ | १५ | क्व गता | गता क्व |

| पृष्ठ | पंक्ति | अशुद्धम् | शोधनम् |
|---|---|---|---|
| ९५८ | ८ | क्षत्रघ्नं | कक्षघ्नं ? |
| | | महाकुक्षी | महाकुक्षि ? |
| | १६ | स्नह | स्नेह |
| ९६६ | ३ | प्राश्यन्ती | प्राश्नन्ती? |
| | ११ | शततभो | शततमो |
| ९८० | १९ | निर्गछ | निर्गच्छ |
| ९९८ | १५ | फलहारास् | फलाहारास् |
| १०१६ | १६ | [3]क-ग-घ— | [1]-क-ग-घ— |
| १०२५ | ४ | न्यायामु | न्यायमु |
| १०२६ | ६ | शतसास्रि | शतसहस्रि |
| १०३२ | ९ | च्छत्रुं | च्छत्रुम् |
| १०४० | १८ | पातयासास | पातयामास |
| १०४३ | २ | हीयमानं तु तदा | हीयमानं तदा |
| १०४४ | ३ | मानीय | मागत्य |
| १०४५ | १७ | पादै | पादौ |
| १०४६ | २१ | पुरोकसः | पुरौकसः |
| १०५१ | ९ | शोषितम् | शोषितम् |
| १०५२ | १३ | ब्राह्मणः | — |
| १०५६ | १९ | यातो | याजो |
| १०६४ | १७ | भैक्ष | भैक्षं |
| | १८ | एतछ्रुत्वा | एतच्छ्रुत्वा |
| १०६९ | १७ | घवै | चैव |

| पृष्ठम् | पङ्क्तिः | अशुद्धम् | शोधनम् |
|---|---|---|---|
| १०७० | १५ | समाप्ति | समाप्तिः |
| १०७२ | १५ | नाभिजानीथा | नाभिजानीथ |
| १०७७ | ७ | शतं | शतम् |
| १०८२ | ८ | कन्याया तपत्या | कन्यायास्तपत्या |
| | १९ | श्रुतीवद्भ्यः | श्रुतविद्भ्यः |
| १०९६ | १४ | ततोऽऽर्जेन | ततोऽर्जुन |
| १११० | ७ | राज्य | मार्ग |
| ,, | ,, | विश्वामित्रवसिष्ठयोः | भूपवासिष्ठयोस्तदा |
| १११४ | ७ | शतसस्त्रिकायां | शतसहस्त्रिकायां |
| ११३२ | ५ | विनाशितः | विनाशिताः |
| | ६ | सरोषेण | स रोषेण |
| ११४९ | १८ | दीच्यः | दीच्याः |
| ११५१ | १८ | ताम्रोज्वल | ताम्राज्ज्वल |
| ११५२ | १ | पुथु | पृथु |
| ११६१ | ५ | वैशम्पायनः | — |
| ११६६ | २ | कर्ण | शल्य |
| ११८२ | १५ | नित्रेदयाश्चचक्रु | निवेदयाञ्चक्रु |
| ११८६ | ५ | परीक्ष्णार्थे | परीक्षणार्थे |
| १२१६ | २० | प्रावेपमानो | प्रवेपमानो |
| १२१८ | १६ | भाया | भार्या |
| १२२३ | २ | व्यासः | — |
| १२२४ | १५ | द्रोपर्दी | द्रौप्रदीं |

| पृष्ठ | पङ्क्ति | अशुद्धम् | शोधनम् |
|---|---|---|---|
| १२२६ | १७ | बुहुभि | बहुभि |
| १२३८ | १६ | शतसस्रिकायां | शतसहस्रिकायां |
| १२६३ | १० | इति श्रुतः | इति विश्रुतः |
| १२६४ | १५ | मन्यस | मन्यसे |
| १२७१ | १५ | श्वैतान् ततस्तान् | श्वैतांस्ततस्तान् |
| १२७३ | ६ | दायादान् त्वरन्ते | दायादांस्त्वरन्ते |
| १२८२ | ८ | सम्मन्य | सम्मन्त्र्य |
| १२८३ | ९ | बन्धश्च | बन्धं च |
| १३०२ | १८ | चुकुतु | चक्रतु |
| १३३४ | ८ | स्वेषां | स्वासां |
| | १३ | बुभ्रवाहन | बभ्रुवाहन |
| १३४६ | ५ | अभ्यनुज्ञातवां त्सर्वान् | अभ्यनुज्ञातवानत्सर्वान् |
| १३८४ | ३ | यादवनां | यादवानां |
| | २० | सात्वतांत्सदा | सात्वतानत्सदा |
| १३८७ | ७ | रश्मींत्संगृह्य | रश्मीनत्संगृह्य |
| १३८९ | १५ | गोपालांत्स | गोपालानत्स |
| १३९१ | १६ | प्रमुखां त्सर्वान् | प्रमुखानत्सर्वान |
| १३९८ | ९ | संच्छन्नांत्सर्वे | सच्छन्नानत्सर्वे |
| १३९९ | १९ | पादग्राहनीकम् | पादग्रहानीकम् |
| १४१४ | १८ | श्रान्तांत्स | श्रान्तानत्स |
| १४१८ | ९ | भगवांत्सर्वे | भगवानत्सर्वे |
| १४३४ | १७ | व्यसृजन् | व्यसृजत् |

Printed by V. Ramaswamy Sastrulu & Sons, at 'Vavilla' Press Madras.